आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

---

ग्रन्थाङ्कः ८१

# नारायणकृतवृत्तिसमेतमाश्वलायनश्रौतसूत्रम् ।

एतत्पुस्तकं

कै० वे० शा० रा० गोखले इत्युपाह्वैर्गणेशशास्त्रिभिः संशोधितम् ।

तच्च

## हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

---

शालिवाहनशकाब्दाः १८३९

खिस्ताब्दाः १९१७

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः । )

मूल्यमेकादशाणकसहितं रूपकचतुष्टयम् ( ४।११ )

# आनन्दाश्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| ग्रन्थनाम । | मूल्यम् । रु० | आ० |
|---|---|---|
| १ गणेशाथर्वशीर्षम्—सभाष्यम् । .... .... .... .... | ० | ६ |
| २ रुद्राध्यायः—सायणाचार्य-भट्टभास्करप्रणीतभाष्याभ्यां संवलितः । | १ | ६ |
| ३ पुरुषसूक्तम्—सायणभाष्योपेतम् । ... .... ... | ० | ४ |
| ४ योगरत्नाकरः—वैद्यकशास्त्रीयग्रन्थोऽतीव पुरातनः । .... | ९ | ० |
| ५ ईशावास्योपनिषत्—सटीकशांकरभाष्याद्युपेता । ... .... | ० | १४ |
| ६ केनोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... ... | १ | ० |
| ७ काठकोपनिषत्—टीकाद्वयसहितशांकरभाष्योपेता । .... .... | १ | ४ |
| ८ प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... ... .... | १ | ० |
| ९ मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... ... | ० | १० |
| १० माण्डूक्योपनिषत्—सटीकशांकरभाष्य-गौडपादीयकारिकाद्युपेता । | २ | ९ |
| ११ ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... .... | १ | ४ |
| १२ तैत्तिरीयोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... .... | १ | १२ |
| १३ तैत्तिरीयोपनिषद्भाष्यवार्तिकम्—सुरेश्वराचार्यकृतं सटीकम् । | २ | २ |
| १४ छान्दोग्योपनिषत्—सटीकशांकरभाष्योपेता । .... .... | ९ | ० |
| १५ बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । .... ... | ८ | ० |
| १६ बृहदारण्यकोपनिषद्भाष्यवार्तिकम्—भागत्रयात्मकम् । .... | २२ | ८ |
| १७ श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । .... .... | २ | ४ |
| १८ सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतमुपपुराणम् । .... .... | ३ | ० |
| १९ रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः, वैद्यकग्रन्थः । | ३ | १२ |
| २० जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । .... | १२ | ० |
| २२ श्रीशंकरदिग्विजयः—विद्यारण्यकृतः, टीकाटिप्पणीभ्यां सहितः । | ६ | ० |
| २३ वैयासकन्यायमालाविस्तरः—भारतीतीर्थमुनिप्रणीतः । ... | १ | १२ |
| २४ जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः । ... ... | ८ | ० |
| २५ सूतसंहिता—माधवकृतटीकोपेता भागत्रयात्मिका । ... ... | १ | ८ |
| २६ हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । .... ... ... | ७ | ६ |
| २७ वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः सटीकः । वैद्यकग्रन्थः । ... | ६ | १२ |

| | | | |
|---|---|---|---|
| २८ | **ब्रह्मपुराणम्**—श्रीमद्व्यासविरचितम्। प्रथमं महापुराणम्। .... | ६ | ७ |
| २९ | **उपनिषदां समुच्चयः**—श्रीनारायणशंकरानन्दकृतदीपिकासहितः। | ६ | १२ |
| ३० | **नृसिंहपूर्वोत्तरतापनीयोपनिषत्**—भाष्याद्युपेता। .... ... | १ | १२ |
| ३१ | **बृहदारण्यकोपनिषन्मिताक्षरा**—श्रीनित्यानन्दमुनिविरचिता। | २ | १२ |
| ३२ | **ऐतरेयब्राह्मणम्**—सायणभाष्यसमेतं भागद्वयात्मकम्। .... | १० | १० |
| ३३ | **धन्वन्तरीयनिघण्टुः**—धन्वन्तरिविरचितः। वैद्यकग्रन्थः। .... | ६ | ४ |
| ३४ | **श्रीमद्भगवद्गीता**—शांकरभाष्योपेता। ... .... ... | २ | ० |
| ३४ | **श्रीमद्भगवद्गीता**—सटीकशांकरभाष्योपेता। .... .... | ६ | ४ |
| ३५ | **संगीतरत्नाकरः**—शार्ङ्गदेवकृतः सटीको द्विभागः। गानशास्त्रम्। | १० | ४ |
| ३६ | **तैत्तिरीयारण्यकम्**—सायणभाष्यसमेतं भागद्वयात्मकम्। .... | ९ | १ |
| ३७ | **तैत्तिरीयब्राह्मणम्**—सायणभाष्यसमेतं भागत्रयात्मकम्। .... | १४ | ८ |
| ३८ | **ऐतरेयारण्यकम्**—सायणभाष्यसहितम्। .... ... .... | ३ | ० |
| ३९ | **संस्काररत्नमाला**—गोपीनाथभट्टविरचिता भागद्वयात्मिका। | १२ | ८ |
| ४० | **संध्याभाष्यसमुच्चयः**—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः। | २ | ० |
| ४१ | **अग्निपुराणम्**—महर्षिव्यासप्रणीतम्। महापुराणम्। .... | ५ | ४ |
| ४२ | **तैत्तिरीयसंहिता**—सायणभाष्यसमेता भागनवकात्मिका। .... | ४८ | १० |
| ४३ | **वैयाकरणसिद्धान्तकारिकाः**—भट्टोजिदीक्षितकृताः सटीकाः। | ० | १२ |
| ४४ | **श्रीमद्भगवद्गीता**—पैशाचभाष्यसमेता। ... .... .... | १ | ८ |
| ४५ | **श्रीमद्भगवद्गीता**—मधुसूदन-श्रीधरकृतटीकोपेता। ... ... | ५ | ४ |
| ४६ | **याज्ञवल्क्यस्मृतिः**—अपरार्ककृतटीकासहिता भागद्वयात्मिका। | १३ | ० |
| ४७ | **पातञ्जलयोगसूत्राणि**—भाष्य-वृत्तिभ्यां समेतानि। ... | ३ | ० |
| ४८ | **स्मृतीनां समुच्चयः**—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः। | ५ | ० |
| ४९ | **वायुपुराणम्**—महर्षिव्यासप्रणीतम्। महापुराणम्। .... | ४ | १२ |
| ५० | **यतीन्द्रमतदीपिका**—श्रीनिवासदासकृता। प्रकाशटीकोपेता। | १ | ४ |
| ५१ | **सर्वदर्शनसंग्रहः**—माधवाचार्यप्रणीतः। ... ... .... | २ | ० |
| ५२ | **श्रीमद्गणेशगीता**—नीलकण्ठकृतटीकोपेता .... .... .... | २ | ० |
| ५३ | **श्रौतसूत्रम्**—सत्याषाढविरचितं भागनवकात्मकम्। .... | २४ | ५ |
| ५४ | **मत्स्यपुराणम्**—श्रीमद्द्वैपायनमुनिप्रणीतम्। महापुराणम्। | ६ | ० |
| ५५ | **पुरुषार्थचिन्तामणिः**—आठवले इत्युपाह्वविष्णुभट्टकृतः। ... | ४ | ० |
| ५६ | **नित्याषोडशिकार्णवः**—भास्कररायोन्नीतटीकासहितः। .... | ३ | ८ |
| ५७ | **आचारभूषणम्**—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम्। | ४ | ६ |

| | | | |
|---|---|---|---|
| ५८ | आचारेन्दुः—माटे इत्युपाह्वत्र्यम्बकविरचितः । .... ... | ४ | ० |
| ५९ | श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता । .... .... | २ | ० |
| ६० | यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । .... ... .... | १ | १२ |
| ६१ | गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । .... .... | २ | ८ |
| ६२ | ईशकेनकठप्रश्नमुण्डमाण्डक्यानन्दवल्लीभृगूपनिषदः—सटीकाः | २ | ८ |
| ६३ | छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । .... | ३ | १२ |
| ६४ | बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ | शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । .... | १ | ४ |
| ६६ | काव्यप्रकाशः—उद्योतयुतप्रदीपसहितः । ... .... ... | ६ | ४ |
| ६७ | ब्रह्मसूत्राणि—दीपिकासमेतानि । .... ... ... | ४ | ८ |
| ६८ | बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... .... | १ | १२ |
| ६९ | ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० | स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । .... .... ... | १ | १० |
| ७१ | बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । ... | १० | १२ |
| ७२ | परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । .... | २ | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिःश्रीमच्छंकराचार्यविरचिता । .... ... | १ | ८ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । .... ... | १ | ० |
| ७५ | ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । .... | ४ | ४ |
| ७६ | ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । .... | १ | ० |
| ७७ | वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । .... | २ | ६ |
| ७८ | त्रिस्थलीसेतुः—नारायणभट्टविरचितः । .... .... .... | ३ | १२ |
| ७९ | छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । .... ... | २ | ० |
| ८० | वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । .... ... | ० | ८ |
| ८१ | आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ | ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । .... .... ... | २ | ७ |
| ८३ | संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ | अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... .... | २ | ० |
| ८५ | ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । .... | ३ | १९ |
| ८६ | विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका श्रीवामनशास्त्रिभिः कृता । .... .... | २ | १४ |
| ८८ | निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । द्वयात्मकभागम् । .... | १६ | ४ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।



ग्रन्थाङ्कः ८१

# नारायणकृतवृत्तिसमेतमाश्वलायनश्रौतसूत्रम् ।



एतत्पुस्तकं
कै० वे० शा० रा० गोखले इत्युपाह्वैर्गणेशशास्त्रिभिः संशोधितम् ।

तच्च
हरि नारायण आपटे
इत्येतैः
पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।



शालिवाहनशकाब्दाः १८३९
खिस्ताब्दाः १९१७

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )

मूल्यमेकादशाणकसहितं रूपकचतुष्टयम् ( ४।११ )

# आदर्शपुस्तकोल्लेखपत्रिका ।

अस्याऽऽश्वलायनश्रौतसूत्रस्य पुस्तकानि यैः परहितैकपरतया प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते—

(क.) इति संज्ञितम्—आनन्दाश्रमस्थम् । अस्य लेखनकालः शके १७३२ प्रमोदसंवत्सरः ।

(ख.) इति संज्ञितम्—वे० शा० रा० सातारा ग्रामवासी बाळाचार्य गजेन्द्रगडकर इत्येतेषाम् । पूर्वषट्कम् ।

(ग.) इति संज्ञितम्—साताराग्रामस्थ वे० शा० रा० वासुदेवशास्त्री अभ्यंकर इत्येतेषाम् । अस्य लेखनकालः शके १७०९ प्लवंगनामसंवत्सरः ।

(घ.) इति संज्ञितम्—पुण्यपत्तननिवासिनां वे० शा० रा० विश्वनाथ गंगाधर दातार इत्येतेषाम् । अस्य लेखनकालः शके १६६८ क्षयनामसंवत्सरः ।

(ङ.) इति संज्ञितम्—आनन्दाश्रमस्थम् ।

(च.) इति संज्ञितम्—वे० शा० रा० गोडबोले गणेशशास्त्री इत्येतेषाम् । अस्य लेखनकालः मुद्रितं सन १८६६ ।

(छ.) इति संज्ञितम्—मूलमानन्दाश्रमस्थम् ।

(ज.) इति संज्ञितम्—मूलम् । वे० शा० रा० भिकाजी लक्ष्मण पाध्ये इत्येतेषाम् ।

(झ.) इति संज्ञितम्—वे० रा० अनन्त बाळकृष्ण सभे इत्येतेषाम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

नारायणकृतवृत्तिसमेतम्

# आश्वलायनश्रौतसूत्रम् ।

---

श्रीमदाश्वलायनाचार्याय नमः ।

प्रज्ञानानन्दमूर्तिः सकलदिगतिगः सर्वदा सन्ननन्यः
सर्वस्मात्स्वप्रकाशः स्थिरचरनिलयः प्रत्यगात्मा सदैव[1] ॥
श्रौतस्मार्तक्रियात्मा श्रुतिमननिदिध्यासवैराग्यलभ्यः
स ब्रह्मा विष्णुरीशः सकलमपि जगत्सर्वदाऽव्यादसौ नः[2] ॥ १ ॥
गुणदोषविनिर्मुक्तं स्वप्रकाशमनाकुलम् ।
गम्भीरबोधमानन्दं नमामि ब्रह्म शाश्वतम् ॥ २ ॥
आश्वलायनसूत्रस्य भाष्यं भगवता कृतम् ।
देवस्वामिसमाख्येन विस्तीर्णं सदनाकुलम् ॥ ३ ॥
तत्प्रसादान्मयेदानीं क्रियते वृत्तिरीदृशी ।
नारायणेन गार्ग्येण नरसिंहस्य सूनुना ॥ ४ ॥

**अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः ।**

लोके यानि प्रत्याम्नायं प्रयोगशास्त्राणि स्मर्यन्ते तान्यनुष्ठानोपयुक्ततया[3]ऽध्ययनविध्याक्षिप्तत्वात्प्रत्याम्नायमङ्गत्वं प्रतिपन्नानि । तत्राङ्गाङ्गिनोरनुष्ठानकृतमानन्तर्यमथशब्दो द्योतयति । एतस्येतिशब्दो निवित्प्रैषपुरोरुक्कुन्तापवालखिल्यमहानाम्न्यैतरेयब्राह्मणसहितस्य शाकलस्य बाष्कलस्य चाऽऽम्नायद्वयस्यैतदाश्वलायनसूत्रं नाम प्रयोगशास्त्रमित्यध्येतृप्रसिद्ध[4]संबन्धविशेषं द्योतयति । * समाम्नायस्येत्युच्यते, एतस्यैव सम्यगभ्यासयुक्तस्येदं शास्त्रं न खिलानां सम्यगभ्यासरहितानामिति । वितता अग्नयो यस्मिन्निति श्रौतं कर्म+जातमग्निहोत्रादि वितानशब्देनोच्यते । समाम्नायस्य वितान इति विशेषणाच्छ्रौतेष्वेव खिलरहि-

---

* अत्रेयं कपुस्तकस्था टिप्पनी—गवादिदेवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते । समाङ्पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः । समभ्यस्यते मर्यादयाऽयमिति समाम्नायः । इति निरुक्तभाष्ये । + क. क्रियासामान्यम् ।

---

१ ख. ग. सदेवः । ङ. च. झ. । सदैवः । २ ख. झ. °नः । प्राह्णेपरागनि° । ३ क. ग. घ. ङ. च. °ष्ठानौपयिकत° । ४ ङ. च. सिद्धं सं° ।

तत्त्वं गार्ह्येषु सखिलत्वमेवेति ज्ञायते । योगापत्तिः प्रयोगापत्तिः प्रयोगपरिणतिः प्रयोगस्वरूपमित्यर्थः । तां वक्ष्याम इति ब्रुवन्निदमेव शास्त्रप्रतिपाद्यमिति दर्शयति । तेन च्छन्दोगप्रत्ययप्राप्तस्य तृचादेः स्तोत्रियत्वादिकार्यसंबन्ध एवात्र विहितत्वेन ग्रहीतव्यो न तृचादेः स्वरूपमपि तत्प्रत्ययमेवेति प्रयोग एव शास्त्रस्य व्यापारो न तृचादेः प्रयोज्यस्वरूपेऽपीति । एतदुक्तं भवति—अध्ययनविधित एवोक्तलक्षणसमाम्नायमधिगम्यानन्तरं श्रौते कर्मण्येतादृक्समाम्नायविहितप्रयोगज्ञानायेदमपि शास्त्रमधिगन्तव्यमिति ।

श्रौतेषु कर्मस्वेतादृक्समाम्नायविहितां[1] प्रयोगापत्तिं वक्ष्याम इत्युक्तम् । इदानीं तेष्वाहिताग्नेरेवाधिकार इत्याह—

**अग्न्याधेयप्रभृतीन्याह वैतानिकानि ।**

अग्न्याधेयं प्रभृतिरादिरुपक्रमो येषां तान्यग्न्याधेयप्रभृतीन्यग्निहोत्रादीनि कर्माण्याधानं कृत्वैव कर्तव्यानीत्यर्थः । तत्र हेतुमाह—वैतानिकानीति । वितानेषु भवानि वैतानिकानि वितानसाध्यानीत्यर्थः । वितानशब्दोऽस्मिन्सूत्रे *भावसाधनोऽग्नीनां विस्तारवाची पूर्वस्मिंस्त्वधिकरणसाधनोऽग्निहोत्रादिकर्मवचनः । एतदुक्तं भवति—गार्हपत्यादिभिरग्निभिः साध्यानि श्रौतानि कर्माणि, अग्नयस्त्वाधानसाध्यास्तस्मादाधानप्रभृतित्वं सिद्धम् । श्रौतानां कर्मणां बहुवचनं सर्वश्रौतपरिग्रहार्थम् । सर्वाणि श्रौतान्याधानादूर्ध्वमेव कर्तव्यानि न किंचिदपि श्रौतमाधानादर्वागिति । अनेन प्रकारेणाऽऽधानस्य कर्मार्थत्वनिराकरणेनाग्न्यर्थत्वमर्थात्साधितं भवति । तद्यदि[2] कर्मार्थं स्यात्प्रतिकर्म क्रियेत । तत्र कस्यचित्परस्तादपि स्यात् । यस्य परस्तादाधानं स्यात्तस्याग्न्याधेयप्रभृतित्वं विहन्येत । आधानस्याग्न्यर्थत्वे च नायं दोषः । अतो बहुवचनेनाऽऽधानस्याग्न्यर्थत्वं साधितं भवति । तस्माद्+नाहिताग्नेः ×क्षामवत्यादयो न भवन्ति । ÷अवकीर्णिना[3] पश्वाद्यर्थं चाऽऽधानं न कर्तव्यं[4] भवति[5] । आहेत्यनेन सर्वमिदं शास्त्रं श्रुतिमूलमिति दर्शयति । तेनास्मिञ्शास्त्रे यददृष्टमूलं तदाम्नायान्तरमूलमिति साधितं भवति । अस्मिंस्तु शास्त्रेऽनिबद्धस्य स्वाम्नाये[6] दृश्यमानस्य श्रुतित एव प्रयोगसिद्धिर्भवति श्रुतेः स्वातन्त्र्यसंकीर्तनादिति ।

आधानस्य प्रथमानुष्ठेयत्वात्प्रथमं तदेव वक्तव्यमित्यत आह—

**दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राऽऽम्नातत्वात् ।**

---

* वितन्यन्त इति वितानाः । + ङ. चरवः । × छ इष्टयः । ÷ क. ब्रह्मचर्यव्रतभ्रष्टेन वर्णिना । ङ.—यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेतेति च ।

---

१ च. हितानां प्र° । २ ख. ग. झ. °द्दि हि क° । ३ ङ. झ. °र्णिप° । ४ घ. ङ. °व्यं साधितं भ° । ५ ग. झ. °ति न परस्तात् । आ° । ६ ङ. °येऽदृ° ।

दर्शपूर्णमासशब्दौ यथासंख्येन सूर्याचन्द्रमसोरत्यन्तसंनिकृष्टविप्रकृष्टदेशस्थिति[१]क्षणवचनौ तद्योगादहोरात्रवचनौ तद्योगादेव कर्मवचनौ । अत्र तु कर्मवचनौ । पश्चात्प्रयो[२]ज्योऽपि दर्शशब्दोऽल्पाच्तरत्वात्पूर्वं निपात्यते । तुशब्दो विशेषद्योतकः । तन्त्रमङ्गसंहतिर्विध्यन्त इत्यर्थः । स चावस्थानादिः संस्थाजपान्तः । प्रधानस्य तन्त्रणात्तन्त्रमित्युच्यते । तच्च दर्शपूर्णमासयोरेवाऽऽम्नातं नान्यास्विष्टिषु । अतस्तत्सापेक्षत्वादन्यासां ताविव पूर्वं व्याख्यातव्यौ स्याताम् । एतदुक्तं भवति—आधानस्य प्रथमं प्रयोज्यत्वात्तस्मिन्नेव प्रथमं व्याख्यातव्ये सति तत्साध्यस्य गार्हपत्यादेः पवमानेष्टिसापेक्षत्वात्ता अपि तत्रैव वक्तव्याः स्युः । उक्ता अपि विध्यन्तसापेक्षत्वात्तस्य च दर्शपूर्णमासयोरेवाऽऽम्नात[३]त्वात्तद्व्याख्यानमन्तरेण तज्ज्ञानाभावात्प्रयोक्तुं नैव शक्यन्ते । अतोऽनेन विशेषेण ताविव पूर्वं व्याख्यास्यामो नाऽऽधानमिति सूत्रस्यार्थः ।

इदानीं दर्शपूर्णमासयोर्व्याख्यानमार[४]भते—

**दर्शपूर्णमासयोर्हविःष्वासन्नेषु होताऽऽमन्त्रितः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीताः ।**

दर्शपूर्णमासयोरित्यधिकारार्थमाऽध्यायपरिसमाप्तेः । वाक्येन शेषिविशेषासं[५]युक्तस्यो*भयार्थत्वाय हविरासादनमामन्त्रणं चोभयं संहतमेवैष्टिकस्य प्रवेशस्य निमित्तम् । हौत्रमित्यृग्वेदस्य समाख्या, तद्वेदविहितानां पदार्थानां कर्ता होतेत्युच्यते । प्राङ्मुखत्वं स्थानाचमनाभ्यां संबध्यते मध्यगतस्य विशेषाग्रहणात् । यज्ञोपवीतं तावदाचमनार्थतया न विधेयं स्मृतिप्राप्तत्वात् । अन्यार्थं च न संभवति संबन्धाभावात् । एकवाक्यगतत्वात्कर्त्रा संबध्यमानस्य च प्रयोजनाभावः स्मृतिप्राप्तत्वादेव । अतः स्मृतिप्राप्तमिहानूद्यते । स्मार्तानां स्नानाचमनयज्ञोपवीतादीनां श्रौतकर्माविरुद्धानामस्मिञ्शास्त्रे प्राप्तिप्रदर्शनार्थमिदमाचमनं कर्माङ्गं विधीयते शौचार्थस्य गृहप्रवेशात्प्रागेव कृतत्वात् । तदुक्तम्—

मनःप्रसादात्सत्योक्त्या तपसा स्नानकर्मणा ।
आचान्त्या चाऽऽत्मनः शुद्धिं कृत्वा कर्म समारभेत् ॥ इति ।

दक्षिणावृन्नाम यो दक्षिणं पार्श्वं मध्ये कृत्वा वर्तते स दक्षिणावृत् । विह्रियन्तेऽग्नयो यस्मिन्देशे स विहारः । उत्करो नामोत्कीर्यन्ते वेदिपांसवो यस्मिन्देशे स उत्करः ।

* ख. दर्शपूर्णमासोभयार्थत्वाय ।

१ ख. ग. घ. ङ. च. °तिलक्ष° । २ क. घ. ङ. च. झ. °योज्यवचनोऽपि । ३ ङ. °म्नानात्त° । ४ ङ. रभ्यते । ५ झ. संगत° ।

प्रणीता नामाऽऽपो मन्त्रसंस्कृता आहवनीयस्योत्तरतो निहिताः। उत्करं प्रणीताश्चान्तरेण यो देशस्तेन विहारं प्रपद्यते। एतदुक्तं भवति—स्नात्वाऽऽचम्य यज्ञोपवीती भूत्वा हविःष्वासन्नेष्वामन्त्रितश्च सन्होता प्रागुदगाहवनीयाद्यो देशस्तस्मिन्प्राङ्मुखोऽवस्थाय निष्क्रम्य प्राङ्मुख एव भूत्वाऽऽचम्य दक्षिणावृद्भूत्वा पूर्वेणोत्करमपरेण प्रणीता यो देशस्तेन विहारं प्रपद्यत इति। उत्करप्रणीताग्रहणादेव विहारप्रत्यये सिद्धे यद्विहारग्रहणं तत्सर्वः कर्ता सर्वकर्माणि विहारप्रपदनं कुर्वन्दक्षिणावृद्भूत्वैतेन पथा प्र[1]पद्यत इत्येवमर्थम्।

## इध्ममपरेणाप्रणीते।

यदनौषधिहविष्कं कर्म तदप्रणीतमिहोच्यते। हविःश्रपणार्थत्वात्प्रणीतानाम्। तस्मिन्निध्ममपरेण प्रपद्यते प्रणीतास्तत्र न सन्तीति।

## चात्वालं चात्वालवत्सु।

चात्वालो नामावटः पशुसोमादिष्वस्ति येषूत्तरवेद्यर्थं [2]मृद्यत्र खात्वा ह्रियते तद्वत्सु तेषु तमपरेण प्रपद्यते। सर्वत्रोत्करः पश्चिमावधिः।

## एतत्तीर्थमित्याचक्षते।

एतमध्वानं तीर्थमित्याचक्षते वेदविदः। आचक्षत इति ब्रुवन्वैदिकीयं संज्ञा न पारिभाषिकीति दर्शयति। उत्कराद्यभावेऽपि स देशस्तीर्थसंज्ञक एव दे[3]शलक्षणार्थत्वादुत्करादीनां ग्रहणस्येति। अतोऽग्निहोत्रादिष्वपि तेनैव पथा प्रपदनं सिद्धं भवति।

## तस्य नित्याः प्राञ्चश्चेष्टाः।

षट्सूत्राणि सर्वार्थानि तदर्थं तस्येतिविशेषणं कृतम्। * असत्यस्मिन्होतुः प्रकृतत्वात्तस्यैवेमे विधयः स्युः। अ[4]स्मिंस्तु सति संनिकृष्टविषयत्वात्सर्वेनाम्नस्तीर्थेन विहारप्रपदनार्हो यः कर्ता विहितस्तस्यैवेमे विधयो भवन्तीति तस्येतिविशेषणं कृतवानाचार्यः। नित्या इत्यनेन प्राक्चेष्टताया नित्यत्वं न विधातव्यं विहितत्वादेव + स्वरूपनित्यत्वयोरपि सिद्धत्वात्। अतस्तस्यैषोऽर्थः—तस्य बाह्यानां चेष्टानामुपरमेऽपि मनोवाक्काय×यन्त्रणादयो नित्या एवेति। प्राञ्च इतिशब्दः पूर्वदिग्वाची पुंसि बहुवचनान्तः। चेष्टा इतिक्रियावाची स्त्रियां बहुवचनान्तः। तत्र प्राञ्च इत्यत्र पुंसः प्राक्त्वेन संबन्धात्कर्तुः प्राङ्मुखत्वं विधीयते। चेष्टाशब्दगतबहुवचनेनास्य बहुत्वस्य सामानाधिकरण्यादेव चेष्टानां प्राक्त्वं विधीयते। तासाममूर्तत्वात्स्वतः प्राक्त्वासंभवात्तत्साधनेषु प्रागग्रता तासां च प्राच्येवापवर्ग इत्येवं-

* क. तच्छब्दे। + क. चेष्टा। × क. नियमनम्।

१ ख. ग. घ. ङ. च. झ. °पद्येतेत्ये°। २ मृदं खा°। ३ च. °शरक्ष°। ४ ख. ग. सत्यसं°।

विधिबलाद्भवति । एतदुक्तं भवति—यो यस्तीर्थेन विहारं प्रपन्नस्तस्य तस्य प्राङ्निष्क्रमणान्मनोवाक्काययन्त्रणादयो नित्याः स्युः, कर्तुश्च प्राङ्मुखत्वं, चेष्टानां च प्रागपवर्गता, तत्साधनानां च प्रागग्रतेति विषमसूत्रप्रणयनेन 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इत्येषा परिभाषा संगृहीता भवति ।

## अङ्कधारणा च ।

अङ्कमूरूपस्थस्तस्य करणं दक्षिणोत्तरिणोपस्थेनेति वक्ष्यमाणरूपं धारणेत्युच्यते । सा च नित्या भवेत् । उपवेशनकालादारभ्याऽऽ कर्मपरिसमाप्तेरविच्छेदेन कार्येत्यर्थः । अङ्कधारणस्योपवेशनाङ्गत्वेन प्राप्तस्यादृष्टार्थतापरिहारायैव नित्यत्वेऽपि प्राप्ते तन्नित्यतावचनं[१] 'न पत्नीसांयाजिके अनिरस्य तृणम्' इत्येवमादिषूपवेशनेषु मन्त्रनिषेधेऽपि वक्ष्यमाणस्योपवेशनप्रकारस्य नित्यत्वेन प्रापणार्थं मन्त्रविध्यसंबन्धेष्वप्यग्निहोत्रादिषु वक्ष्यमाणलक्षणस्यैवोपवेशनस्य प्रापणार्थं च ।

## यज्ञोपवीतशौचे च ।

पूर्वस्य यज्ञोपवीतग्रहणस्य स्मार्तानां प्रापणार्थत्वान्निवीतप्राचीनावीतयोर्मानुषपैतृकयोः कर्मणोः स्मार्तत्वेन प्राप्तौ सत्यां नियमार्थमिदमुच्यते । यत्र निवीतप्राचीनावीते विधीयेते तत्रैव ते भवतो न मानुषं पैतृकं वा कर्म दृष्ट्वेति तयोर्विध्यभावे यज्ञोपवीतमेवेति नियम्यते । देशस्याङ्गप्रधानार्थत्वादिडादिभक्षणादेश्चाङ्गत्वादस्य च विहारदेशे[२] प्राप्तौ सत्यामेवं शौचग्रहणेन नियम्यते—क्रत्वर्थमप्यशुचित्वसंपादि यत्तद्विहारान्निष्क्रम्य * बहिः कर्तव्यमन्तर्विहारे शुचिरेव नित्यं स्यादिति ।

## विहाराद्व्यावृत्तिश्च तत्र चेत्कर्म ।

व्यावृत्तिः पृष्ठतः कृतिः । न विहारं पृष्ठतः कुर्यात्तत्र चेद्विहारे कर्म कुर्वन्भवेत् । प्रयोगमध्येऽपि कर्म कुर्वतामेवायं नियमो नोपरतकर्मणामित्यर्थः । अतो विहारव्यावृत्तिनिषेधात् 'पश्चादस्योपविश्य पश्चात्स्वस्य धिष्ण्यस्योपविशति' इति 'पश्चादुत्तरवेदेरुपविश्याध्वर्युः' इत्येवमादौ मध्यरेखाया अपक्रम्योत्तरत उपविशेत् । चशब्दस्त्रिषु सूत्रेषु नित्यत्वानुकर्षणार्थः । तत्र चेत्कर्मेतिवचनाद्ब्रह्मणोऽप्ययं नियमो भवेत् । उत्तरसूत्राङ्गं चेदं पदत्रयम् । तेन ब्रह्मणो दक्षिणाङ्गव्यापारः सिद्धो भवति ।

## एकाङ्गवचने दक्षिणं प्रतीयात् ।

एकशब्दः कैवल्यवचनः । एकं च तदङ्गं चैकाङ्गम् । सव्यदक्षिणभेदेन द्वित्वयोगि

* ङ.—षट्त्रिंशन्मते—शणपुष्पं शाल्मलं च करनिर्मथितं दधि । बहिर्वेदि पुरोडाशं जग्ध्वा नाद्यादहर्निशम् । लौकिकाग्नौ पुरोडाशः कृतः । विरुद्धवचनगतः ।

१ ख. °नं प° । २ झ. °बद्धेष्व° । ३ ङ. झ. ख. ग. प्राप्त्यर्थ° । ४ ख. ग. ङ. झ. °देशपा° ।

यदङ्गं हस्तादि तस्य द्वित्वेन विना वचने सति दक्षिणमेवाङ्गं साधनं विद्यात् । द्वित्वयोगे *द्वाभ्यां कुर्यात् । एकवचनबहुवचने कर्त्रैकत्वबहुत्वापेक्षे । एकत्वादीनामन्यत्रोपयोगात्केवलाङ्गवचनमेव दक्षिणप्रत्ययस्य निमित्तमित्यर्थः । हस्तेन वा पादेन वेत्युदाहरणम् ।

अनादेशे । [1]

द्वित्वयोगिनोऽङ्गस्यानादेशे क्रियामात्रविधान इत्यर्थः । तत्रापि दक्षिणं विद्यात् । प्रपद्यतेऽभिक्रम्या+ङ्गुलीरङ्गुलीभिरित्युदाहरणानि । चक्षुरादेरनङ्गत्वात्तेष्वयं नियमो नास्ति । अवयवविशेषाश्रया हि शक्तयश्चक्षुराद्य उच्यन्ते नावयवा इति ।

कर्मचोदनायां होतारम् ।

कर्तृरहिते क्रियाविधौ होतारं कर्तारं विद्यात् । कर्तृसहिते स एव कर्ता भवेद्येन सहितं तत्कर्म स्यात् । कर्तृरहितोऽपि गुणविधिः सर्वार्थ एव कर्मचोदनायामिति विशेषणात् । नेदं होतुः प्रापकं किं तर्हि प्राप्तस्य नियामकं तेनेष्टिपशुसोमेभ्योऽन्यत्र न होतुरेव कर्तृत्वनियम इति ।

ददातीति यजमानम् ।

स्वत्वव्यावृत्तिपूर्वके परस्वत्वापादनपर्यन्ते ददातिविधौ यजमानं कर्तारं विद्यात् ।

जुहोति जपतीति प्रायश्चित्ते ब्रह्माणम् ।

तृतीयाध्यायगोचरे प्रायश्चित्तप्रकरणे जुहोतिजपति[2]कर्तारं ब्रह्माणं विद्यात् । जपशब्देनात्र साहचर्याज्जपादिषट्कं गृह्यते तस्मिन्प्रकरणे मुख्यस्य जपस्याभावात् । एवं च सति कर्मकरणत्वेन होममन्त्रस्यापि ग्रहणे सिद्धे य[3]ज्जुहोतिग्रहणं तज्जपग्रहणेन होममन्त्रा न गृह्यन्त इत्येवमर्थम् । तेन पित्र्यायां × जपादिलोपेऽपि होममन्त्रा न लुप्यन्ते ।

ऋचं पादग्रहणे ।

पादशब्दोऽत्र[4] मूलवाची । ÷ ऋचो मूलग्रहण ऋचं विद्यान्नान्त=मध्ययोर्ग्रहणे । 'प्र वो वाजा अभिद्यवः' 'अग्निर्नेता त्वं सोम क्रतुभिः' इत्युदाहरणा[5]नि ।

---

* ङ—युक्तयः पृथक्पाणिभ्यां तस्याध्यंसौ पाणी हत्वेत्यादौ । + ङ.—इडायां द्विदेवत्यभक्षणे । × ङ.—पित्र्यायां प्राक्प्रयाजेभ्य इत्येतत्प्रायश्चित्तं पताति तदा मा तप आहं यज्ञ इति मन्त्रद्वयस्य लोपो भवति । सहस्रशृङ्ग इति होममन्त्रस्य न लोपः । एवं सर्वत्र योजनीयम् । अयाश्चेत्यादि च सर्वप्रायश्चित्तहोमो न भवति संस्थाजपाभावात् । यत्र संस्थाजपस्तत्र प्रायश्चित्तानीतिसंबन्धकरणात् । यत्र प्रायश्चित्तहोमस्तत्र संस्थाजप इत्यर्थो न भवति । ÷ ङ. यथा पाद इति । = ङ. अन्तर्मृत्युं दधतां पर्वतेनेत्युत्तरतोऽग्निरित्यादौ ।

---

१ ख. ग. °र्थः । अत्रा° । २ ख. ग. झ. °ति तत्र क° । ३ क. ग. °यद्भिन्नं जुहो° । ४ ख. ग. °त्र ऋत्रमू° । ५ ख. ग. च. झ. °रणम् ।

**सूक्तं सूक्तादौ हीने पादे ।**

अत्र पादशब्दो गायत्र्यादीनां भागवाची । सूक्तादौ हीने पादे गृह्यमाणे सूक्तं विद्यात् । 'त्वमग्ने वसू॰' 'त्वं हि क्षैतवत्' इत्याद्युदाहरणानि ।

**अधिके तृचं सर्वत्र ।**

अधिके पादे गृह्यमाणे तृचं विद्यात्सर्वत्र सूक्तादावसूक्तादौ चेत्यर्थः । 'अग्न आ याहि वीतये गृणानः' 'ईळेऽन्यो नमस्यस्तिरः' इत्याद्युदाहरणानि ।

**जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु ।**

सर्वत्र*शब्दोऽत्रापि संबध्यते मध्यगतस्य विशेषाग्रहणात्प्रयोजनवत्त्वाच्च । अस्मिञ्शास्त्रे यानि जपादीनि तान्यु+पांशु प्रयोक्तव्यानि ।

**मन्त्रा×श्च कर्मकरणाः ।**

चशब्देनात्र सर्वत्रेत्युपांश्विति चानुकृष्यते । मन्त्राः कर्मकरणाश्च सर्वत्रोपांशु प्रयोक्तव्याः । उपांशुत्वस्येदं लक्षणम्—करणवदशब्दममनःप्रयोगं उपांश्विति । जपादीनां षण्णां लक्षणमुच्यते—

जपमुच्चारणं[2] विद्यात्क्रत्वर्थमपि तद्भवेत् ।
अर्थतः कार्यलाभश्चेदर्थ एव क्रतोर्भवेत् ॥
मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥
एतदेवाभिमन्त्रस्य लक्षणं[3] चेक्षणाधिकम् ।
अद्भिः संस्पर्शनाधिक्यात्तदेवाऽऽप्यायनं स्मृतम् ॥
उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम् ।
बाह्यं कार्यं यदेतेषु मन्त्रकाले क्रियेत तत् ॥
कर्मणः करणास्ते स्युर्विहितार्थप्रकाशनात् ।
मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ॥
इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः ।
लिङ्गा÷देवेदमर्थत्वं येषां ते मन्त्रसंज्ञिताः[4] ॥

अनुमन्त्रणग्रहणेनाभिमन्त्रणमपि गृह्यते । अनुमन्त्रणाप्यायनोपस्थानानां कर्मकरणत्वाविशे-

* घ झ. दर्शपूर्णमासातिरिक्तदर्विहोमार्थम् । + व. शनैरुच्चारयेन्मन्त्रं मन्दमोष्ठौ प्रचालयेत् । अपरैरश्रुतः किंचित्त उपांशुजपः स्मृतः । × व. कर्म क्रियते यैस्ते कर्मकरणाः । ÷ घ. प्रमाणात् ।

१ क. °गमुपा° । २ ङ. °प उच्चा° । ३ ङ. °णं वीक्ष° ४ ङ. संज्ञकाः । अ° ।

षेऽपि यत्पृथग्ग्रहणं तत्तन्मन्त्रान्ते कर्मारम्भ इति कर्मकरणधर्मो यः स तेषु न भवतीत्येव-मर्थम् । तेन मन्त्रोच्चारणसमकालमेव तेषु *क्रिया भवति ।

**+ प्रसङ्गादपवादो बलीयान् ।**

सामान्यविधेर्विशेषविधिर्बलीयानित्यर्थः । लोकवेदप्रसिद्धस्य न्यायस्य वचनप्रयो-जनं सर्वेऽपवादाः प्रसङ्गस्यैव बाधका नापवादाः सावकाशत्वे परस्परं बाधका इत्येवमर्थम् । अतः स्वादुष्किलीयास्वाहावोत्तरयोः प्रणवयोर्यौ मद्वत्प्रतिगरौ तयोः प्रणवरूपप्रतिगरौ न बाधकौ भवतः ।

**प्रपद्याभिहृततरेण पादेन वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य संहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसंमितावङ्कसंमितौ वा द्यावापृथिव्योः संधिमीक्षमाणः ।**

तिष्ठेदिति शेषः । तीर्थेन विहारं प्रपद्यत इत्युक्तम् । तच्चैकेन पदविक्षेपेण बहिर्विहारा-दन्तर्विहारप्रपदनं कर्तुं शक्यं दक्षिणाङ्गप्रत्ययश्च सिद्ध एव । इदानीं प्रपद्येत्युच्यते, आवेदि श्रोण्या यत्प्रपदनं तस्य सर्वस्य विहितत्वसिध्द्यर्थम् । अभिहृततरेणेतितरपो वचनमनेकपदवि-क्षेपसाध्यत्वादस्य प्रपदनस्य सर्वेषु च पदविक्षेपेषु दक्षिणस्याग्रतो हरणसिध्द्यर्थम् । वेदेर-पराश्र्योः श्रोणिरिति संज्ञा, पूर्वाश्र्योरंस इति । पादस्यापरो भागः पार्ष्णिः, पूर्वः प्रपदः । उत्तरया श्रोण्या दक्षिणस्य पादस्य पार्ष्णी समां निधाय तस्यैव प्रपदेन वेद्यामास्तीर्णं बर्हिराक्रम्य बहिर्वेदि सव्यं निधायाऽऽत्मनः सव्यदक्षिणौ हस्तौ पृथक्पृथग्विरलाङ्गुलिकौ कृत्वा पुनस्तथाभूतावेव तौ पाणी परस्परं संहितौ च कृत्वा तौ हृदयसंमितावङ्कसंमितौ वा धारयन्द्यावापृथिव्योः संधिमीक्षमाणो नोर्ध्वमधस्तिर्यगवेक्षमाण ऊर्ध्वः प्राङ्मुखस्तिष्ठेत् ।

**एतद्धोतुः स्थानम् ।**

अयं स्थानशब्दो भावसाधनो नाधिकरणसाधनः । एतच्छब्देन श्रोणिदेशेन हस्तपादा-दियन्त्रणेन च विशिष्टं यत्पूर्वसूत्रोक्तं तदत्र स्थानशब्देनोच्यत इति प्रदर्श्यते । यत्र होतुः स्थानं चोद्यते तत्रैतत्स्थानं भवतीत्यर्थः । होतृग्रहणमुत्तरसूत्रस्य सर्वार्थत्वाय ।

**आसनं वा सर्वत्रैवंभूतः ।**

अयं वाशब्दश्चशब्दस्यार्थे वर्तते । स्थानं चाऽऽसनं च सर्वत्र सर्वः कर्तैवंभूतः

---

* घ.—कर्मकरणमन्त्रेषु मन्त्रोच्चारणसमकालं कर्म भवति 'होतृषदनमभिमन्त्रयेत्' भूमौ प्रादेशं कुर्यात् ।' इत्यादि । + ङ—प्रसङ्ग इव प्रसङ्गोऽववादः । अपवादयोर्विरोधे 'बहुविषयापवादमल्पविषयापवादो बाधते ।

---

१ ख. ग. ङ. झ. कर्तुमश° । २ झ. °क्षिणाङ्गस्या° । ३ ख. ग. ङ. °दः । बहिर्वेद्यां स्तीर्णं तृणम् । उ° । ४ ङ. च. °ङ्गुलीयकौ । ५ घ. च. संहतौ ।

कुर्यात् । पूर्वोक्तहस्तपादादियन्त्रै[1]णाविशिष्टो[2] न श्रोणिदेशाविशिष्ट इत्यर्थः । श्रोण्यादिषु सर्वेषु प्राप्तेषु श्रोणिदेशवर्जनेन कर्तृशरीरविशेषणानामेव प्रापणार्थमेवंभूतवचनम् ।

वचनादन्यत् ।

उक्तस्यान्याभावो यावन्मात्रस्य वचनं तावन्मात्रस्यैव न तत्संबन्धिनोऽन्यस्यापीति । तेन होमादौ क्रियमाणे दक्षिणस्य पाणेरपायेऽपि स[3]व्यो हृदयान्नापैतीति सिद्धम् ।

प्रेषितो जपति ॥ १ ॥

अत्रान्यार्थस्यै[4] प्रेषस्याभावात्सामिधेन्यर्थं प्रेषितो होता ॥ १ ॥

**नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्च वाक्समा[5]स्थितयज्ञः साधु च्छन्दांसि प्रपद्येऽहमेव माममुमिति स्वं नामाऽऽदिशेत भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वहेत्यङ्गुल्यग्राण्यवकृष्य जातवेदो रमया पशून्मयीति प्रतिसंदध्याद्वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः । तदद्य वाचः प्रथमं मसीयेति ।**

नमः प्रवक्त्र इत्यादि होत्रं जुषध्वमित्यन्तं जपेत्सामिधेन्यर्थम् । प्रैषोत्तरकालवर्तित्वादयं जपः सामिधेन्यर्थो भवति । अत्रामुमितिशब्दस्य स्थाने द्वितीयया विभक्त्या स्वं नामाऽऽत्मनाम निर्दिशेत् । स्वग्रहणात्प्रतिनिधित्वेन प्रवृत्तस्यापि जपकर्तुरेव नाम निर्देष्टव्यं न होतुरिति लभ्यते । अशान्तिं वहेति जपैकदेशमुच्चारयन्नङ्गुल्यग्राण्यवकर्षेत् । मयीति चोच्चारयन्प्रतिसंदध्यात्तेनावकर्षणसंधाने जपा[6]ङ्गे, तत्कुर्वतो विधानात् ।

समाप्य सामिधेनीरन्वाह ।

समाप्येत्यनेन नमः प्रवक्त्र इत्यादेर्होत्रं जुषध्वमित्यन्तस्यैकजपत्वं दर्शयति । तेनान्तरा यत्कार्यद्वयमवकर्षणं संधानं च तज्जपकर्तुः संस्कार एव भवति न कार्यान्तरम् । अतः पित्र्यायां जपलोपे न कर्तव्यं भवति । अग्नेः समिन्धनार्था ऋचः सामिधेन्यः । ता अन्वाहानुब्रूयादित्यर्थः ।

हिं[7]३इति हिंकृत्य भूर्भुवः स्वरो३मिति जपति ।

हिंकारस्य नानारूपत्वादिष्टपरिग्रहार्थः पाठः ।

---

१ ख. ग. घ. ङ. च. °न्त्रणावि° । २ क. °शिष्टे न° । ३ ङ. च. सव्यं हृ° । ४ घ. ङ. च. झ. °स्य प्रैष° । ५ क. ख. ग. घ. स्वमा° । ६ क. घ. च. °पाङ्गं त° । ७ क. ख. ग. घ. ङ. झ. हुं इ० । अत्र ङ. पुस्तके हुमित्यस्योपरि मन्द्र इति ठिप्पनी ।

**एषोऽभिहिंकारः ।**

जपसाहितस्य हिंकारस्याभिहिंकार इति संज्ञा विधीयते ।

**भूर्भुवः स्वरित्येव जपित्वा कौत्सो हिं करोति ।**

एवेत्यवधारणान्न केवलं व्युत्क्रममात्रं प्रणवरहितत्वं चेति दर्शयति । आचार्यग्रहणं विकल्पार्थम् ।

**न च पूर्वं जपं जपति ।**

कौत्स इति शेषः । पूर्वमिति । नमः प्रवक्त्र इत्यादि जुषध्वमित्यन्तमित्यर्थः ।

**अथ सामिधेन्यः प्रवो वाजा अभिद्यवोऽग्न आयाहि वीतये गृणान ईळेऽन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे ।**

अथशब्द ऋचामेव सामिधेनीत्वं दर्शयति । पूर्वं सामिधेनीग्रहणं सामिधेन्याद्यङ्गानां मध्येऽभिहिंकारः सामिधेन्यादीनामासन्नतरमङ्गमिति दर्शयति । तेन वैश्वदेवशस्त्रे दिग्ध्या॰नोत्तरकाल[1]मभिहिंकारः कर्तव्य इति गम्यते ।

**ता एकश्रुति संततमनुब्रूयात् ।**

या एता उक्ता ऋचस्ता एवमनुब्रूयादित्यर्थः ।

**उदात्तानुदात्तस्वरितानां परः संनिकर्ष ऐकश्रुत्यम् ।**

ऐकश्रुत्यलक्षणमुच्यते । उदात्तानुदात्तस्वरितानामभिव्यञ्जका ये प्रयत्ना * आयाम॰विस्रम्भाक्षेपास्तेषामन्यतमस्यैकस्यैवात्य[2]न्तसंनिकर्षेणासजातीयप्रयत्नाव्यवधानेन यदुच्चारणं तदैकश्रुत्यमित्यर्थः ।

**स्वरादिमृगन्त[3]मोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽव॰स्येत्तत्संततम् ।**

इदं संततलक्षणम् । स्वराद्यृगन्तपदयोष्टिप्रदेशोपलक्षणार्थत्वादृगन्तो यः स्वरादिः स्वर एव वा केवलस्त[4]मोकारं त्रिमात्रं कृत्वा तेन प्रणवेनोत्तरामृचं संधाय तस्या अर्ध॰

* क. पुस्तकस्थेयं टिप्पनी—आयामो नाम वायुनिमित्तमूर्ध्वगमनं गात्राणां तेन य उच्यते स उदात्तः । आ ये । विस्रम्भो नामाधो गमनं गात्राणां वायुनिमित्तम् । नः । नौ । आक्षेपो नाम तिर्यग्गमनं गात्राणां वायुनिमित्तम् । न्यक् । क ।

१ ख. ग. °ळनामहिं° । २ क. ङ. त्यन्तः सं° । ३ च. °न्तमोंका° । ४ क. च. °स्तमोंका° ।

र्चेऽवस्येत् । मकारान्तं त्रिमात्रमिति व्युत्क्रमेण योजना । समुदायस्य त्रिमात्रतीया इष्ट-त्वात् । अत एवं भवति । ओकारोऽर्धतृतीयमात्रः, मकारोऽर्धमात्र इति त्रिमात्रत्वं प्रण-वस्य । उत्तरवचनमावृत्तिनोऽनावृत्तिनश्चोभयथा गृह्यते । यत्प्रणवेनोत्तरासंधानमात्रं विधी-यते तत्संततमित्युच्यते ।

* एतदवसानम् ।

सामिधेनीष्वनूच्यानामृचामर्धर्चेऽवसानस्य पूर्वसूत्रेणैव सिद्धत्वादिदमवसानविधानमा+ द्यायामृचि प्रापणार्थम् । अन्यत्र च जपादिष्वपीति ।

उत्तरादानमविप्रमोहे ।

आदानमारम्भः । विप्रमोहो विभ्रेषः । पूर्वस्योच्छ्वासस्याविप्रमोह एवोत्तरमुच्छ्वासमार-भेतेत्यर्थः । विप्रमोहे पूर्वमेव सम्यक्पुनः पुनर्ब्रूयादित्यर्थः । अस्मिन्भ्रेष इदमेव प्रायश्चित्तं नान्यदिति सूत्रस्य प्रयोजनम् ।

समाप्तौ प्रणवेनावसानम्[२] ।

अर्थप्राप्तस्य विधानं विहित एवायमर्थो नार्थप्राप्त इत्येवमर्थम् ।

चतुर्मात्रोऽवसाने ।

यवदसानं विहितमेव नार्थप्राप्तं तस्मिन्नवसाने चतुर्मात्रः प्रणवो न त्रिमात्रः ।

तस्यान्तापत्तिः ।

तस्य प्रणवस्य योऽन्तो मकारस्तस्य वर्णान्तरापत्तिर्वक्ष्यत इत्यर्थः ।

स्पर्शेषु स्ववर्ग्यमुत्तमम् ।

स्पर्शेषु परेषु यः स्पर्शो मकारात्परस्तस्य स्ववर्ग्यमुत्तममापद्यते मकारः । समिध्य[३]सोन्तं मर्जयन्तेत्यादिनिदर्शनम् ।

अन्तस्थासु तां तामनुनासिकाम् ।

रेफस्यानुनासिकत्वासंभवाद्यवला एवात्रान्तस्था गृह्यन्ते । तासु या या पराऽन्तस्था तां तामनुनासिकां मकार आपद्यते । तत्र सानुनासिका पूर्वा, उत्तरा शुद्धा, एँवमत्र[४] संयोगः । विदथानि प्रचोदयो[५] ऽँवाजी वाजेष्विति निदर्शनम् ।

---

* ङ. पुस्तकस्थेयं टिप्पनी—सिद्धान्ते त्वेतत्सूत्रमुत्तरार्थं पूर्वस्यावसानस्याविप्रमोह उत्तर-स्यावसानस्याऽऽरम्भः कार्य इत्यवसानाधिकारार्थमेकैकमवसानमविमूढं ब्रूयादित्यर्थः । नैकैकमृचमेकै-कमर्धर्चम् । + ङ. शस्त्रानुवचनादौ ।

---

१ ख. ग. °तायाऽदृष्ट° । २ ख. °म् । आर्थ° । ३ च. °सोन्तम° । ४ च. एवं मन्त्रसं° । ५ ङ. वाजिवाजेष्विति ।

**रेफोष्मस्वनुस्वारम् ।**

एतेषु मकारोऽनुस्वारमापद्यते । अनुस्वारो नाम नासिकास्थानोऽस्पृष्टकरणश्च । अस्य यज्ञस्य सुक्रतों समिध्यमानो अध्वर इत्यादि ।

**त्रिः प्रथमोत्तमे अन्वाहाध्यर्धकारम् ।**

अध्यर्धकारमध्यर्धीकृत्येत्यर्थः । प्रथमोत्तमे ऋचौ त्रिरध्यर्धकारं ब्रूयात् ।

**अध्यर्धामुक्त्वाऽवस्येदथ द्वे ।**

प्रथमायामेवमध्यर्धकारं[1] भवति । पूर्वामध्यर्धामुक्त्वाऽवसाय ततो द्वे ऋचौ ब्रूयात् । द्वे इतिवचनमर्धर्चचतुष्काभिप्रायम्[2] । पूर्वस्मिन्नुच्छ्वासे प्रथमायामावृत्तौ द्वावर्धर्चौ द्वितीयायामेकश्चेति त्रयोऽर्धर्चा उक्ताः । अस्मिंस्तूच्छ्वासे द्वितीयतृतीययोरावृत्त्योस्त्रयोऽर्धर्चा उत्तरस्या ऋच एकोऽर्धर्च इत्येवं चत्वारोऽर्धर्चा वक्तव्या भवेयुः । अध्यर्धकारविधेरुत्तरया संधानाविरोधादिति । अथशब्दोऽस्य सूत्रस्यान्यार्थत्वप्रातिभासनिवृत्त्यर्थः ।

**द्वे प्रथममुत्तमस्यामथाध्यर्धाम् ।**

पूर्वेण संधानाविरोधादुत्तमायामेवं भवति । अथशब्दश्च पूर्ववत् ।

**ताः पञ्चदशाभ्यस्ताभिः ।**

एकादशानामृचां द्वयोस्त्रिरभ्यासे कृते ता अभ्यस्ताभिः सह पञ्चदशैव भवन्तीत्यर्थः[3] । प्राप्त एवायमर्थः । अस्य वचनस्येदं प्रयोजनं सर्वत्राभ्यस्ताभिः सह विहितसंख्यापूरणं कर्तव्यमिति ।

**एतेन शस्त्रयाज्यानि*गदानुवचनाभि+ष्टवनसंस्त×वनानि ।**

शंसत्यादिशब्दचोदितानि शस्त्रादीनि भवन्ति । एतेनेति सामिधेन्यनुवचनमुच्यते । शस्त्रादीनि च तत्र तत्र विहितानि । तेषां धर्मापेक्षाऽस्ति । तत्रैतेन तानीत्युक्त एतद्धर्माणि तानीति गम्यते । अनेन प्रकारेण तेषां सामिधेनीधर्मातिदेश उक्तो भवति ।

सर्वधर्मप्राप्तौ कतिपयधर्मनिषेधार्थमाह—

**न त्वन्यत्राध्यर्धकारं, न जपः प्रागभिहिंकारात्, नाभिहिंकाराभ्यासावबहुषु प्रकृत्या ।**

अन्यत्रेत्येतावदनुवर्तते । तस्य सामिधेनीभ्योऽन्यत्रेत्ययमर्थः । अतः =पित्र्यायामभि-

---

* ङ. अग्ने महां असीत्यादि । + ङ. अथ ग्राव्णोऽभिष्टुयात् । × ङ. संस्तुयादनभिहिंकृत्य यान्वो नर इत्यादि । = ङ. उशन्तस्त्वा ।

---

१ ख. ग. °मेवाध्य° । २ ख. ग. °मध्यर्धच° । ३ च. °त्यर्थप्रा° ।

हिंकारः सिद्धो भवति । अभ्यासनिवृत्त्यर्थं तत्रैव ताग्रहणं करिष्यति । तेनाभ्यासो न भवति । प्रकृत्येतिशब्दोऽभ्यासेन बहुष्वपि ' पुरीष्यासो अग्नयः ' इत्येवमादिषु तयोरभावं दर्शयति ।

*** नावच्छेदादौ ।**

अवच्छेदो नाम यत्र शस्त्रादिषु मध्ये समाप्यावस्येदित्येवमादिभिः शब्दैरवसानं विहितं समाप्य प्रणवेनेत्येवमादिषु सोऽवच्छेदस्तत्रापि तौ न स्तः ।

**शस्त्रेष्वेव होत्रकाणामभिहिंकारः ।**

अस्मिञ्शास्त्रे मुख्यवर्जिता द्वादशर्त्विजो होत्रका इत्युच्यन्ते न सप्त वा त्रयो वा । तेन ग्रावस्तुतोऽभिहिंकारनिषेधः सिद्धो भवति ।

**सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाँ असि ब्राह्मणभारतेति निगदेऽवसाय ॥ २ ॥**

प्रणवेन निगदं संधाय निगदेऽवस्येदित्यर्थः ॥ २ ॥

**यजमानस्याऽऽर्षेयान्प्रणीते यावन्तः स्युः ।**

तत्रावसायाऽऽर्षेयान्प्रवृणीते यावन्तो यजमानस्य ते भवन्ति । ते च प्रवराम्नाये व्याख्याताः ।

**परं परं प्रथमम् ।**

अस्येम आर्षेया इत्यन्तः, अयं परः, अयमपरः, इत्येवमादिस्मृत्यनुसारेण प्रवराम्नाय एव वरणप्रकारः पठितः स एवेदानीम् । इयन्तो वरीतव्या इत्थं वरीतव्या इति विधानमन्यक्षेत्रजातव्द्यामुष्यायणार्थम् ।

**पौरोहित्यान्राजविशाम् ।**

पुरोहितस्य य आर्षेयास्तानेव राजन्यवैश्ययोः प्रवृणीते । बहुवचनं त्रैवर्णिकस्त्रीजातानामनुलोमानां संग्रहार्थम् ।

---

* ङ. पुस्तकस्थेयं टिप्पनी—यत्र ऋगन्तावसानेऽध्वर्युप्रैषवशादनुवचनान्तरत्वं श्येनेन योनिमित्यादौ प्राप्तयोरभिहिंकाराभ्यासयोः प्रतिषेधः । आदिग्रहणादन्त्येऽभ्यासो भवतीति देवत्रात. सिद्धान्तभाष्ये । प्रवर्ग्ये याज्यया भक्षणेन च विच्छिन्नत्वाच्छ्येनेन योनिमिति पुनरारम्भेऽभिहिंकाराभ्यासयोर्निवृत्त्यर्थमिति । वृ° । + क. पुस्तकस्थेयं टिप्पनी—आर्षेयद्व्यामुष्यायणपक्ष इतरस्यैक इतरस्य द्वाविति । पञ्चार्षेयपक्ष इतरस्य द्वौ इतरस्य त्रय इति । परं परं प्रथममिति । द्व्यामुष्यायणार्थमिदं सूत्रम् । अन्येषां प्रवराध्याये पठित एव क्रमः । मुख्यो द्वितीयस्तृतीय । इति सर्वेऽसमानगोत्राः स्युरित्यस्मिन्खण्डेऽनेनैव क्रमेण सूत्रकारेण पठिताः । तेनैव क्रमेण यजमानस्याऽऽर्षेयवरणकाले पठितव्या इति भावः ।

**राजर्षीन्वा राज्ञाम् ।**

मानवैलपौरूरवसेत्येवं वा पौरोहित्यान्वा ।

**सर्वेषां मानवेति संशये ।**

अज्ञाने संशये च त्रयाणां वर्णानां मानवेत्ययं शब्दः प्रवरो भवेत् ।

**देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाळित्यव-सायाऽऽस्पात्रं जुहूर्देवानां चमसो देवपानो अराँ इवाग्ने नेमिर्देवांस्त्वं परिभू-रस्यावह देवान्यजमानायेति प्रतिपद्य देवता द्वितीयया विभक्त्यादेश-मादेशमावहेत्यावाहयत्यादिं प्लावयन् ।**

निगदेऽवसायेति निगद इति सप्तमीनिर्देशात्पूर्वापरीभूतो निगदो न परिसमाप्त इति गम्यते । अतः प्रवरोऽपि तस्यैव शेषः । क्वचिन्मन्त्राम्नाये भारतशब्दानन्तरमसावसाविति प्रवरप्रकृतेः पठितत्त्वाच्च संबुद्धिसामानाधिकरण्याच्च । देवेद्ध इति निवित्पदनिगदः । चतुर्दश निवित्पदानि परिभूरसीत्येवमन्तानि । आवह देवान्यजमानायेत्यादि[1] सुयजा यजेत्यन्त[2]-मावाहननिगदः । सामिधेन्यादय एते मन्त्रा आहवनीयाभिधायिनः । तत्र भारतेत्यवस्येत्प्रव-रान्ते च निवित्पदानामेकादशे च । चतुर्दशेनाऽऽवाहननिगदं संधाय यजमानायेत्यवस्येत्, प्रतिपद्यावसायेत्यध्याहारात् । प्रतिपद्येतिवचनमस्य वाक्यस्य प्रतिपत्तिसंज्ञाकरणार्थम् । तेन पित्र्यायां प्रतिपत्त्यन्तरविधान एतन्न भवति । तत्र स्थित्वा देवता वक्ष्यमाणा द्विती-यया विभक्त्याऽऽदिश्याऽऽदिश्यानन्तरमावहेत्यावाहयत्यावहशब्दस्याऽऽदिं प्लावयन् । द्वितीयाविधानं सर्वार्थम् । अत्र पाठादेव द्वितीया सिद्धेति तेन देवतामादिश्य प्रणुयाद्यजे-चेत्यत्र द्वितीयैव भवति । विभक्त्यन्तरविधाने तु तदेव भवति । 'आवह देवान्' 'होत्रा-याऽऽवह' 'आवह जातवेदः' इत्येतेषु त्रिषु प्लुतावसाने न[3] स्तः ।

**अग्न आवहेति तु प्रथमदेवताम् ।**

प्रथमदेवतायामयं विशेषः । तुशब्देन यष्टव्यदेवतावाहनशब्दयोर्मध्येऽग्नेशब्दं ब्रूयात् ।

**अग्निं सोममित्याज्यभागौ ।**

यागयोरियमाख्या तत्संबन्धाद्देवतयोरपीति ।

**अग्निमग्नीषोमाविति पौर्णमास्याम् ।**

विशेषाभावात्सोमयाजिनोऽसोमयाजिनश्च प्रधानदेवते एते ।

---

१ ग. झ. °त्यादिः सु° । च. °त्यादिषु य° । २ ग. च. श. °न्त आ° । ३ घ. °ने स्तः । ४ ङ. 'तावहश° ।

**अग्नीषोमयो स्थान इन्द्राग्नी अमावास्यायामसंनयतः ।**

पौर्णमास्याः प्रथमाम्नानात्सैव प्रथमं प्रयोज्या । स्थानशब्दः पौर्णमास्याधर्माणां प्रथमसंबन्धं दर्शयति । प्राप्तावविशेषेऽपि प्रयोगावस्थायां विशेषग्रहणादिति । तेनेदं बोधितं भवति—असमाम्नातानामसति चोदनालिङ्गविशेषे पौर्णमासमेव तन्त्रमिति दधिपयोभ्यां यागं कुर्वन्संनयान्नित्युच्यते । यो न संनयति तस्येन्द्राग्नी द्वितीया ।

**इन्द्रं महेन्द्रं वा संनयतः ।**

संनयतोऽमावास्यायामिन्द्रं महेन्द्रं वाऽग्नीषोमस्थान आवाहयेत् ।

**अन्तरेण हविषी विष्णुमुपांश्वैतरेयिणः ।**

ऐतरेयिणः शाखाविशेषास्त ऐतमुपांशुयाजमुभयोरपि पर्वणोरन्तरेण हविषी इच्छन्ति ।

**अग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेके नैके कंचन ।**

उभयोरपि पर्वणोः कंचनोपांशुयाजमेके नेच्छन्ति ।

**अन्येषामप्युपांशूनामावह स्वाहाऽयाट्प्रिया धामानीदं हविर्महो ज्याय इत्युच्चैः ।**

अन्येषामपीति पित्र्यादीनामङ्गोपांशूनां संग्रहार्थम् । आवाहनादिषु चतुर्षु निगदेषु यान्युपांशुयाजसंबन्धीनि षट् पदान्यावहादीनि तेषामुच्चैरिति संज्ञामात्रं विधीयते । ‘ तन्त्रस्वराण्युपांशोरुच्चानि’ इत्यनेन सर्वेषामुच्चसंज्ञानां तन्त्रस्वरो विधीयते ।

**येऽन्ये तद्वचनाः परोक्षास्तानुपांशूच्चैर्वा ।**

येऽन्य इति सर्वनाम्नः संनिहितविषयत्वात्तेष्वेव निगदेष्विति गम्यते । तद्वचना उपांशुयाजवचनाः । परोक्षास्ते, येषां पदान्तरसंनिधानादेवं विशेषनिष्ठताऽवसीयते न स्वतः । अजुषतादयः क्रियावचना इत्यर्थः । तेषामुपांशुत्वं प्राप्तमनूद्यते । उच्चैःसंज्ञा विकल्पेन विधीयते ।

***प्रत्यक्षमुपांशु ।**

यागं प्रति चोदितं देवतानामधेयं प्रत्यक्षमित्युच्यते । तस्य प्राप्तमुपांशुत्वं नियमार्थं विधीयते । तस्यैवोपांशुत्वं भवेत् । उपांशुदेवतायाः प्राथम्येऽपि प्रथमदेवतायाः संबन्धी योऽग्निशब्द आवाहनस्विष्टकृन्निगदयोर्न तस्यापीति । अत्र किंचिदुच्यते—उपांशु यष्टव्यमितिवचनादुपांशुत्वं यागधर्मतयाऽव+गम्यमानं तत्रासंभवादानर्थक्यात्तदङ्गन्यायेन तत्संब-

---

* घ. यत्प्रत्यक्षं देवता नाम विष्णूरग्नीषोमौ प्रजापतिरिति । + क. ज्ञायमानम् ।

---

१ च. °म्नातत्वात्सै° । २ ङ. च. एवमु° । ३ ट. °यागमु° । ४ क. च. °न्यावाहनादी° । ५ ख. ग. °द निगदताऽ° ।

न्विनः *शब्दान्परिगृह्य तिष्ठति । तत्राऽऽवहादीनामागूरादीनां[1] च होता यक्षदित्यस्य चोपांशुत्वं निवर्त्य तन्त्रस्वरोऽनुज्ञातः । परोक्षाणामजुषतादीनां विकल्पेन तन्त्रस्वर[2] उक्तः । प्रत्यक्षस्य विष्ण्वादेर्याज्यादीनां[3] चोपांशुत्वनियमादन्यस्य सर्वस्य तन्त्रस्वरे प्राप्ते याज्यानुवाक्ययोरागूरादिभिः प्राणसंतानविधानादुपांशुत्वमेव स्थितम् ।

**प्रतिचोदनमावाहनम् ।**

चोदनां चोदनां प्रतीति प्रतिचोदनम् । चोदना देवताचोदना । यावत्यो देवताश्चोदितास्तावन्त्यावाहनानि भिन्नानीत्यर्थः । प्रत्यावाहनमुच्छ्वासंनिश्वाससिद्ध्यर्थमिदं[4] भेदसाधनम् ।

**सर्वा आदिश्य सकृदेकप्रदानाः ।**

यत्र बहुभिर्हविर्भिरेकया याज्यया बह्वीभ्यो देवताभ्यो युगपद्यागाः क्रियन्ते त एकप्रदाना यागाः । तत्संबन्धाद्देवता अप्येकप्रदाना इत्युच्यन्ते । सर्वा इति बहुवचनं सर्वासां पृथगादेशार्थम् । आदिश्यवचनं सर्वा आदिश्यान्त आवहशब्दप्रयोगार्थम् । सकृद्वचनमन्तेऽपि सकृदेव वक्तव्यो न यावद्दैवतमित्येवमर्थम् ।

**तथोत्तरेषु निगमेष्वेकामिव संस्तुयात् ।**

एकामिवेतिवचनं यथैकस्या देवतायाः पुरस्तात्स्वाहायाट्शब्दावजुषतादयश्चैकवचनेन तथैतास्वपीति ।

**समानां देवतां समानार्थाम् ।**

निगमेष्वेकामिव संस्तुयादित्यत्रापि संबध्यते विशेषाग्रहणात्प्रयोजनवत्वात्संप्रदायाच्च । समानामिति । एकशब्दामित्यर्थः । समानार्थामिति । एकप्रयोजनामित्यर्थः ।

**अव्यवहितां सकृन्निगमेषु ।**

अव्यवहितामन्यया देवतया निगमेषु सकृद्ब्रूयादेकवचनेनैव ।

**ओह्ळास्वावापिकासु देवाँ आज्यपाँ आवहाग्निं होत्रायाऽऽवह स्वं महिमानमावहाऽऽवह जातवेदः सुयजायजेत्यावाह्य यथास्थितमूर्ध्वजानुरुपविश्योदग्वेदेर्व्युह्य तृणानि भूमौ प्रादेशं कुर्यात् । अदितिर्माताऽस्यान्तरिक्षान्मा च्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण च्छन्दसाऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं हन्मीति ।**

---

* क. मन्त्रान् ।

---

१ क. घ. ङ. °मागुरा° । २ झ. °स्वरोऽनुज्ञातः । प्र° । ३ ख. ग. ङ. च. झ. °देरादद्रादीनां । ४ क. °ससि° ।

आवापिका आवापोद्धारयोग्याः प्रधानदेवता इत्यर्थः । तासु कृतावाहनासु देवानाज्यपानावाहयेत्स्विष्टकृतं च । पाठोऽनुनासिकलाभाय नकारलोपाय च, होत्रायाऽऽवहशब्दयोः स्विष्टकृदावाहनप्रयोगाय च । किंच पठितावाहनानां पाठादेवोत्तरेष्वपि निगमेषु निगमनसिद्धिर्लक्ष्यत इत्येवमर्थम् । आज्यपाः प्रयाजानूयाजदेवताः । अग्निं होत्रायाऽऽवह स्वं महिमानमावहेत्येतावत्स्विष्टकृदावाहनार्थम् । आवह जातवेद इत्यादिः सुयजायजेत्यन्तो निगदशेषः । आवाह्यवचनं सुयजायजेत्यन्तस्याऽऽवाहननिगदत्वाय । सामिधेन्यर्थं यथास्थितस्तथोर्ध्वजानुरुपविश्योदङ्[1]वेदेर्व्यूह्य वेद्यास्तीर्णानि[2] तृणानि वेद्यां भूमौ प्रादेशं कुर्यादिदितिर्मातेति मन्त्रेण ।

**आश्रावयिष्यन्तमनुमन्त्रयेताऽऽश्रावय यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसायेति । प्रवृणानं देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुष इति । मानुष इत्यध्वर्योः श्रुत्वोदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अन्वित्युत्तिष्ठेत् ।**

अध्वर्युग्रहणमुत्तरार्थम् ।

**षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः । सिनन्ति पाकमतिधीर एतीत्युत्थाय ।**

ब्रूयादिति शेषः । नायमुत्थानमन्त्रः पूर्वेणैव निरपेक्षत्वात् । अत ईदृशो मन्त्रो मन्त्रसंज्ञकः ।

**ऋतस्य पन्थामन्वेमि होतेत्यभिक्रम्यांसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना ।**

अत्राध्वर्युग्रहणेन प्रयोजनमभिक्रमणान्वारम्भणे अध्वर्यौरेव[3][4] कुर्यान्न प्रतिप्रस्थातुरित्येतत् । जत्रुबाह्वोः संधिरंसस्तस्मिन्देशेऽध्वर्युमन्वारभेत । पार्श्वस्थेन पाणिना । पार्श्वेन तिष्ठतीति पार्श्वस्थः कनिष्ठिकाप्रदेशे न स्थितो न न्यग्भूतो नोत्तान इत्यर्थः । तेनान्वारभेताध्वर्युम् ।

**आग्नीध्रमङ्कदेशेन सव्येन वा ।**

सव्येन पाणिना पार्श्वस्थेनांस एवाङ्केनोरुणा वा ।

---

१ ख. ग. घ. ङ. च. झ. °दग्व्यूह्य । २ ख. ग. ङ. झ. वेद्यां स्तीं° । ३ झ. ध्वर्युमेव । ४ च. °रेवाध्वर्युमेव । ५ घ. ङ. च. झ. °स्थातारमित्ये° ।

**इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितम् । येनाऽऽयन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति ।**

उभयोः साधारणो मन्त्रः । अतो नाऽऽवर्तते नोह्यते च ।

**संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृजीत संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढीति ।**

इध्मसंनहनानि संमार्गशब्देनोच्यन्तेऽग्निसंमार्जनसाधनत्वात्तेषाम् । तैस्तृणैरभ्यात्मं मुखं संमृजीत । तृणैरितिवचनात्तृणभूतैरेव तैः संमृजीत न ग्रन्थिभूतैः पाशभूतैर्वेति गम्यते । अभ्यात्ममात्माभिमुखं पाणितलमवागपवर्गं च संमार्जनमिति ।

**सकृन्मन्त्रेण द्विस्तूष्णीं सर्वत्रैवंकर्मावृत्तौ ।**

सकृन्मन्त्रेण द्विस्तूष्णीमित्येतत्सर्वत्र भवत्येवंप्रकारस्य कर्मण आवृत्तौ सत्यामिति । एवंप्रकारशब्देन संस्कारकर्मत्वमुच्यते । एतदुक्तं भवति—यत्र संस्कारकर्मणि[2] त्रिरावृत्तिर्विधीयते तत्र सकृन्मन्त्रेण द्विस्तूष्णीमिति न प्रधानकर्मणि ।

**स्पृष्ट्वोदकं होतृषदनमभिमन्त्रयेताहेदैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इति ।**

होतृषदनमपरेण स्थित्वा प्राङ्मुखोऽभिमन्त्रयेत । इदमुदकोपस्पर्शनं पूर्वाङ्गम् । अग्निसंमार्जनतृणैरात्मनो मुखसंमार्जनादात्मनो यद्दौष्ट्यं[3] तच्छान्त्यर्थत्वेनास्य दृष्टार्थत्वं भवति ।

**अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरस्येन्निरस्तः परावसुरितीदमहमर्वावसोः सदने सीदामीत्युपविशेद्दक्षिणोत्तरिणोपस्थे*न ।**

दक्षिणं च तदुत्तरं च दक्षिणोत्तरम् । तद्वानुपस्थो दक्षिणोत्तरी तेनोपविशेत् ।

**एते निरसनोपवेशने सर्वासनेषु सर्वेषामहरहः प्रथमोपवेशनेऽपि समाने ।**

एते इति प्रकारमन्त्रविशिष्टयोर्ग्रहणार्थम् । ते च सर्वेषां सर्वासनेषु प्रथमोपवेशने[4] भवतः, न द्वितीयादिप्रयोग इत्येकोऽर्थः । समानेऽप्यासनेऽहर्गणेष्वहरहः प्रथमोपवेशने भवतः,

* क दक्षिणं चोपविश्योरुं वामगुल्फोपरि न्यसेत् । वामोरुं दक्षिणं गुल्फं तच्चोपस्थमुदीरितम् ।

१ घ. संभृजी° । २ ख. ग. ङ मेणस्त्रिरा° । ३ ख. ग. °यद्दौच्छिष्ट्यं त° । च. °यद्दौष्ण्यं त° । ४ ख. ग. °शनप्रयोगे भ° ।

अयमपरोऽर्थः । समानेऽपि स्थाने प्रयोगावृत्तौ पुनः पुनरावर्त्येते प्रवर्ग्यादिषु । अयं चापरोऽपि शब्दाल्लभ्यते । अस्य विधेर्दर्शपूर्णमासप्रकरणे पठितत्वात्तदातिदिष्टेष्वेवेष्टिपशुसोमेषु भवतो नाग्निहोत्रादिष्विति । अङ्कधारणं भवत्येव ।

**द्विरिति गौतमः ॥ ३ ॥**

अस्याऽऽचार्यस्य द्विः । द्वितीयेऽपि प्रयोगे भवतीत्यभिप्रायः ॥ ३ ॥

---

**ब्रह्मौदने प्राशिष्यमाणेऽग्न्याधेये ब्रह्मा ।**

द्विरित्यनुवर्तते । क्रियमाणस्य कर्मणो दक्षिणत उपविष्टः सन्पुनः प्राशनकाले द्वितीये[1] निरसनोपवेशने[2] कुर्यात् । अग्न्याधेये ब्रह्मौदने द्वितीयविधानसामर्थ्यादेवेष्टिपशुसोमेभ्योऽन्यत्रापि ब्रह्मणो निरसनोपवेशनप्राप्तिरिति गम्यते । अग्न्याधेयग्रहणमश्वमेधे यद्ब्रह्मौदनं तत्र[3] नैवं कर्तव्यमिति ।

**बहिष्पवमानात्प्रत्येत्य सोमे ।**

आहवनीयस्य दक्षिणत उपविष्टः सन्बहिष्पवमानं गत्वा ततः प्रत्येत्य पूर्वासने पुनः कुर्यात् । सोमग्रहणं सर्वेषु सोमेषु प्रापणार्थम् । इतरथाऽऽधानाधिकारात्[4]तत्संबन्ध एव सोमे स्यान्न सर्वसोमेष्विति ।

**प्रसृप्य होता ।**

पश्वर्थमुपाविष्ट एवाऽऽसने सदःप्रसर्पणं कृत्वा तत्रैव पुनः कुर्यात् । होतृग्रहणं ब्रह्माधिकारनिवृत्त्यर्थम् ।

**स्रुगादापने पशौ ।**

स्वाहाकृत्यर्थे स्रुगादापने पुनः कुर्यात् ।

**न पत्नीसांयाजिके ।**

पत्नीसंयाजार्थ उपवेशने नैवं[5] कुर्यात् ।

**नान्यत्र होतुरिति कौत्सः ।**

होतुरन्येषामेते न भवत इति कौत्सो मन्यते ।

**उपविश्य देव बर्हिः स्वासस्थं त्वाध्यासदेयमिति ।**

उपविश्यानन्तरं ब्रूयादित्यर्थः ।

---

१ ङ. झ. °तीयं नि° । २ ङ. झ. °शनं कु° । ३ क. नैव । ४ ख. ग. °रात्सं° । ५ झ. °व तत्कु° ।

**अमिहिष होतः प्रतरां बर्हिषद्भवेति जानुशिरसा बर्हिरुपस्पृश्यात ऊर्ध्वं जपेत् ।**

जानुशिरो जान्वग्रम् । अत ऊर्ध्वग्रहणमुपस्पृशतो न जपः स्यादिति । तेनान्यत्रैवंरूपे शब्देऽसति कुर्वन्नेव कुर्यादिति गम्यते ' अरणी संस्पृश्य मन्थयेत् ' इत्यादिषु ।

**भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छंदांसि प्रपद्ये सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यो विश्वे देवाः शास्त न मा यथेहाराधि होता निषदा यजीयांस्त्वद्य वाचः प्रथमं मसीयेति समाप्य प्रदीप्त इध्मे स्रुचावादापयेन्निगदेन ।**

समाप्य प्रदीप्त इत्युभयस्य स्रुगादापनावसरप्रदर्शनार्थत्वाज्जपसमाप्तिरपि प्रदीप्त[१] एवेति गम्यते । अनेन निगदेनाऽऽदापये[२]दध्वर्युम् ।

**अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवता यो अग्निमित्यवसाय होतारमवृथा इति जपेत् ।**

अवसायेतिवचनं निगदमध्य उच्छ्वासलाभार्थम् । जपेदिति निगदमध्य उपांशुत्वलाभार्थम् ।

**अथ समापयेद्घृतवतीमध्वर्यो: स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेऽन्यान्नमस्याम नमस्यान्यजाम यज्ञियानिति ।**

अथेतिवचनमत्राप्युच्छ्वासलाभार्थम् । समाप्तिवचनमग्निर्होतेत्यादेर्य[३]ज्ञियानित्यन्तस्यैकनिगदत्वसूचनार्थम् ।

**समाप्तेऽस्मिन्निगदेऽध्वर्युराश्रावयति ।**

अध्वर्युकर्मविधानं प्रत्याश्रावणस्येदं निमित्तमिति ज्ञापनार्थम् । समाप्तिवचनमाश्रावणे कृते[४]ऽपि समाप्त एव निगदे प्रत्याश्राव[५]णं कुर्यादित्येवमर्थम् ।

**प्रत्याश्रावयेदाग्नीध्र उत्करदेशे तिष्ठन्स्फ्यमिध्मसंनहनानीत्यादाय दक्षिणामुख इति शाट्यायनकमस्तु श्रौ ३ षळित्यौकारं प्लावयन् ॥ ४ ॥**

---

१ ख. ग. °प्त इध्म ए° । २ ख. ग. 'येत्स्रुचावध्व° । ३ ख. ग. °त्तत्वामे° । ४ ख. ग. °तेऽकृतेऽपि । ५ झ. °णं प्रतीयादि° ।

शाट्यायनग्रहणं विकल्पार्थम् । अतः प्राङ्मुखत्वमपि लभ्यते । प्लावयन्प्लुतं कुर्वन्नित्यर्थः ॥ ४ ॥

---

**प्रयाजैश्चरन्ति ।**

वक्ष्यमाणलक्षणा[1] यागाः प्रयाजा इत्युच्यन्ते तैश्चरन्ति यजन्तीत्यर्थः ।

**पञ्चैते भवन्ति ।**

पञ्चवचनं नराशंसस्तनूनपाद्वा[2], द्व्यामुष्यायणस्यापि पञ्चैव भवन्ति न षडित्येवमर्थम् । एत इति वचनमत्र[3] पठिता एवैते तनूनपान्नराशंसयोरन्यतरेण सह पञ्च भवन्ति नापठितेन[4] सहेत्येवमर्थम् ।

**एकैकं प्रेषितो यजति ।**

न सकृत्प्रेषितः सर्वान्यजति ।

**आगूर्याज्यादिरनुयाजवर्ज्यम् ।**

सर्वत्र सर्वासामनुयाजवर्जितानां याज्यानामादावागूर्भवति ।

कोऽयमागूरित्याह—

**ये३ यजामह इत्यागूः, वषट्कारोऽन्त्यः सर्वत्र ।**

अनुयाजानामपीति सर्वत्रवचनम् ।

**उच्चैस्तरां बलीयान्याज्यायाः ।**

अत्रोच्चैस्तरत्वमेकयमातिशयमात्रं, बलीयस्त्वं व्यक्ततरोच्चारणमेतदुभयं याज्याया एव ।

**तयोरादौ प्लावयेत् ।**

तयोरागूर्वषट्कारयोरा[5]द्योः प्लुतिः कार्या ।

**याज्यान्तं च ।**

प्लावयेदिति शेषः ।

**विविच्य संध्यक्षराणामकारं न चेद्द्विवचनो व्यञ्जनान्तो वा ।**

न चेत्प्रगृह्य इति पठितव्ये न चेद्द्विवचन इति प्रमादपाठः । ऋगन्ते यान्यक्षराणि प्रगृह्याणि तेषां स्वरूपेणैव सर्वत्र प्लुतिः कार्या न विवेकः कर्तव्यः । यान्यप्रगृह्याणि[6] संध्यक्षराणि तानि विविच्याकारमेव प्लावयेदिति* । एकारैकारयोरा३ इ इति । ओकारौ-

---

* झ. पुस्तके प्लावयेदितीत्यस्याग्रे—'प्रगृह्य इति पाठे युष्मे अस्मे त्वे इत्यादिसंग्रहः । नाभिमस्मे इति' अयं ग्रन्थो वर्तते ।

---

१ च. °णशाब्दल° । २ ख. ग. °पाद्व्या° । ३ ख. च. ग. घ. °मतः प° । ४ क. घ. नापाठि° । ५ ख. ग. °राद्ययोः प्लु° । ६ ख. ग. घ. ङ. च. झ. °न्यप्रगृह्याणि सं ।

कारयोरा३ उ इत्येवं विविच्य प्लुतिः कार्या । ज्येष्ठश्च मन्त्रो विश्वचर्षण३ इ वौषडित्यादिदृष्टान्तः । इन्दुं समह्यन्पीतये समस्मा३ इ वौ इति निदर्शनम् । एकारस्य प्रगृह्यस्य स्वरूपेणैव प्लुतिः कार्या । अधिश्रियं शुक्रपिशं दधाने३ वौ० इत्यादिदृष्टान्तः । ओकारस्य तु प्रगृह्यसंज्ञाया अनित्यत्वान्नित्यानित्यसंयोगविरोधात्तस्य सर्वदाऽपि विविच्यैव प्लावनं कर्तव्यम् । कविः कविभियक्षसि प्रयज्या३ उ वौ० इत्यादिनिदर्शनम् । तथैवौकारस्यापि सहस्रस्थूणं बिभृथः सह द्वा३ उ वौ० इति । व्यञ्जनान्तो वा । व्यञ्जनान्तानां संध्यक्षराणां सर्वदा स्वरूपेणैव प्लुतिः कार्या न विवेकः कर्तव्यः । स ते जानाति० मिद्यौ३द्वौषट् । त्रीणि पदा विचक्रमे० अतो धर्माणि धारया३न् वौ० इत्यादिदृष्टान्तः ।

## विसर्जनीयोऽनत्यक्षरोपधो रिफ्यते ।

अनत्यक्षरोपधोऽनवर्णोपध इत्यर्थः[1] । स वषट्कारेण संधीयमानो रिफ्यते । पिबा सोममभि[2]शवोभीर्वौ०इत्यादि निदर्शनम् ।

## इतरश्च रेफी ।

इतरः, अवर्णोपधः । स च रेफिसंज्ञी चेद्रिफ्यते[3] । महोपोवर्जमितरो यथोक्तमित्यत्र रेफिसंज्ञाऽधिगन्तव्या । उतत्यं चमसं नवं०अकर्त चतुरः पुनार्वौ०इत्यादि निदर्शनम् ।

## लुप्यते रेफी ।

अवर्णोपधो यो विसर्जनीयो रेफिसंज्ञश्च न भवति स लुप्यत एव वषट्कारसंधौ । अर्वाङेहि सोमकामं० हूयमाना वौ०इत्यादि निदर्शनम् ।

## प्रथमः स्वं तृतीयम् ।

वर्गाणां यो यः प्रथमः स स स्वं तृतीयमापद्यते[4] । विदर्वाग्वौ० उदाहृतिः ।

## नित्यं मकारे ।

अन्तस्थासु तां तामित्यनेनोक्तमित्यर्थः ।

## ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू३ वौ३षळिति वषट्कारः ।

वौषट्शब्दो वषट्कार इत्यर्थः ।

## इति प्रथमः ।

अयं प्रथमः प्रयाज इत्यर्थः ।

---

१ ख. ग. घ. ङ. °व्यः वि° । २ ख. ग. ङ. 'भियमित्या° । झ. °भियवो° । ३ ख. ग. °ते । इतरम° । झ. °ते । नतेर्दन्त्यमूर्धन्यभावस्य । हेतुभूतमक्षरं, अव इतरः, म° । ४ क. ङ. झ. च. °ते । श्विद्° ।

**वागोजः सह ओजो मयि प्राणापानाविति वषट्कारमुक्त्वोक्त्वाऽनुमन्त्रयते ।**

सर्वस्यायं विधिः स्यादित्येवमर्था वीप्सा ।

**दिवा कीर्त्यो वषट्कारः ।**

वृथा रात्रौ न प्रयोक्तव्य इत्यर्थः । किंच वषट्कारसंबन्धि यत्कर्म तद्विध्यन्तराविरोधे सति दिवैव कर्तव्यमिति ।

**तथाऽनुमन्त्रणम् ।**

दिवा कीर्त्यमित्यर्थः । तच्चोक्तार्थमेव ।

**एतद्याज्यानिदर्शनम् ।**

यदिदं याज्यायाः पुरस्तादागूर्[1]स्तस्य चाऽऽदौ याज्यान्ते च प्लुतिः स्यादुपरिष्टाच्च वषट्कारस्तस्य चाऽऽदौ प्लुतिस्ततोऽनुमन्त्रणम् । इत्येतद्याज्यास्वरूपनिदर्शनम् । अनुमन्त्रणस्य याज्यान्तर्भाववचनं तदन्तं वाग्यम[2]नार्थम् ।

**तनूनपादग्न आज्यस्य वेत्त्विति द्वितीयोऽन्यत्र वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्यः ।**

वसिष्ठादिभ्योऽन्येषामयं द्वितीयः ।

**नराशंसो अग्न आज्यस्य वेत्त्विति तेषाम् ।**

वसिष्ठादीनामयं द्वितीयः ।

**इळो अग्न आज्यस्य व्यन्त्विति तृतीयः ।**

सर्वेषामिति शेषः ।

**बर्हिरग्न आज्यस्य वेत्त्विति चतुर्थः । आगूर्य पञ्चमे स्वाहाऽमुं स्वाहाऽमुमिति यथावाहितमनुद्रुत्य देवता यथाचोदितमनावाहिताः स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्विति ।**

पञ्चम एवं कृत्वा तेनैव यजेदिति शेषः । [3]आगूर्येतिवचनं क्रमार्थम् । प्रतिदेवतं स्वाहाशब्दाभ्यासार्थं वीप्सावचनम् । यथावाहितग्रहणं प्रमादादावाहिताया अस्थानिन्या अपि ग्रहणार्थम् । अनावाहिता इत्येनन[4] याः स्थानिन्योऽपि देवताः प्रमादादनावाहिताः स्युस्तासामप्यत्र यथाचोदिते क्रमे निगमनार्थम् । प्रयाजाद्यनुयाजान्तेत्यादिषु यथाचोदितं

---

१ ख. ग. घ. ङ. च. झ. °स्तस्याश्वाऽऽ । २ ख. ग. °मनलाभार्थ° । ३ आगुरो विधानं क्रु° । घ. अगुरोर्विधानं क्र° । ४ क. घ. ङ. °न यथास्था° ।

तदीयानां देवतानां निगमनार्थं च । इदमेव प्रकारद्वयमनावाहितग्रहणाद्गृह्यते[1] नान्यथा । यथावाहितग्रहणेन पठितावाहना न गृह्यन्ते । तासां पाठादेव निगमनं नान्यथेत्यर्थः । स्वाहा देवा इति[2] यथासूत्रं मन्त्रशेषः ।

**आऽतो मन्द्रेण ।**

* इतः पूर्वं यत्तन्मन्द्रेण प्रयोक्तव्यम् । अत्र पूर्वाविधेरभावादन्यत्रैतत्पूर्वमग्निमन्थनादि यद्भवति तदपि मन्द्रेण प्रयोक्तव्यमिति गम्यते । त्रीणि वाचः स्थानानि मन्द्रमध्यमोत्तम-संज्ञकानि । तेषु च सप्त सप्त यमा भवन्ति । यमो नामावस्था । तत्र सप्तमयमेन वषट्कारः प्रयोक्तव्यः । तत एकावरोहेण याज्या । एवं सर्वत्रैकैकयमा[3]वरोहेण वषट्कारः प्रयो[4]क्तव्यः ।

**ऊर्ध्वं[5] च शंयुवाकात् ।**

मन्द्रेण प्रयोक्तव्यम् ।

**मध्यमेन हवींष्या स्विष्टकृतः ।**

सर्वत्राऽऽकारोऽभिविधावेव । अत्र त्वभिविधौ मर्यादायां वा भवत्यध्वर्युवशात् । अत्र स्विष्टकृन्मध्यमेनोत्तमेन वाऽध्वर्युवशात्प्रयोक्तव्यः । प्रयाजेभ्य ऊर्ध्वमा स्विष्टकृतो मध्यमेन प्रयोगः । हविर्ग्रहणं स्थानान्तरेऽपि प्रधानहविषां मध्यमस्वर एवेति ।

**उत्तमेन शेषः ।**

इळादिः स्विष्टकृदादिर्वा शंयुवाकान्तः शेष इत्युच्यते स उत्तमेन प्रयोज्यः ।

**अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याऽऽज्यभागस्यानुवाक्या । त्वं सोमासि सत्पतिरित्युत्तरस्य जुषाणो अग्निराज्यस्य वेत्त्विति पूर्वस्य याज्या जुषाणः सोम आज्यस्य हविषो वेत्त्वित्युत्तरस्य । तावागूर्याऽऽदेशं यजति ।**

तावित्याज्यभागसंप्रत्ययार्थम् । आगूर्येति देवतादेशस्य क्रमविधानार्थम् । यजतीति देवतादेशस्य याज्यया संधानार्थम् । तावाज्यभागसंज्ञकौ यागावागूर्यानन्तरं द्वितीयया विभक्त्या देवतामादिश्यादिश्य याज्यया संधाय यजतीत्यर्थः ।

**सर्वाश्चानुवाक्यावत्योऽप्रैषा अन्या+अन्वायात्याभ्यः ।**

---

* ग. पञ्चमप्रयाजपर्यन्तमादित आरभ्य । + अन्वायात्यस्वरूपमन्वायात्यशब्दचोदितत्वमेवेति । चातुर्मास्यसूत्रे वाजिनयागप्रवृत्तावपि विस्तरेण विचारितम् ।

---

१ च. °ते । अन्य° । २ ख. ग. °ति शेषो यथासूत्रमेव । आ° । ३ च. झ. °मारो° । ४ ख. ग. घ. झ. ङ. °क्तव्यम् । प्र° । ५ ख. ग. घ. ङ. झ. °योक्तव्यम् । ह° ।

या अन्वायातशब्देनानुनिर्वापशब्देन वा चोदितास्ता अन्वायात्याः । ताभ्योऽन्या या देवता अनुवाक्यावत्योऽप्रैषाश्च ताः सर्वा आदिश्य यष्टव्याः । अन्वायात्यानामनुवाक्यारहितानां च सप्रैषाणां चाऽऽदेशो न कर्तव्य इत्यर्थः । सर्वग्रहणमाज्यभागयोरपि सप्रैषयोरादेशनिवृत्त्यर्थम् ।

**सौमिकीभ्यश्च या अन्तरेण वैश्वानरीयं पत्नीसंयाजांश्च ।**

सौमिक्य[1]:, सोम उत्पन्ना न सोमे प्रयोज्या अपि । तत्रोत्पन्नानामेव तत्र भवत्वसंभवात् । वैश्वानरीयपत्नीसंयाजानां तच्छब्दचोदितानामेव ग्रहणं युक्तम् । अत एतस्मिन्नेवाऽऽ[2]सने वैश्वानरीयस्य यजतीत्येतदेव गृह्यते । पत्नीसंयाजैश्चरित्वाऽवभृथं व्रजन्ती[3]त्येतदेव च । अन्या इत्यनुवर्तते । अङ्गप्रधानरूपे सोमकर्मणि यौ[4] तौ वैश्वानरीयपत्नीसंयाजशब्दचोदितौ पदार्थौ तयोर्मध्ये यास्तत्रैवोत्पन्ना देवतास्ताभ्योऽप्यन्या देवता आदिश्य यष्टव्याः । न ता आदिश्य यष्टव्या इत्यर्थः ।

**एतौ वार्त्रघ्नौ पौर्णमास्याम् ।**

यावेतौ पौर्णमास्याज्यभागौ तौ वार्त्रघ्नसंज्ञौ भवत इत्यर्थः ।

सनिमित्तेयं संज्ञेत्याह—

**अनुवाक्यालिङ्गविशेषान्नामधेयान्यत्वं ततो विचारः[5] ।**

अनुवाक्यात एव विचारावगमोऽन्यत्वमित्यर्थः[6] ।

**नित्ये याज्ये ।**

उक्ते ए[7]वैते सर्वत्र याज्ये नानुवाक्यावदेतयोरन्यत्वमित्य[8]र्थः ।

**वृधन्वन्तावमावास्यायाम् । अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमिति । आऽऽतो वाग्यमनम् ।**

आदित आरभ्याऽऽज्यभागपर्यन्तं वाग्यमनं भवति ।

**अन्तरा च याज्यानुवाक्ये । निगदानुवचनाभिष्टवनशस्त्रजपानां चाऽऽरभ्याऽऽ समाप्तेः ।**

अत्राभिष्टवनसंस्तवनशस्त्रेति संस्तवनशब्दः पठितव्यः । आरभ्येतिवचनमन्यदपि यद्याज्यादिभ्यस्तदारभ्याऽऽ समाप्तेर्वाग्यमनसिद्ध्यर्थं होतुराधिकारात्कर्त्रन्तरस्यापि प्रापणार्थं चेति ।

---

१ क. ख. ग. घ. ङ. च. °मिकीभ्यः, सो° । २ ख. ग. °वावसाने । ३ ख. ग. न्तीति त एव पत्नीसंजायाजा गृह्यन्ते, एत° । ४ ख. ग. यौ वै° । ५ ङ. °चारः । विकारोऽन्य° । ६ क. ममेऽन्य° । ७ घ. ङ. च. एवेमे स° । ८ ख. ग. °र्थः । सति निमित्ते संज्ञेत्याह—वृ° ।

**अन्यद्यज्ञस्य साधनात् ।**

यज्ञसाधनवचसोऽन्यत्र वाग्यमनं नियम्यते । यज्ञसाधनवचो नाम यद्यज्ञसंपादनार्थं तद्द्रेषपरिहारार्थं च ।

**आपद्यातो देवा अवन्तु न इति जपेत् ।**

आपद्येति । नियममतिक्रम्येत्यर्थः ।

**अपि वाऽन्यां वैष्णवीम् ॥ ५ ॥**

अन्यामपीतिवचनं पूर्वोक्ताया अपि वैष्णवीत्वप्रतिपत्त्यर्थम् ॥ ५ ॥

**उक्ता देवतास्तासां याज्यानुवाक्या अग्निर्मूर्धा भुवो यज्ञस्यायमग्निः सहस्रिण इति वेदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एतामग्निषोमा सवेदसा युवमेतानि दिवि रोचनानीन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमान एन्द्रसानसिं रयिं प्रससाहिषे पुरुहूत शत्रून्महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महानिति यद्यग्नीषोमीय उपांशुयाजोऽग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभारेति ।**

उक्तसंकीर्तनं देवताविधिक्रमस्मरणार्थम् । तासां याज्यानुवाक्या वक्ष्यमाणा लिङ्गक्रमाभ्यां योजनीया इति । इदमप्युक्तसंकीर्तनस्य प्रयोजनं यत्र देवताविधानानन्तरमृचो विधीयन्ते तत्र तासां देवतानां ता एव याज्यानुवाक्या इति सार्वत्रिकोऽयं विधिरित्येतज्ज्ञापयितुम् । अयमग्निरिति गायत्र्यपि याज्यानन्तरमुक्तत्वाद्याज्यैव भवति । सा तु गायत्रीसामान्यादाधान एव भवति । यद्यग्नीषोमीय इति व्युत्क्रम्यान्ते पठन्संशयार्थमुक्तवानाचार्यः ।

**अथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या ।**

अथशब्दः प्रधानानन्तरं स्विष्टकृतो यागः स्यान्नाऽऽवाहनक्रमेणेति । अनुवाक्यावचनं सर्वत्र पूर्वमनुवाक्या पश्चाद्याज्येति प्रदर्शनार्थम् ।

**ये ३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरित्युक्त्वा षष्ठ्या विभक्त्या देवतामादिश्य प्रियाधामान्ययाळित्युपसंतनुयात् ।**

आगूर्विधानं निगदादाविव स्यान्नगादाविति । अग्निं स्विष्टकृतमितिवचनमाग्निं होत्रायशब्देनाऽऽदेशो न स्यादिति । षष्ठीविधानं द्वितीयाया निवृत्त्यर्थम् । देवतामादिश्य प्रियाधामानिशब्दमुपसंतनुयात् । अयाट्शब्दः पूर्वपठित एवोत्तरेण सूत्रेण तस्यास्तस्या देवतायाः पुरस्तादतिदेशरूपेण विधीयते । देवताया उपरिष्टाद्विधीयमानेन प्रियाधामानिशब्देन संधा-

१ झ. °धाय देवतान° । २ ङ. °पयति । अ° ।

नार्थे प्रियाधामान्ययाळिति संततं पठितम् । अतोऽत्र प्रतिदेवतमेक एवायाट्शब्दः प्रयोक्तव्यो न द्वितीय इति स्थितम् ।

**एवमुत्तरा अयाळयाळिति त्वेव तासां पुरस्तात् ।**

उत्तरासामयं विशेषः । अयाट्शब्द एव तासां पुरस्तात्प्रयोज्यो नाग्निशब्दोऽपीति । एतदुक्तं भवति—प्रथमदेवतायाः पुरस्तादयाळग्निशब्दः, उत्तरासामयाट्शब्द एव, सर्वासामुपरिष्टात्प्रियाधामानिशब्दः, सर्वे च संतता वक्तव्या इति ।

**आज्यपान्तमनुक्रम्य देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतरित्यनवानं यजति ।**

आज्यपान्तमिति प्रसिद्धक्रमसंग्रहादावाहनक्रमोऽत्रापि परिगृह्यते तेनास्थानिन्या निगमनमिहापि स्यात् । आज्यपान्तमेवमुक्त्वा तदनन्तरेण प्रियाधामानिशब्देन यक्षदिति संधाय यथासूत्रमुक्त्वा जुषतां हविरग्ने यदद्येत्यृचाऽनुच्छ्वसन्यजेत् । सर्वत्रानुच्छ्वासः कर्तव्योऽस्यां याज्यायाम् ।

**प्रकृत्या वा ॥ ६ ॥**

अर्धर्चे वोच्छ्वसेत् ॥ ६ ॥

**प्रदेशिन्याः पर्वणी उत्तमे अञ्जयित्वौष्ठयोरभ्यात्मं निमार्ष्टि ।**

प्रदेशिनी नामाङ्गुलिविशेषः । पर्वणी सन्धी । उत्तमे इति । अग्रतो द्वे पर्वणी इत्यर्थः । अध्वर्युणा ते पर्वणी अञ्जयित्वाऽभ्यात्ममात्माभिमुखं पाणितलं कृत्वौष्ठयोरवागपवर्गं निमार्ष्टि ।

**वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामीत्युत्तरमुत्तरे मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामीत्यधरमधरे ।**

अनेनेदमस्मिन्नित्यनयोरर्थः[1] ।

**स्पृष्ट्वोदकमञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादस्या उदगङ्गुलिं पाणिमुपधायावान्तरेळामवदापयीत ।**

द्विहस्तसंयोगोऽञ्जलिस्तं कृत्वा तेनेळां गृहीत्वा सव्ये पाणौ कृत्वा निधायेत्यर्थः । अस्या इति । इळाया इत्यर्थः । या हस्तेऽवदीयते साऽवान्तरेळा । अवदापयीताध्वर्युम् ।

---

१ क. ङ. च. °नेनैकस्मि° ।

**अन्तरेणाङ्गुष्ठमङ्गुलीश्च स्वयं द्वितीयमाददीत ।**

अङ्गुल्यङ्गुष्ठयोर्मध्येन प्रदेशेन स्वयमिळाया अवान्तरेळामाददीत ।

**प्रत्यालब्धामङ्गुष्ठेनाभिसंगृह्य[1] ।**

प्रत्यालब्धां स्पृष्टामध्वर्युणेत्यर्थः[2] ।

**प्रत्याहृत्याङ्गुलीरमुष्टिं कृत्वा दक्षिणत इळां परिगृह्याऽऽस्यसंमितामुपह्वयते प्राणसंमितां वा ।**

अमुष्टिं कृत्वाऽङ्गुलीभ्यो बहिरङ्गुष्ठमकृत्वेत्यर्थः । सव्ये हस्ते निहितामिळां दक्षिणेन हस्तेन गृहीत्वाऽवान्तरेळातो[3] दक्षिणतः परिगृह्याऽऽस्यसंमितां प्राणसंमितां वेळां कृत्वा तामुपह्वयते । प्राणसंमितां नासिकासंमितामित्यर्थः ।

केन मन्त्रेणेत्याह—

**इळोपहूता सह दिवा बृहताऽऽदित्येनोपास्माँ इळा ह्वयतां सह दिवा बृहताऽऽदित्येनेळोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोपहूता सह पृथिव्या रथन्तरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथिव्या रथन्तरेणाग्निना उपहूता गावः सहाशिर उपमां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोपमां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखाभक्ष उप मां सखाभक्षो ह्वयतामुपहूतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयतामित्युपांश्वथोच्चैः । इळोपहूतोपहूतेळोपास्माँ इळा ह्वयतामिळोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इति ।**

इळोपहूतेति[4] सह दिवेत्यादिना तस्मिन्नुपहूत इत्यन्तेन । इत्युपांश्वित्यनेन निगदाना तन्त्रस्वरत्वादप्राप्तमुपांशुत्वं विधीयते । तेनैकश्रुत्यमनुपरतमेवेति स्थितम् । अथोच्चैरित्यने-

---

१ क. ख. ग. ङ. च. °ह्य प्रत्याहृत्य । प्रत्याल° । २ क. ख. ग. ङ. च. °र्थः । अङ्गु° । ३ च. घ. झ. °रेळान्तो द° । ४ ख. झ. ग. °तेत्या° ।

नोत्तरस्य निगदभागस्य तन्त्रस्वरस्यानपगमः[1] कथ्यते । प्राप्तत्वान्नापूर्वं विधीयते[2] । अतस्तस्मिन्ननुच्यमाने संशयः स्यान्निगदमध्य उपांशुत्वमुच्यमानं किं सर्वस्य निगदस्य, आहोस्वित्पूर्वस्य भागस्य परस्य वेति । अस्मिंस्तूच्यमाने पूर्वस्यैव भागस्योपांशुत्वं विहितं भवति नोत्तरस्य भवतीति नात्र संशयः । इळोपहूता मनुष्या देवी देवपुत्रे इति त्रीण्यवसानानि ।

**उपहूयावान्तरेळां प्राश्नीयादिळे भागं जुषस्व नः पिन्वगाजिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रास्व तस्य नोदास्तस्यास्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः सर्वपुरुषा इति वा ॥ ७ ॥**

उपहूयेत्यनुच्यमाने हविर्जुषन्तामिति निगदान्तः स्यात् । तस्मिन्नुपहूत इत्यवान्तरेळाभक्षणमन्त्रः स्यादिळे भागमिति वा, अनयोर्विकल्पार्थो वाशब्दः । सर्वपूरुषाः सर्वपुरुषा इति पदद्वयविशिष्टश्च मन्त्र इत्येते दोषाः स्युः । एतस्मिंस्तूच्यमाने तस्मिन्नुपहूत इत्येवमन्तो निगदः स्यात् । पूर्वं[3] इति शब्दो निगदैकदेशः स्यात् । वाशब्दश्च मन्त्रावयवविकल्पार्थ एव स्यात् । सर्वपुरुषा इत्यन्त[4] इति शब्दान्नैतावानेव च मन्त्रः स्यादित्येवं सर्वं समञ्जसं भवति । होताऽवान्तरेळां भक्षयित्वेळामपि भक्षयेत् । सर्वे च सयजमाना इळां भक्षयेयुः । इळा सर्वेषामिति पशुविभागे दर्शनात्, शाखान्तरे च यजमानपञ्चमा इळां भक्षयेयुरिति दर्शनाच्च ॥ ७ ॥

**मार्जयित्वाऽनुयाजैश्चरन्ति ।**

मार्जनमिळाभक्षणाङ्गम् । पित्र्यायामिळाभक्षणाभावे मार्जनस्याप्यभावदर्शनात् । भक्षयितुर्मार्जनेन दृष्टश्चोपकारोऽस्ति शुद्धिर्नाम । अत इळान्तकर्मस्वपि मार्जनमस्त्येव । नैतदनुयाजाङ्गं चतुर्धाकरणदक्षिणादानाभ्यां व्यवहितत्वात् । पित्र्यायामनुयाजसत्तायामपि तदभावदर्शनाच्च । अतो मार्जयित्वाऽनुयाजैश्चरन्तीतिवचनं चतुर्धाकरणदक्षिणादानयोरनित्यत्वसूचनार्थम् । तथा ह्यनाग्नेयेषु चतुर्धाकरणं नास्ति । अङ्गभूतेषु दक्षिणादानं नास्तीति ।

**परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनम् ।**

आहवनीयस्य परिस्तरणैः । भक्षणार्थं निष्क्रम्य पुनः प्रविष्टानां प्रथमप्राप्तत्वात्तेषामासेचयतेऽपोऽर्थात्सहकारिणा ।

---

१ स्वरादप° क. झ. °स्वरानप° । २ क. घ. ङ. °ते । तस्मि° । ३ च. झ. पूरुषा इ° । ४ ख. ग. घ. झ. °त्यन्नेति° । ५ च. °र्नान्त इ° ।

देवादयोऽनुयाजाः ।

देवादयो देवशब्दादय इत्यर्थः । पुनरनुयाजग्रहणमुत्तरस्य सूत्रस्य प्रयाजानुयाजार्थत्वाय ।

वीतवत्पदान्ताः ।

वीतवत्पदान्तत्वं प्रयाजानुयाजयोर्गुणः स्यात् ।

त्रयः ।

तेऽनुयाजास्त्रयो भवन्ति ।

एकैकं प्रेषितो यजति ।

देवान्यजेति प्रथमसंप्रैषस्य सर्वार्थत्वे सत्यपि पुनः पुनः प्रेषित एव यजेत् । त इमेऽनुयाजाः ।

**देवं बर्हिर्वसुवने वसुधेयस्य वेतु । देवो नराशंसो वसुवने वसुधेयस्य वेतु । देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्र[१]ः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्नेयान्देवानयाड्याँ अपि प्रेर्ये ते होत्रे अमत्सत तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहीत्यनवानं वा ॥ ८ ॥**

अमत्सतेत्यत्रावसाय वाऽनवसाय वा यजेत् ।

**सूक्तवाकाय संप्रेषित इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्यो रोमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगयीजीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावारीत्यापाशं भुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदीत्यवसाय प्रथमया बिभक्त्याऽऽदिश्य देवतामिदं हविरजुषतावीवृधत महो ज्यायोऽकृतेत्युपसंतनुयात् ।**

असि, स्ताम्, अभयंकृतौ, विदि, अकृतेति च । अक्रातामक्रतेत्येवम् । यजमानस्य नामनी । मानुषा इत्यवसानानि सर्वाणि निगदे । अत्र तु प्रथमाविधानं द्वितीयानिवृत्त्यर्थम् । आविदीत्यत्रावसाय प्रथमया विभक्त्याऽऽदिश्य देवतामिदं हविरित्युपसंतनुयात् ।

एवमुत्तराः ।

उत्तरा अपि देवता आदिश्येदं हविरित्येवमुपसंतनुयात् ।

---

१ क. च. मन्द्रः ।

**अक्रातामक्रतेति यथार्थम् ।**

द्विदैवतबहुदैवतयोरेवमूहः कर्तव्यः । यथार्थवचनमर्थवशेनाभिधानमित्येवमर्थम् ।

**उक्तमुपांशोः ।**

आवह स्वाहेत्युक्तमित्यर्थः । उक्तस्य वचनमस्य निगदस्य पशावपीष्टिवदेव प्रयोगार्थं न सूक्तवाकप्रैषवदजुषतादीनामुपांशुत्वं भवति ।

**आवापिकान्तमनुद्रुत्य देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रताग्निर्होत्रेणेदं हविरजुषतावीवृधत महोज्यायोऽक्रत । अस्या- मृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानोऽसावसावित्यस्याऽऽदिश्य नामनी उपांशु संनिधौ गुरोः । आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवारासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसः स्पातामेह गतिर्वामस्येदं नमो देवेभ्य इति ॥ ९ ॥**

आवापिकान्तमित्येतदावापिकदेवताक्रमप्राप्त्यर्थम् । तेनास्थानिन्यत्रापि निगद्यते । देवा आज्यपा इति यथासूत्रम् । असावसावित्यत्र यजमाननामनी प्रथमया विभक्त्या निर्दिशेत् । सांव्यवहारिकं[1] नाक्षत्रं च । होतुर्गुरुश्चेद्यजमानः स्यात्तत्संनिधावुपांशु नामनी ब्रूयात् ॥ ९ ॥

**शंयुवाकाय संप्रेषितस्तच्छंयोरावृणीमह इत्याहानुवाक्यावदप्रणवाम् ।**

अनुवाक्यावद्वचनमैकश्रुत्यप्रापणार्थम् । अप्रणवामिति प्रणवो निषिध्यते ।

**वेदमस्मै प्रयच्छत्यध्वर्युः ।**

वेदग्रहणकालज्ञापनार्थमेतत्सूत्रम् । अतोऽध्वर्युणा दत्ते गृह्णीयात् । अदत्तेऽपि स्वयमेव गृह्णीयात् ।

**तं गृह्णीयाद्वेदोऽसि वेदो विदेयेति ।**

तमिति विस्पष्टार्थम् । यदा द्वौ दद्यात्तदा तं तं गृह्णीयादित्यर्थः । यदि द्वौ युगपद्- द्यात्तदोहेन मन्त्रं ब्रूयाद्वरुणप्रघासादिषु ।

**उदायुषेत्येतेनोपोत्थाय पश्चाद्गार्हपत्यस्योपविश्य सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमित्याज्येन यजन्ति ।**

---

१ ख. ग. सांव्याव° । घ. संव्यव° । २ घ. °त्रं वा हो° ।

एतेनेतिवचनं प्रकृतिविकाराभावेऽपि कृत्स्नस्य मन्त्रस्य प्रापणार्थम् । आज्यवचनं यत्राऽऽज्येन सोम इज्यते तत्रैते याज्यानुवाक्ये भवतो नान्यहविष्के सोम इति । यजन्तीतिवचनं याग एव तासां देवतानां न निगमेष्वनुवृत्तिरिति ।

**आप्यायस्व समेतु ते सं ते पयांसि समुयन्तु वाजा इह त्वष्टारमग्रियं तन्नस्तुरीपमधपोषयित्नुर्देवानां पत्नीरुशतीरवन्तु न इति द्वे अग्निर्होता गृहपतिः स राजा हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः ।**

इदं संज्ञाविधानार्थम् ।

**अथ प्रजाकामो राकां सिनीवालीं कुहूमिति प्राग्गृहपतेर्यजेत ।**

अथशब्दः पक्षान्तरपरिग्रहार्थः । अथ चेद्यजमानः प्रजाकामः स्यात्तदैवैता देवता यजेतेति । प्राग्गृहपतेरिति देशविधानेन पूर्वाभिः समुच्चयं दर्शयति ।

**राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये ।**

याज्यानुवाक्यावचनं प्रजाकामो यजेतेत्यनेन यजमाने संनिहितेऽपि होतैव कर्ता स्यान्न यष्टा स्यादिति । याज्यानुवाक्ययोर्होतृकर्तृत्वमन्यतः प्रसिद्धमिति ।

कुहूमहमितिप्रतीके गृहीतेऽपि स्वयमेव पठति—

**कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम । कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । संदाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधात्विति । आज्यं पाणितलेऽवदापयीतेळामुपहूय सर्वां प्राश्नीयात् ।**

पर्वाञ्जनाद्युपह्वानान्तं कार्यम् । नात्रावान्तरेळा । पाणितलस्थमाज्यमिळेत्युच्यते । ततः सर्वां प्राश्नीयादित्युच्यते ।

**शंयुवाको भवेन्न वा ॥ १० ॥**

आज्येळाया ऊर्ध्वं शंयुवाको भवति न भवति वेत्यध्वर्यूणां संस्थाप्रकाराः सन्तीति तत्सूचनार्थमेतत्सूत्रं यदि स्याद्धोताऽपि तथा कुर्यादित्येवमर्थम् ॥ १० ॥

---

**वेदं पत्न्यै प्रदाय वाचयेद्धोताऽध्वर्युर्वा वेदोऽसि वित्तिरसि विदेयकर्मासि करणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वेति ।**

---

१ च. °कारभा° ।

पत्न्यै वेदं प्रदाय तां वाचयति होताऽध्वर्युर्वा वेदोऽसीत्यादिकामाय त्वेत्येवमन्तं मन्त्रम् । वाचनमन्त्रस्योच्चैः प्रयोगोऽर्थात्सिध्यति । कार्यं तु लिङ्गजनितमेव ।

**वेदशिरसा नाभिदेशमालभेत प्रजाकामा चेत् ।**

यदि पत्नी प्रजा मे स्यादिति कामयेत तदा वेदस्य जानुसदृशेन प्रदेशेन पत्नी स्वनाभिमालभेत । कामाभावेऽपि वाचनं भवत्येव ।

**अथास्या योक्त्रं[1] विचृतेत्प्र त्वा मुञ्चामि वरुणस्य पाशादिति ।**

अथेति संबन्धार्थः । यद्यनन्तरं योक्त्रविमोकः स्यात्तदैव वाचनमपीति कामाभावे वाचनानन्तरं योक्त्रविमोकः स्यान्न त्वालम्भनमपीति । अस्या इति योक्त्रविमोचनं होतृकर्तृकमिति दर्शयति ।

**तत्प्रत्यग्गार्हपत्याद्द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि वेदतृणानि करोति ।**

तद्योक्त्रं द्विगुणं कृत्वा गार्हपत्यात्प्रत्यक्प्राक्पाशं प्राङ्मूलाग्रप्रदेशमित्यर्थः, तन्निदध्यात् । योक्त्रस्य मूलप्रदेशः पाशः । पाशशब्दोऽत्र मूलाग्रयोः प्रदर्शनार्थः । अस्य योक्त्रस्योपरिष्टाद्वेदतृणान्युदगग्राणि निदध्यात् ।

**पुरस्तात्पूर्णपात्रं संश्लिष्टं वेदतृणैः ।**

तृणेभ्यः पुरस्तात्तृणैः संश्लिष्टं * पूर्णपात्रं निदध्यात् ।

**अभिमृश्य वाचयेत्पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठा इति ।**

अभिमृश्याभिमृशन्तीत्यर्थः । तां चाभिमृशन्तीं वाचयेत्प्रत्यगाशीष्ट्वान्मन्त्रस्य+ ।

**अथैनां पूर्णपात्रात्प्रतिदिशमुदकमुदुक्षन्तीमुदुक्षन्तीं वाचयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा ।**

पूर्णपात्रादुदकं गृहीत्वा तदुदुक्षन्तीं चैवंकुर्वतीं वाचयति । अत्रोदुक्षणमकुर्वत्या वाचने मन्त्रलिङ्गस्य विरोधाभावादुदुक्षणमपि विधीयते । पूर्वत्र तन्मन्त्रलिङ्गादेवाभिमर्शनमकुर्वत्या

* घ. पात्रपूर्णमुदकं पूर्णपात्रमिति रुद्रदत्तः । + क. मन्त्रगताशिषः प्रत्येकगामित्वात् ।

१ झ. °र्थः । तेन का° ।

मन्त्रोच्चारणं न संभवतीति न तस्या अभिमर्शनं विहितम्। मार्जयन्तामिति वेति पदद्वयमात्रविकल्पः।

**अथास्या उत्तानमञ्जलिमधस्ताद्योक्त्रस्य निधायाऽऽत्मनश्च सव्यं पूर्णपात्रं निनयन्वाचयेन्माऽहं प्रजां परासिचं या नः सयावरी स्थन। समुद्रे वो निनयानि स्वं पाथो अपीथेति।**

योक्त्रस्याधस्तात्पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन्माऽहं प्रजामिति तां वाचयेत्। यथा तन्निनीयमानमुदकं हस्तेष्वेव पतेत्तथा निनयेत्। प्राङ्मुखत्वमत्र नाऽऽद्रियते, अधस्तादञ्जलिनिधानस्यादृष्टार्थत्वप्रसङ्गात्। अत्र पत्नीद्वित्वबहुत्वे सर्वासां वाचनं कर्तव्यम्। प्रतिपत्ति योक्त्रविमोचनमावर्तते। सर्वेषां योक्त्राणां द्विगुणीकृत्य निधानं भवति। निनयनेन सर्वासां[१] स्वयोक्त्रसंपृक्तोदकलाभायोदुक्षणेऽपि सर्वासामन्वयः। वाचने वाच्यमन्त्रलिङ्गजनितकार्याभावेऽपि वाच्यस्य पुरुषस्यैवायं संस्कार इत्यवगन्तव्यम्। य एते पत्नीसंबद्धाः[२] पदार्थास्ते सर्वे परस्परं संबद्धा अथशब्देन तच्छब्देनान्येन वा। अतस्ते सर्वे सहैव कर्तव्या नैकैकशः।

**वेदतृणान्यग्रे गृहीत्वाऽविधून्वन्संततं स्तृणन्सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन्नजसो भानुमन्विहीति।**

वेदबन्धस्य मुक्तत्वात्तृणानीत्युच्यन्ते[३]। तानि दक्षिणेन हस्तेनाग्रप्रदेशे गृहीत्वाऽविधून्वन्वि+ष्वक्त्वेनाकम्पयन्गार्हपत्यादारभ्य सव्येन हस्तेन संततं स्तृणन्नाहवनीयं गच्छति। तन्तुं तन्वन्नित्यास्तरणमन्त्रो न गमनमन्त्रः। ततो मन्त्रान्ते स्तरणारम्भः।

**शेषं निधाय प्रत्यगुदगाहवनीयादवस्थाय स्थाल्याः स्रुवेणाऽऽदाय सर्वप्रायश्चित्तानि जुहुयात्स्वाहाकारान्तैर्मन्त्रैर्न चेन्मन्त्रे पठितः।**

शेषं निधायेतिवचनात्तानि सर्वाणि न स्तरितव्यानि नियमेन शेषितव्यानीति गम्यते। आज्यस्थाल्याः स्रुवेणाऽऽज्यमादायाऽऽहवनीये स्रुवेणैव जुहुयात्। आहवनीयात्प्रत्यगुदगवस्थाय सर्वप्रायश्चितानीति संज्ञैषां होमानाम्। स्वाहाकारान्तैर्मन्त्रैर्मन्त्रान्ते स्वाहाकारं कृत्वेत्यर्थः। न चेन्मन्त्रे यत्र क्वापि स्वाहाकारो न पठितस्तदाऽन्ते स्वाहाकारः कर्तव्यः। यत्र क्वापि पठितश्चेत्स एव प्रदानार्थो भवति।

**यत्किंचाप्रेषितो यजेदन्यत्रापि।**

यः कश्चनास्मिञ्शास्त्रे देवतोद्देशेन द्रव्यत्यागात्मको व्यापारो यागो होमोऽभ्याधानं बलिहरणादयो वा मन्त्रेण साध्यते[४] तत्र सर्वत्र स्वाहाकारः कर्तव्य इति सूत्रार्थः।

---

\+ क. समन्तात्वेन

---

१ क. च. °सां सयो°। २ क. घ. च. °बन्धाः प°। ३ च. °च्यते। ता°। ४ ख. च. ग. ङ. °ध्यन्ते त°।

अन्यत्रेतिवचनं गार्ह्येष्वपि प्रापणार्थम् । अप्रैषित इति वषट्कारसमुच्चयनिवृत्त्यर्थम् ।

**एवंभूतोऽव्यक्तहोमाभ्याधानोपस्थानानि च ।**

एवंभूतो[1] नामैवंप्रकारः । आहवनीयात्प्रत्यगुदग्देशे स्थित आज्यं स्रुवेणाऽऽदायाऽऽहवनीय इत्येवंप्रकारविशिष्टः कर्तैवंभूत इत्युच्यते । विशेषणपरोऽयं निर्देशः । अव्यक्तशब्देनाविहितविशेष उच्यते । यत्र होमाभ्याधानोपस्थानान्यविहितविशेषाणि[2] विधीयन्ते तत्रानेन प्रकारेण कर्तव्यानीत्यर्थः । एकदेशविशेषे चाप्यपेक्षितमात्रमस्माद्गृह्यते ।

**अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयासावयसा कृतोऽयासन्हव्यमूहिषे या नो धेहि भेषजं स्वाहा । अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति ।**

एकमन्त्राणि कर्माणीति न्यायेन द्वाभ्यां द्वे आहुती होतव्ये । व्याहृतिभिरितिनिर्देशं कृत्वा पुनः पठितेन[3] ज्ञायते व्याहृत्युपदेशेन[4] क्रमेणैवैते चत्वार इति ।

**हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रम्यानियमः ।**

स्यादिति शेषः । हुत्वेतिवचनं संस्थाजपेन होमस्य संबन्धार्थं यत्र संस्थाजपोऽस्ति तत्र प्रायश्चित्तहोमोऽपि भवतीति । अतः खण्डेष्टिष्वपि संस्थाजपस्य प्रयोज्यत्वात्प्रायश्चित्तहोमोऽपि प्रयोज्य एव । उपस्थायान्ते तीर्थेनैव निष्क्रामेत् । निष्क्रम्यानियम इति अर्थलुप्ता नियमा इत्यर्थः । अर्थलुप्तत्वे सत्यप्यनियमविधानं कर्ममध्येऽपि तीर्थेन निष्क्रान्तस्याव्यावृत्त्यादयो नियमा न भवन्तीति । तेन प्रयोगमध्ये मार्गान्तरेण निष्क्रान्तस्यापि नियमा भवन्त्येवेति विज्ञायते ।

**ओं च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नम इति संस्थाजपः ।**

अन्वर्थसंज्ञेयं तेनायं सोमेष्टिषु न भवति ।

**इति होतुः ॥ ११ ॥**

इतिशब्देनात्रैतावत्त्वमुच्यते, एतावदेव होतुर्नान्यदिति । होतृग्रहणं होतुरेवैतावत्, आग्नीध्रस्यान्यदपीति ॥ ११ ॥

---

१ ग. घ. ङ. च. झ. °वं भावो ना° । २ ख. ग. °शेषणानि वि° । ३ ख. ग. झ. पठति तेन । ४ ङ. झ. °शेऽनेन । ५ ख. ग. °मा भ° । ६ ख. य. ष्टिष्वपि न । ७ ख. ग. °वत्तेनाऽऽग्नी° ।

**अथ ब्रह्मणः ।**

अथशब्दोऽधिकारार्थः । इदानीं ब्रह्मणोऽपि विधयो वक्ष्यन्त इत्यर्थः ।

**होत्राचमनयज्ञोपवीतशौचानि ।**

व्याख्यातानीत्यर्थः । स्नानाचमनादिना शुचिर्भूत्वा ब्रह्मत्वं करिष्यामीत्यागुरितो विहारं [1] प्रविशन्प्राङ्मुख आचमनं कुर्यात् । कर्माङ्गत्वाद्यज्ञोपवीतग्रहणम् । पैतृकमानुषयोरपि कर्मणोर्वचनादृते यज्ञोपवीत्येव स्यादिति । शौचग्रहणं [2] क्रत्वर्थमप्यशुचित्वसंपादि यत्तद्विहाराद्बहिः कर्तव्यमिति । एतच्चाप्राप्तं विधीयते । अय*मपि तीर्थेन विहारं प्रपन्न इति प्राक्केष्टताऽस्य [3] नेष्यते [4] । यज्ञमना इति कर्माभिमुख्य एव यज्ञमनस्त्वोपपत्तेः । अङ्कधारणमुपवेशाङ्गतया प्राप्तमदृष्टार्थतापरिहारायैव यावदासनमनुवर्तते । तत्र चेत्कर्मेत्यस्यापि कर्मसंबन्धादव्यावृत्तिरविशिष्टैव । दक्षिणाङ्गता च तत्र चेत्कर्मेत्यस्योत्तराङ्गत्वेनाविशेषादस्यापि भवति ।

**नित्यः सर्वकर्मणां दक्षिणतो ध्रुवाणां व्रजतां वा ।**

अन्यतः प्राप्तस्य ब्रह्मणोऽयं नियम उच्यते । ध्रुवाणां व्रजतां च पुरुषाणां यानि कर्माणि तेषां दक्षिणतो नित्यो भवेत् । प्राकृतानामप्राकृतानां च ध्रुवाणां नित्यं दक्षिणत्वं ध्रुवेणैव कर्तुं शक्यत इति ध्रुवेषु ध्रुव एव भवेत् । व्रजतां कर्मसु नित्यं दक्षिणत्वाय व्रजन्नेव भवेत् । ध्रुवाणां व्रजतामिति कर्तृविशेषणं न कर्मणाम् । नित्यत्वमत्रोपक्रमप्रभृत्या परिसमाप्तेर्दक्षिणत्वसिद्ध्यर्थम् । वाशब्दः समुच्चयार्थः । क्वचित्कर्मणि कश्चित्तिष्ठति कश्चिद्व्रजति तत्र भूयसां धर्मः परिगृह्यते ।

**बहिर्वेदि यां दिशं व्रजेयुः सैव तत्र प्राची ।**

यत्र बहिर्वेदि वसतीवरीग्रहणादि कर्तुं यां दिशमभिमुखा व्रजन्ति ऋत्विजस्तत्र तामेव दिशं प्राचीं कृत्वा दक्षिणतो भवेत् । सैव तत्रेतिवचनात्तिष्ठतामभिमुखैत एव प्राची भवेत् ।

**चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पः ।**

अमन्त्रेषु कर्मसु स्थानमासनं वा भवेत् । वाशब्देनैव विकल्पे सिद्धे विकल्पवचनमव्यवस्थया विकल्पसिद्ध्यर्थम् । तेनैकस्मिन्नपि प्रयोगे क्वचिदासनं क्वचित्स्थानमिति लभ्यते ।

---

* घ. पुस्तकान्तरे तु नायं तीर्थेनेति पाठः ।

---

१ ख. ग. विश्य प्रा° । २ ख. ग. झ. °णं तु क्र° । ३ ख. ग. झ. °स्य प्राप्ताऽपि ने°, ४ ख. ग. झ. °ते । तत्र हेतुर्यज्ञमना इत्युत्तरग्रन्थः।य। ५ च. °ङ्गताया च । ६ ख. ग. ङ. झ. नाद्बहिस्तिष्ठ° । ७ ख. ग. घ. ङ. च. झ. °ख ए° ।

**तिष्ठद्धोमाश्च येऽवषट्काराः ।**

तिष्ठतां ये होमा वषट्काररहिताश्च तेषु च स्थानमासनं वा भवेत् ।

**आसीतान्यत्र ।**

अन्यत्रेति । अनन्तरसूत्रद्वयविषयादन्यत्रेत्यर्थः ।

**समस्तपाण्यङ्गुष्ठोऽग्रेणाऽऽहवनीयं परीत्य दक्षिणतः कुशेषूपविशेत् ।**

समस्तौ पाणी अङ्गुष्ठौ च यस्य सोऽयं समस्तपाण्यङ्गुष्ठः । सव्येन पाणिना दक्षिणं पाणितलप्रदेशं गृह्णीयात् । दक्षिणेन सव्याङ्गुष्ठम् । एवंकृते पाणी अङ्गुष्ठौ च समस्तौ भवतः ।

एवंभूतोऽग्रेणाऽऽहवनीयं परीत्य तस्य दक्षिणतः कुशेषूपविशेत् । निरसनं कृत्वा कुशग्रहणात्सति संभवे त एवाऽऽसने प्रकल्पन्ते । दक्षिणत इति पुनर्वचनमाहवनीयस्यैव दक्षिणतो न क्रियमाणस्य कर्मण इत्येवमर्थम् ।

**बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपायेत्युपविश्य जपेत् ।**

उपविश्यग्रहणं सकृदुपविश्य पुनरपि कर्मण एव दक्षिणतो न भवेत् । आ समाप्तेस्तत्रैवोपविशेदिति ।

**एष ब्रह्मजपः सर्वयज्ञतन्त्रेषु साग्नौ यत्रोपवेशनम् ।**

एष मन्त्रो ब्रह्मजपसंज्ञो भवति । स चातिदेशशब्दमनपेक्ष्य सर्वेषु यज्ञेषु भवति । तन्त्रग्रहणं पाकयज्ञेष्वपि प्रापणार्थं पाकयज्ञानामेतत्तन्त्रमिति तन्त्रशब्दत्वात्तेषामिति । साग्नौ यत्रोपवेशनमित्यग्निप्रणयनेन साग्निकत्वे कर्मणः प्रतिपन्ने यत्रोपवेशनं विहितं तत्रायं जपो भवति । एतदुक्तं भवति—एष जपः सर्वेषु यज्ञेषु प्रविष्टमात्रे भवेत् । अग्निप्रणयनवत्स्वग्निप्रणयनान्त एव भवति ।

**उपविष्टमतिसर्जयते ।**

अनुज्ञालाभार्थं[३] मन्त्रेणाऽऽमन्त्रयतेऽध्वर्युरित्यर्थः । उपविष्टग्रहणं प्रवेशकालज्ञापनार्थम् । यस्मिन्काल उपविष्टस्योपवेशनानन्तरमध्वर्युणाऽतिसर्जनं संभवति तस्मिन्काले प्रविशेदित्यर्थः ।

**ब्रह्मन्नपः प्रणेष्यामीति श्रुत्वा भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वों प्रणयेत्यतिसृजेत्सर्वत्र ।**

अध्वर्युमन्त्रपाठेऽप्शब्दसहितेऽपि याच्ञावचने प्रणयेत्येवानुजानीयान्नापः प्रणयेत्यपि[४] ।

---

१ ख. ग. झ. °कल्प्यन्ते । २ च. झ. °ग्नित्वे । ३ ख. ग. °भार्थभनेन म° । ४ ख. ग. °येत्येतदपि । ङ. झ. °येत्येवम् । श्रु° ।

श्रुत्वेतिवचनं श्रुत्वा पश्चाज्जपेन्न सहेति। जपित्वेति पूर्वस्योपांशुत्वायोत्तरस्य च तन्त्रस्वरत्वाय। अतिसृजेदनुजानीयात्। सर्वत्रेति सर्वेष्वनुज्ञावचनेष्वस्य विधेः प्रापणार्थम्।

**यथाकर्मत्वादेशाः।**

प्राप्तस्यायं विशेषविधिः। यस्मै कर्मणेऽनुज्ञामिच्छति तदेवानुजानीयान्न प्रणयेत्येव। यथाकर्म। कर्मानुरूपमादेशाः कर्तव्या इत्यर्थः।

**प्रणवान्तुच्चैः।**

उत्तरविवक्षार्थम्।

**ऊर्ध्वं वा प्रणवात्।**

उच्चैर्भवतीत्यर्थः।

**अत ऊर्ध्वं वाग्यत आस्त आ हविष्कृत उद्वादनात्।**

प्रणीताप्रणयनोपलक्षितात्कालादूर्ध्वमा हविष्कृन्मन्त्रोच्चारणाद्वाग्यतो भवति। आस्त इति वचनममन्त्रेष्वपि कर्मस्वस्मिन्नवसर आसनमेवेति नियमार्थम्।

**आ मार्जनात्पशौ।**

पशावग्निप्रणयनमारभ्याऽऽचात्वालमार्जनाद्वाग्यतो भवेत्।

**सोमे घर्मादि चातिप्रैषादि चाऽऽ सुब्रह्मण्यायाः।**

घर्ममारभ्यातिप्रैषं चाऽऽरभ्याऽऽ सुब्रह्मण्याया वाङ्नियमः। सोमग्रहणं पश्वधिकारात्पशुनामक एव सोमे स्यादिति तन्निवर्त्य सर्वसोमेषु प्रापणार्थम्।

**प्रातरनुवाकाद्याऽन्तर्यामात्।**

प्रातरनुवाकलक्षितात्कालादूर्ध्वमाऽन्तर्यामग्रहयागात्।

**हरिवतोऽनुसवनमेळायाः।**

तथा सवनत्रयेऽपि पुरोळाशप्रचारमारभ्याऽऽ पुरोळाशेळायाः।

**स्तोत्रेष्वतिसर्जनाद्या वषट्कारात्।**

स्तोत्रादौ स्तुध्वमित्युपाकरणम्। तदाद्या शस्त्रयाज्यावषट्काराद्वाग्यतो भवेदित्यर्थः।

**ओद्दृचः पवमानेषु।**

पवमानस्तोत्रेषूपाकरणादारभ्याऽऽ, उद्दृचः। उद्दृगिति समाप्तिरुच्यते।

**यच्च किंच मन्त्रवत्।**

सर्वत्र मन्त्रवति कर्मणि वाग्यमनं भवति।

---

१ ख. ग. °त्येवं। य°। २ ख. ग. न्निर्वर्त्य स°। ३ ङ. °महोमादित्यर्थः। ह°। ४ ख. ग. °रानुमन्त्रणाद्वा°। ङ. °रादनुमन्त्रणाद्वा°।

**होत्रा शेषः ।**

उक्तादन्यो यो विषयस्तत्राप्यस्य[1] वाग्यमनं होतृतुल्यं भवति । आतो वाग्यमनमित्यादिर्नियमोऽस्याप्यधिक्रियत इत्यर्थः ।

**आपत्तिश्च ।**

आपद्यातो देवा अवन्तु न इति जपेदित्युक्तत्वादेतत्प्रायश्चित्तमापत्तिरित्युच्यते । अनन्तरोक्तैर्नवाभिः सूत्रैर्विहितस्य वाग्यमनस्य भ्रेष एतदेव प्रायश्चित्तमित्यर्थः । अन्यत्रैव[2] भूरित्याहुतिः ।

**यत्र त्वग्निः प्रणीयतेऽपि ससोमे तदादि तत्र वाग्यमनम् ।**

विहित एव वाग्यमने तदादित्वमात्रमत्र विधीयते तुशब्दसमन्वयात् । अपि ससोमे सोमसहितेऽपि । अग्नीषोमीयप्रणयनेऽपीत्यर्थः[3] । तत्रवचनं यस्मिन्नहन्यग्निः प्रणीयते तस्मिन्नेवाहनि कर्मप्रवृत्तौ तदादि वाग्यमनं न पूर्वेद्युः प्रणयने तदादित्वनियमः । तथा ह्यैस[4]द्यस्कालेषु पूर्वेद्युः प्रणीयते वरुणप्रघासादिषु ।

**दक्षिणतश्च व्रजञ्जपत्याशुः शिशान इति सूक्तम् ।**

सूक्तग्रहणं व्रजञ्जपतीति व्रजतो जपविधानाद्व्रजनसमाप्तावपि कृत्स्नसूक्तप्रयोगविधानार्थम् । दक्षिणतोव्रजनविधानं दक्षिणतो व्रजत एवायं जपः स्यान्नाग्निं सोमं वा प्रणयतः । तदा ह्यग्रेण गच्छतीति ।

**समाप्योपवेशनाद्युक्तम् ।**

समाप्येतिवचनं समाप्योपवेशनादि यदुक्तं तदेव कुर्यान्न सूक्तावृत्तिं गमनापरिसमाप्तावपीति । आदिग्रहणेन ब्रह्मजपः परिगृह्यते । उपवेशनग्रहणेन निरसनमपि गृह्यते । सहचारित्वादेतत्त्रयमग्निप्रणयनाग्नीषोमप्रणयनयोरन्ते विधीयते[6] । तेन सूत्रेण साग्नौ यत्रोपवेशनमित्यनेन साग्निप्रणयनेषु पश्चादिकर्मस्वग्निप्रणयनान्त एव ब्रह्मजपो नान्यत्रेति नियम्यते ।

**न तु सौमिके प्रणयने ब्रह्मजपः ।**

सोमे यदग्निप्रणयनं तदन्ते न ब्रह्मजपो भवति । तत्र निरसनोपवेशने एव भवतः ।

**अन्यत्र विसृष्टवागबहुभाषी + यज्ञमनाः ।**

यज्ञमनाः क्रियमाणपदार्थपरामर्शी । विसृष्टवागपि यज्ञमनाः स्यादिति योगविभागः कृतः ।

---

+ घ. यज्ञ एव मनो यस्य यज्ञमनाः । इदं कर्मैवं भवतीति, एतदेवमपि कर्तव्यं नान्यदिति भाष्ये ।

---

१ ख. ग. विशेवस्त° । २ क. °न्यत्रेव । झ. °न्यत्रैव भू° । ३ झ. 'षोमप्र° । ४ घ. ह्यः स° । ५ ङ. च । ६ ख. ग. ङ. °ते । अनेन ।

**विपर्यासेऽन्त*रिते मन्त्रे कर्मणि वाऽऽख्याते वोपलक्ष्य वा जान्वा-च्याऽऽहुतिं जुहुयात् ।**

विपर्यासो व्युत्क्रमः । अन्तरितेऽतिगमने[1] । मन्त्रयोः कर्मणोर्वा विपर्यासेऽन्तरिते मन्त्रे कर्मणि वा स्वयमुपलक्ष्य परेण वाऽऽख्याते दक्षिणं जानु निपात्य वक्ष्यमाणेन मन्त्रेण वक्ष्यमाणेऽग्नावाहुतीर्जुहुयात्[2] । सर्वत्र जानुनिपातनमुपस्थस्योत्तानत्वाविरोधेन कर्तव्यं न न्यग्भावेन केनचिद्दृह्यकारेण शांवक्यादिना[3] दोषनिबन्धनात् । आख्यातोपलक्षणग्रहणम-न्यस्मिन्नपि विषये यथा कथंचिज्ज्ञात एतत्प्रायश्चित्तं भवतीत्येवमर्थम् । तेनैवमस्य सूत्रस्यार्थोऽवगन्तव्यः–सर्वेषु भ्रेषेष्वेतत्प्रायश्चित्तं सामान्यरूपेण भवति । यदन्यद्भ्रेषविशेषे विहितं तदस्यापवादकं भवति । विपर्यासान्तरितयोरत्र भेदेन ग्रहणात्तद्विषये विशेषेणाप्यस्य समुच्चयो भवति । सर्वेषां नैमित्तिकानामयमुत्सर्गो निमित्तादनन्तरं कर्तव्यमिति । यस्य पुनर्बलवता प्रमाणेनानन्तरं कर्तुमसंभवस्तस्य यावत्संभवमुत्कर्षो नात्यन्तमिति । वाशब्दस्य द्विरुच्चारणं ज्ञात एव निमित्त एतत्प्रायश्चित्तं न पूर्वोक्तसर्वप्रायश्चित्तवदज्ञातेऽपीति ज्ञापना-र्थम् । आहुतिमित्येकवचनं बहुष्वपि निमित्तेषु युगपज्ज्ञातेष्वेकैवाऽऽहुतिः कर्तव्या न प्रतिनिमित्तमिति ज्ञापनाय ।

**ऋक्तश्चेद्भूरिति गार्हपत्ये यजुष्टो भुव इति दक्षिण आग्नीध्रीये सोमेषु ।**

प्रागाग्नीध्रीयप्रणयनात्सोमेऽपि दक्षिणाग्नावेव दक्षिणाग्न्यर्थत्वादाग्नीध्रीयप्रणयनस्य ।

**सामतः स्वरित्याहवनीये सर्वतोऽविज्ञाते वा भूर्भुवः स्वरित्याहवनीय एव ।**

यदा सर्वेभ्यो वेदेभ्यो[4] युगपद्भ्रेषा आगच्छेयुस्तदा समस्ताभिरेकाहुतिराहवनीय एव कार्या । एवकारग्रहणं समस्ताभिरेकाहुतिराहवनीय एवेति ज्ञापनार्थम् । अविज्ञात इति स्मार्तानां शौचाचमनादीनां भ्रेषेऽस्य[5] प्रापणार्थम् । एत ऋगादयः शब्दा वेदवचना न जातिवचनाः ।

**प्राक्प्रयाजेभ्योऽङ्गारं बहिष्परिधिनिर्वृत्तं स्रुवदण्डेनाभिनिदध्यान्मा तपो मा यज्ञस्तपन्मा यज्ञपतिस्तपत् । नमस्ते अस्त्वाय ते नमो रुद्रप-राय ते । नमो यत्र निषीदसीति ।**

---

* घ. लोपे ।

---

१ ख. ग. घ. ङ. च. झ °ते निग° । २ ख. ग. झ. °हुतिं जुहु° । ३ ग. °ण शाङ्क्या-दि° । झ. °ण शांवत्यादि° । ४ घ. ङ. °भ्यो देवेभ्यो । ५ ख. ग. घ. च. झ. भ्रेषस्य ।

प्राक्प्रयाजेभ्य इति स्रुगादापनात्प्राक्कृत्स्नं संगृह्यते । बहिष्परिधीत्यस्य परिधिशब्दस्य देशोपलक्षणार्थत्वात्सर्वतो निर्वृत्तं गृह्यते । तच्च वक्ष्यमाणैः सूत्रैः स्पष्टयति ।

**अमुं मा हिंसीरमुं मा हिंसीरिति च प्रतिदिशमध्वर्युयजमानौ पुरस्ताच्चेद्ब्रह्मयजमानौ दक्षिणतो होतृपत्नी यजमानात्पश्चात् । आग्नीध्रयजमाना उत्तरतः ।**

अध्वर्युं मा हिंसीर्यजमानं मा हिंसीरित्येवमन्तेन मा तप इत्यनेन पुरस्तान्निर्गतमभिनिदध्यात् । एवमुत्तरेष्वपि प्रयोगो द्रष्टव्यः । चशब्दोऽमुमादेः पूर्वेण समुच्चयार्थः । दिगनुक्रमेणैव प्रतिदिशशब्दार्थे सिद्ध एव यत्प्रतिदिशग्रहणं करोति तज्ज्ञापयति सर्वदिक्संबद्धं कर्मानेन क्रमेण कर्तव्यमिति ।

**अथैनमनुप्रहरेदाहं यज्ञं दधे[1] निर्ऋतेरुपस्थात्तं देवेषु परिददामि विद्वान् । सुप्रजास्त्वं शतहिं[2] मामदन्त इह नो देवा मयि शर्म यच्छतेति ।**

न स्वाहाकारान्तम् ।

**तमभिजुहुयात्सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान्त्सुप्रतीकः । मा नो हिंसीर्द्धिंसितो नेत्वा जहामि गोपोषं च नो वीरपोषं च यच्छ स्वाहेति ॥ १२ ॥**

तमिति । प्रहृतमेवाङ्गारमभिजुहुयादित्यर्थः ॥ १२ ॥

---

**प्राशित्रमाह्रियमाणमीक्षते मित्रस्य त्वा चक्षुषा प्रतीक्ष इति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति कुशेषु प्राग्दण्डं निधायाङ्गुष्ठोपकनिष्ठिकाभ्यामसंखादन्प्राश्नीयादग्नेष्ट्वाऽऽस्येन प्राश्नामि बृहस्पतेर्मुखेनेत्याचम्यान्वाऽऽचामेत्सत्येन त्वाऽभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं शमयन्तु चक्षुः श्रोत्रं प्राणान्मे मा हिंसीरितीन्द्रस्य त्वा जठरे दधामीति * नाभिमालभेत प्रक्षाल्य प्राशित्रहरणं त्रिरनेनाभ्यात्ममपो निनयते ।**

---

* घ. अस्मिन्नवसर इळाभक्षणं ततोऽपो निनयनम् ।

---

१ ख. ग. घ. ङ. च. झ. °क्रमश्रेन प्र° । २ ख. ग. घ. ङ. च. °बन्यं क° । ३ ख. ग. घ. च. दधे । ४ च. °शतश्हिं । ५ च. °तो दधामि न त्वा । ६ क. प्रहृत° ।

तदित्याहृतस्य[1] प्राशित्रस्य प्रतिग्रहणार्थं नाऽऽह्रियमाणस्येति । अन्तर्वेदि कुशेषु प्रागदण्डं प्राशित्रहरणं निधायासंखादन्प्राश्नीयात् । असंखादन्दन्तैरपीडयन्नित्यर्थः । शौचार्थमाचमनं कृत्वा पश्चान्मन्त्रेणापः पिबेत्पुनरपि प्राग्वच्छौचार्थमाचमनं कुर्यात् । अनेन प्रक्षालितेन प्राशित्रहरणेनाऽऽत्मानमभिमुखेन हस्तेन च तथाभूतेनाऽऽत्मनः पुरतस्त्रिरपः सिञ्चेत् ।

**मार्जयित्वाऽस्मिन्ब्रह्मभागं निदध्यात् ।**

सर्वैः[2] कर्तृभिरिळाभक्षणस्यानुष्ठेयत्वात्तदङ्गत्वाच्च मार्जनस्यास्मिन्नवसरेऽयमपीळां भक्षयित्वा मार्जनं च कृत्वा ततः पश्चाच्चतुर्धाकरणे कृते ब्रह्मण आनीतं ब्रह्मभागं प्राशित्रहरणे निदध्यादित्यर्थः ।

**पश्चात्कुशेषु यजमानभागम् ।**

यस्मिन्देशे प्राशित्रहरणं निहितं तस्य पश्चात्कुशेषु यजमानभागं निदध्यान्न प्राशित्रहरण इत्यर्थः ।

**अन्वाहार्यमवेक्षेत प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मेक्षेष्ठा अस्मिंश्च लोकेऽमुष्मिंश्च ।**

इतिकाराध्याहारेण सूत्रच्छेदः ।

**प्राणापानौ मे पाहि कामाय त्वेत्यस्पृशन्नवघ्रायाङ्गुष्ठोपकनिष्ठिकाभ्यां शिष्टं गृहीत्वा ब्रह्मभागे निदध्यात् ।**

अन्येनाङ्गेनास्पृशन्नवजिघ्रेदन्वाहार्यं प्राणापानावित्यादिना । शिष्टं पुलाककलामात्रमित्यर्थः । तन्मात्रमन्वाहार्याद्गृहीत्वा ब्रह्मणो भागे निदध्यात् ।

**ब्रह्मन्प्रस्थास्याम इति श्रुत्वा बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि ।**

अध्वर्युमन्त्रपाठः प्रस्थास्यामः प्रस्थास्यामीति वा श्रुत्वा प्रतिष्ठेत्येवानुज्ञावचनं ब्रूयादित्येवमर्थम् ।

**भूर्भुवः स्वर्बृहस्पति प्रसूत इति जपित्वों प्रतिष्ठेति समिधमनुजानीयात् । संस्थिते जघन्य ऋत्विजां सर्वप्रायश्चित्तानि जुहुयात्तमितरेऽन्वालभेरन् ।**

भूर्भुवः स्वरित्यादेः पाठः समुच्चयार्थः । समिद्ग्रहणं समिदाधानानुज्ञावचनमपि सत्प्रतिष्ठेत्येवंरूपमेव भवति नाऽऽधेहीत्येवंरूपम् । ऋत्विजां कर्मसु संस्थितेषूपरतेष्वनुपरते

---

१ च. झ. °स्य प्र° । २ च. °र्वैः कृतैरि° । ३ ङ. °लाकं क° । ४ ख. ग. घ. च. °ज्ञानम° ।

यजमानकर्माणि जघन्यः सन्त्सर्वप्रायश्चित्तानि जुहुयात् । अत्राऽऽग्नीध्रोऽन्वारभेत ब्रह्माणम् । बहुवचनं विकृत्यर्थम् ।

**होतारं वा ।**

होतारं वेतरेऽन्वारभेरन् ।

**एतयोर्नित्यहोमः ।**

होम एवैतयोः कार्यो नान्वारम्भः परस्परमित्यर्थः ।

**सर्वे संस्थाजपेनोपतिष्ठन्त उपतिष्ठन्ते ॥ १३ ॥**

**इत्याश्वलायनश्रौतसूत्रे पूर्वषट्के प्रथमोऽध्यायः ॥ १ ॥**

सर्वे होमकर्तारोऽन्वारम्भकर्तारश्चेत्यर्थः ॥ १३ ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

**पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः ।**

प्रथमेऽध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तसहितौ । उत्तरत्रेष्टयः पशवश्च वक्ष्यन्ते विध्यन्तरहिताः । तेषां विध्यन्तापेक्षाऽस्ति यथा हि—

न हि तत्करणं लोके वेदे वा किंचिदीदृशम् ।
इतिकर्तव्यता साध्ये यस्य नानुग्रहेऽर्थिता* ॥ इति ।

एवं च तदपेक्षायां सत्यां तदपि वैदिकमेव श्रौतमेवेत्यपि सिद्धे श्रौतेषु चाऽऽग्निहोत्रिकदार्शपौर्णमासिकसौमिकेषु त्रिषु सत्स्वस्येदमिति विध्यन्तविशेषग्रहणे चोदनासामान्यं स्वरूपसामान्यं च मुक्त्वाऽन्यस्य विशेषलिङ्गस्याभावात्तैरेव विशेषलिङ्गैर्विध्यन्तविशेषः परिगृह्यते । तानीमानि विध्यन्तविशेषग्रहणलिङ्गानि—

निर्वपेत्तद्धितश्चाऽऽज्यमौषधं च पयो दधि ।
कपालानि च तत्संख्या देवता शब्द एव च ॥
तस्मिन्नक्षरसंख्या च तद्वाच्ये ह्येकबह्वपि ।
द्रव्यत्वं प्राकृतः शब्दो हविषः प्रभवादि च ॥

---

* क. प्रयाजादिसाध्येऽनुग्रह उपकारे ।

---

१ घ. च. कार्येऽन्वा° । २ घ. च. °न्तरविहि° । ३ घ. च. °ध्यन्तरापे° । ४ ख. ग. ङ. झ. °थाऽऽह । घ. च. °थार्हम् । ५ च. साध्या य° । ६ घ. च. °हे स्थिता° । ७ घ. च. °न्तरावि° । ८ घ. च. °न्तरवि° । ९ घ. च. °न्तरावि° । १० क. घ. °षधत्वं प° । ११ क. ङ. झ. द्रवत्वं ।

* एतद्ब्राह्मणशब्दश्च तद्वदित्युपदेशनम् ।
नामधेयं तथा+ऽव्यक्तचोदना चान्यदीदृशम् ॥
लिङ्गान्येतानि चान्यानि गुरूणि च लघूनि च ।
समीक्ष्य प्रकृतिश्चेयं विकृतिश्चेति कल्पना ॥
द्रव्यदेवतयोर्यत्र विरोधस्तत्र निश्चये ।
तत्र द्रव्यं बलीयः स्याद्देवताया इति स्थितिः ॥

यत्र सर्वासामिष्टीनां दर्शपूर्णमासौ प्रकृती तत्र विशेषलिङ्गात्कासांचिद्दर्शः प्रकृतिः कासांचित्पौर्णमासीत्येवं समीक्ष्य व्यवस्था कल्पनीया । एवं सर्वेषां पशूनां दर्शपूर्णमासावेव प्रकृती तद्धितादिविशेषलिङ्गादग्नीषोमीयस्य पशोरन्येषां च । अत्र न्यायविद आहुः—अग्नीषोमीयस्य पशोरेव दर्शपूर्णमासौ प्रकृती नान्येषां पशूनाम् । सर्वातिदेशिकैरौपदेशिकैश्च संबद्धोऽन्येषां पशूनां प्रकृतिः । एवं सत्युपकारप्राप्तिरखण्डिता भवतीति सत्यमेषा न्यायविदां स्थितिः । किं त्वत्र कल्पसूत्रकाराणामेवं प्रवृत्तिः—सर्वेषु पशुषु दार्शपौर्णमासिको विध्यन्तो दर्शपूर्णमासाभ्यामेव प्राप्नोति । अग्नीषोमीयाच्च पशोः पाशुक इति । अत एवास्मिन्सूत्रेऽग्नीषोमीयशब्दमनुक्त्वा पशुसामान्यवाचिनं पशुशब्दमेव प्रयुक्तवानाचार्यः । तेनैवायमतिदेशः सर्वेषां पशूनां नाग्नीषोमीयस्यैवेति गम्यते । अत एव भाष्यकारः 'अथ सवनीयेन' इत्यस्मिन्सूत्रे यद्दैवतग्रहणस्येदं प्रयोजनमुक्तवान् । अनुक्तदेवतानामपि पशूनां सवनीयत्वप्राप्तौ तेषामपि समाम्नातत्वं भवतीति । समाम्नातत्वे च वार्त्रघ्नावाज्यभागस्य लाभः प्रयोजनं नान्यत् । अतः सर्वपशूनामतिदेशः सिद्धः । तत्राऽऽग्नेय उपांशुयाजोऽग्नीषोमीय इति पूर्णमाससंज्ञका यागाः । आग्नेय उपांशुयाज ऐन्द्राग्न इत्यसंनयतोऽमावास्यायां संनयत ऐन्द्राग्नस्य स्थान ऐन्द्रे माहेन्द्रे वा दधिपयसी इति तयोः समुदाययोरपि पौर्णमास्यमावास्यानामनी भवतः । अनयोस्तन्त्रं साधारणम् । एतावानेव भेदः—प्रधानदेवता आज्यभागयोरनुवाक्ये च । यत्र प्रधानदेवता विकृतिषु प्रत्यक्षास्तत्रातिदेशव्यापारो नास्ति । अतः पारिशेष्यादाज्यभागानुवाक्ययोरेवातिदेशः फलति । एवं स्थिते येऽस्मिञ्शास्त्रे समाम्नाता इष्टयः पशवश्च स्वस्वप्रकरणेऽविशेषिताज्यभागाश्च तेषां मध्ये केषांचिद्वार्त्रघ्नाज्यभागतां मत्वा तदुपदेशार्थमेतत्सूत्रं प्रणीतवानाचार्यः । तस्यायमर्थः—

* क. एतदितिकर्तव्यताकानि । + अव्यक्तत्वं स्वार्थचोदितदेवताराहित्यम् ।

१ क. °ब्दस्य त° । २ च. °था व्य° । ३ क. झ. तत्र । ङ. अत्र । ४ ख. ग. झ. °त्र च वि° । ५ ख. ग. घ. ङ. च. झ. स चाति° । ६ ख. ग. °मव न्या° । घ. च. °मेषां न्या° । ७ ङ. झ. °घ्नाज्य° । ८ ख. ग. °ति दर्शपू° । ९ ख. ग. ङ. °क्षा इति तत्रा° । १० ख. ग. झ. °चिद्वचनाद्वा° ।

उपदिष्टाः समाम्नाता इत्यर्थः । अनुवादत्वेन चायं शब्दः संबध्यते । अतोऽयमर्थः सूत्रस्य[१] येऽस्मिञ्शास्त्र उपदिष्टा इष्टयः पशवश्चाप्यविशेषिताज्यभागास्ते सर्वे वार्त्रघ्नाज्यभागा इति । पौर्णमासेनेत्यस्यायमर्थः । पौर्णमासेन व्याख्याता इति । वार्त्रघ्नाज्यभागा इत्यर्थः । तेन[२] समाम्नातानामिष्टीनां पशूनां चान्यदेवतागममात्रः सिद्धो भवति । तथाचोक्तमिष्टययन-प्रकरणे—'असमाम्नातास्वर्थात्तन्त्रविकारः' इति । तच्च[३] पशूनामपि प्रदर्शनार्थत्वेनोक्तमिति द्रष्टव्यम् । सोमग्रहणमुत्तरार्थम् । अत्रापि किंचित्प्रयोजनमस्ति, याज्याधर्मा निरसनादयश्चै-वंप्रकाराः श्रुतावनारभ्याधीता अप्यस्मिञ्शास्त्रे दर्शपूर्णमासप्रकरणविहितास्तेषां प्रापणायेति ।

## तैरमावास्यायां पौर्णमास्यां वा यजेत ।

तैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागः कर्तव्य इतीष्टिपशूनां प्रकृतिप्राप्त एवायं कालः पुनर्विधीयते द्व्यहकालतां निवर्त्य सद्यस्कालताप्राप्त्यर्थम् । किंच दर्शप्रकृते-रमावास्या पौर्णमासप्रकृतेः पौर्णमासीत्येवं नियमं निवर्त्यानियमेनोभयकालताप्राप्त्यर्थम् । प्रकृत्यविरोधात्पर्वणस्तद्वत्यहोरात्रे विकृतिः कर्तव्या । यदाऽह्नः पूर्वभागे पर्व स्यात्तदा प्रकृतिं कृत्वा विकृतिः कार्या । यदा परभागे रात्रौ[४] वा तदा विकृतिं कृत्वा प्रकृतिः +कार्येति सोमस्यायमप्राप्तः कालो विधीयते । इष्ट्यादिशब्दसंबन्धादेव यजेतेत्यपि सिद्धे यजेतेतिवचनं सोमस्य याग एवानयोः कालयोः संपादनीयो नान्यद्दीक्षादीति[५] ।

## राजन्यश्चाग्निहोत्रं जुहुयात् ।

क्षत्रियस्याग्निहोत्रहोमः पर्वणोरेव कर्तव्यो नान्यस्मिन्काल इति । चशब्दाद्वैश्योऽप्यन-योरेव कालयोरग्निहोत्रं जुहुयान्नान्यस्मिन्नित्यवगम्यते ।

कथमनयोरन्यस्मिन्काल इत्याह—

## तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत् ।

तपस्वी कर्मनिरतस्तस्मै ब्राह्मणाय । अतपस्विनेऽपि ब्राह्मणायैव दद्यान्न जात्यन्तराय तपस्विनेऽपीति । इतरं कालमिति । इतरेषु सर्वेष्वग्निहोत्रकालेष्वित्यर्थः । भक्तं पक्वोदनं पक्वान्नमुपहरेद्दद्यात् । एतदुक्तं भवति—राजन्यवैश्ययोः पर्वण्यग्निहोत्रकालद्वयं वर्जयित्वे-तरेषु कालेषु ब्राह्मणायौदनं दातव्यं न होमः कर्तव्य इति । अग्निधारणं तु क्रियत एव ।

---

+ क.—माधवोऽपि—

आवर्तनात्प्राग्यदि पर्वसन्धिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः ।
तदैव यागः परतो यदि स्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युः ॥

---

१ क. ख. ग. ध. °स्य यस्मि° । २ ख. ग. ङ. तेनास° । ३ ख. ग. ङ. °नां च न्यायादेव तन्त्रानियमः सि° । ४ ङ. तत्र । ५ क. ङ. झ. °दीनि । रा° ।

**ऋतसत्यशीलः सोमसुत्सदा जुहुयात् ।**

ऋतं वाङ्मनसयोः सत्यत्वम् । सत्यं वाच एव । ऋतसत्यस्वभावः सोमयाजी च यः क्षत्रियो वैश्यो वा स सदा जुहुयादग्निहोत्रं न पर्वणोरेव । ऋतशब्देनैव सत्यशब्दार्थे सिद्धे सत्यग्रहणं वाक्सत्यस्वभावस्यापि सर्वदा होमसिद्ध्यर्थम् ।

**बहुषु बहूनामनुदेश आनन्तर्ययोगः ।**

समानानामिति शेषः । अनेकेषु विहितेषु तानुद्दिश्यानेकेषां समानानामनुदेशे पश्चाद्विधाने सत्यानन्तर्ययोगः क्रमेण संबन्धः स्यादित्यर्थः ।

**द्वे द्वे तु याज्यानुवाक्ये ।**

याज्यानुवाक्ययोर्देवताभिरेवाऽऽनन्तर्ययोगो भवति । एकस्या एकस्या देवताया द्वाभ्यां द्वाभ्यामृग्भ्यां नैकैकस्या एकैकयेति ।

**अदृष्टादेशे नित्ये ।**

यदि क्वचिदनेका देवता विधाय कस्याश्चिद्देवतायास्तल्लिङ्गयोर्याज्यानुवाक्ययोर्विधिं न कुर्यात्तदा नित्ये ग्रहीतव्ये इत्येकोऽर्थः । अयमप्यपरोऽर्थः—गृहीतत्वात्पुनस्ताभ्यां[2] विहिताभिश्च सह देवताभिरानन्तर्ययोग इति । आदेशो विधिरित्यर्थः । नित्ये उक्ते इत्यर्थः ।

**अग्न्याधेयम् ।**

अग्न्याधेयप्रभृतित्वं कर्मणामनुष्ठानस्योक्तम् । अनुष्ठानक्रमेणैव व्याख्यानमपीत्युक्तम् । तत्रोपोद्घाताद्दर्शपूर्णमासौ व्याख्यातौ । तत्प्रसङ्गादतिदेशः । तत्प्रसङ्गात्कालविधिः । तत्प्रसङ्गादेवाग्निहोत्रहोमप्रकारविधिः । परिभाषाप्रसङ्गात्कथंचिदानन्तर्ययोगविधिः । सूत्रत्रयेणैवं[3] गते सति प्रथमप्राप्तमाधानमुच्यते । विशिष्टकाले विशिष्टदेशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैर्गार्हपत्याद्यग्न्युत्पत्त्यर्थं यदङ्गाराणां निधानं तदग्न्याधेयमुच्यते । अग्नीनामाधेयमग्न्याधेयं तत्कर्तव्यमित्यर्थः[4] ।

कस्मिन्काल इत्याह—

**कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः[5] ।**

फल्गुनीष्विति पूर्वे उत्तरे च गृह्येते अविशेषाद्बहुवचनाच्च । प्रोष्ठपदे तूत्तरे एव । अतः सप्तैतानि नक्षत्राणि तेषामेकस्मिन्नक्षत्रेऽग्न्याधेयं कर्तव्यमित्यर्थः ।

---

१ झ. वाच्येव । २ ख. झ. ग. ङ. °हीत्वा पु° । ३ ख. ग. °णैवाव्ग° । ४ ख. ग. °र्थः । अस्मिन्कः का° । ५ घ. च. °पदासूत्त° ।

**एतेषां कस्मिंश्चित् ।**

एतेषां कस्मिंश्चित्पर्वणि, एवमेतत्सूत्रमर्थतो द्रष्टव्यमुत्तरं च सूत्रं 'वसन्ते[1] ब्राह्मण आदधीत' इति । एवं कृते सर्वमनुगुणं भवति । एतेषां नक्षत्राणां कस्मिंश्चिन्नक्षत्रे पर्वणि[2] चाग्न्याधेयं कर्तव्यमितीदं सूत्रं पर्वनक्षत्रसमुच्चयं[3]मग्न्याधेयस्य कालत्वेन विदधाति । पूर्वसूत्रं तु केवलं नक्षत्राणामेवाऽऽधानसंबन्धं विदधाति । अतो द्वौ पक्षौ स्तः । समुच्चयस्तत्र प्रथमः कल्पः । तदसंभवे केवलं नक्षत्रमेवेति विनिवेशो युक्तः । इदं कल्पद्वयं सोमाधानवर्जितेषु सर्वेष्वाधानेषु भवति ।

**वसन्ते पर्वणि ब्राह्मण आदधीत ।**

इदमपि सूत्रमर्थत एवं भवति । अनेन वसन्ते ब्राह्मणे[4]गुणकमाधानं विधीयते ।

**ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकृष्टाः ।**

वैश्यस्तक्षकर्मोपजीव्युपकृष्ट इत्युच्यते । अस्मिन्सूत्रे त्रीण्याधानानि विधीयन्ते । ग्रीष्मे क्षत्रियगुणकं वर्षासु वैश्यगुणकं शरद्युपकृष्टगुणकं च । एते वसन्तादयः शब्दा ऋतुवाचकाः । ऋतवो नाम षट् । वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराः । ते च चैत्रमासमारभ्य द्वौ द्वौ मासावृतवः । वसन्तादयो मासाश्चैत्रादय एव ।

**यस्मिन्कस्मिंश्चिदृतावादधीत ।**

आदधीतेतिप्रकृते पुनरादधीतेतिवचनमापत्कल्पोऽयमाधानविधिरिति दर्शयति । अत्या-[5]पदि मुमूर्षोः सर्वेष्वृतुष्वाधानं कर्तव्यं नैवानाहिताग्निर्म्रियेतेति । इदं चापरमाधानं, पूर्वोक्तानि च चत्वारि । तेषु सर्वेषु पर्वनक्षत्रविधय उपसंहर्तव्या न[6] पर्वर्तुस्वातन्त्र्येणाऽऽधानस्य कालविधयो भवेयुः । अत एव च सूत्रकारः पर्वनक्षत्रविधीनामृतुविधिभिः संबद्धानामेवाऽऽधानकालताप्रदर्शनार्थमेव 'एतेषां कस्मिंश्चित्[7]' इति पर्वनक्षत्रसमुच्चयविधिपरे सूत्रे[8] पठितव्यं पर्वशब्दमुत्तरसूत्राय पठितव्यमृतुशब्दं व्यतिषज्य पठितवान् । पर्वनक्षत्रविध्योर्ऋतुविध्युपसंहारे न्यायविरोधश्च नास्ति तत्रैव तयोरन्तर्भावदर्शनादिति ।

**सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रम् ।**

अद्यैव सोमेन यक्ष्य इति संकल्प्य य आधानमिच्छेत्स आधानस्य कालं नापेक्षेत[9] सोमोपक्रमकाल एवाऽऽदधीतेत्यर्थः । अयमपि मुख्य एवाऽऽधानकालः । ऋतुनक्षत्रनिरपेक्षवचनं

---

१ क. घ. च. न्ते पर्वणि ब्रा° । २ घ. च. °णि वाऽग्न्या° । ३ ख. झ. ग. °यमाधाने का° । ४ ख. ग. °णकर्तृकमा° । ५ ख. झ. ग. अत्यन्ताप° । ६ झ. न स्वा° । ७ घ. च. °श्चिद्वसन्त इ° । ८ ख. झ. ग. घ. च. सूत्र उत्त° । ९ घ. ङ. च. नावेक्षे° ।

पर्वणोरपि प्रदर्शनार्थम् । अस्य मूलं यदहरेवैनमिति श्रुतिः सोमाधानस्य विधायिका न सोमस्य । तेन वसन्तसंबन्धित्वं सोमस्य न बाध्यत इष्ट्युत्तरकालता तु बाध्यते, सोमाधानयोरानन्तर्यविधानादिति ।

**अश्वत्थाच्छमीगर्भादरणी आहरेदनवेक्षमाणः[2] ।**

शम्या गर्भः शमीगर्भः । शमीगर्भादश्वत्थादरण्याहरणं कुर्यात् । तच्चाधानार्थम् । आहरणे कृतेऽध्वर्युणाऽरण्याहरणे क्रियमाणे तेन सह यजमानोऽप्यनेन मन्त्रेणाऽऽहरेत् । अनवेक्षमाणः पृष्ठतोऽनवेक्षमाणः[3] । अयं चापरोऽर्थः—कुर्यान्न कुर्यामिति नान्यदपेक्षमाणः[4] । अध्यवसिता*धान इत्यर्थः ।

**यो अश्वत्थः शमीगर्भ आरुरोह त्वेसचा । तं त्वा हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति पूर्णाहुत्यन्तमग्न्याधेयम् ।**

पूर्णाहुतिरन्ते यस्य तत्पूर्णाहुत्यन्तम् । अग्न्याधेयं कर्तव्यमित्युक्तम् । तच्चाग्न्याधेयमरण्याहरणादिपूर्णाहुत्यन्तं भवतीत्यर्थः । अस्य सूत्रस्य प्रयोजनं पूर्णाहुत्यन्त आहिताग्निव्रतप्राप्तिः । कथमिति चेत् । श्रुतावेवमाम्नातम्—'अग्नयः पुरुषार्थसाध्याः' इति प्रस्तुत्य वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्येवमादीनि वसन्तादिकालानि ब्राह्मणादिकर्तृकाणि कर्तृगामिक्रियाफलयुक्तानि निरधिकाराण्याधानानि विधाय "ततोऽरणी आहरेत् । संभारान्संभरेत् । अग्न्यायतनानि कुर्यात् । केशश्मश्रु वपते । ब्राह्मौदनिकमौपासनिकं निदध्यात् । तस्मिन्ब्रह्मौदनं पचेत् । समिध आदध्यात् । आयतनेषु संभारान्निदध्यात् । ब्राह्मौदनिकमरण्योः समारोप्य मथित्वा गार्हपत्यादीनादध्यात् । तत्र काश्चित्समिध आदध्यात् । अग्निहोत्रं जुहुयात् । पूर्णाहुतिं जुहुयात् । तत आग्नेयमष्टाकपालं निर्वपेत्तदहरेव । तदहरादिसंवत्सरान्तानां कालानां कस्मिंश्चित्काले पवमानहवींषि निर्वपेत् । ततश्चान्यानि हवींषि" इति । ततः "आहिताग्निः छिन्नं दारुनाभ्यादध्यात् । नानृतं वदेत्" इत्याद्याहिताग्निव्रतानि चाऽऽम्नातानि । तथाऽग्निमत्तायां सिद्धायामग्निहोत्रादीनि नित्यनैमित्तिककाम्यानि कर्माणि तत्र तत्राऽऽम्नातानि । तत्र कस्मिन्नवसर आहिताग्निव्रतप्राप्तिः कस्मिन्नवसरेऽग्निहोत्रादीनामारम्भ इति तद्विवेकार्थमिदं सूत्रद्वयम् । तत्र पूर्वेण सूत्रेण श्रुत्यादिभिः प्रकरणरहितैः पञ्चभिः प्रमाणैर्यावन्तः पदार्था आधानविधिना संबध्यन्ते तावत्सु समाप्तेष्वाधानसमाप्तिः । आधानसमाप्तौ चाऽऽहिताग्निव्रतप्राप्तिरित्येतत्प्रतिपादयितुं पूर्णाहुत्यन्तमित्युक्तवानाचार्यः[6] । उत्तरेण चाग्निहोत्राद्यारम्भकालं प्रतिपादितवान् ।

* क—निश्चिताधानः ।

२ ख. ग. ज. छ. °नपेक्ष° । घ. नवेक्ष्यमा° । ३ क. °वेक्ष्यमा° । ४ ...। ६ ख. ग. झ. न्तमग्न्याधेयमि° ।

## यदि त्विष्टयस्तनुयुः ।

अग्निनेवेति वाक्यशेषः । यद्यनधिकारत्वादाधानविधेर्विनियोजकस्य प्रकरण[1]स्य व्यापारासं भवादाधानाङ्गमिष्टयो न स्युः । इष्टीनां चानधिकारत्वादिष्ट्यङ्गमाधानं न स्यात् । तथाऽपि न कश्चिद्दोषः । अग्न्यर्थत्वेनैवोभयोरप्यनुष्ठानसिद्धेः । नन्विष्टीनामग्निसंबन्धाभावादग्न्यर्थता न संभवतीति चेत् । न । यदाहवनीये जुह्वतीत्येवमादिभिरग्निसंबन्धोऽस्ति । न[2]न्वेष संबन्धः साधनत्वेन न दृश्यते । सत्यमेव न दृश्यते । तथाऽप्याहवनीयादिष्वग्निषु साध्यत्वबुद्धेरनुवर्तमानत्वादन्यस्य च साध्य[3]स्यानवगमाद्गात्रिसत्रन्यायेनाग्नय एवेष्टिभिः साध्या इत्येवमाश्रयितुं युक्तमानर्थक्या[4]श्रयणादधिकारान्तरकल्पनाश्रयणाच्चेति[5] । अत आधानेनेष्टिभिश्चाग्निसिद्धिर्भवति[6] न तयोरन्यतरेण[7] । तेन सिद्धमग्निहोत्रादीनामग्निसाध्यानामिष्टिभ्य उत्तरकाल एवाऽऽरम्भ इति । अस्मिन्नर्थ एवं सूत्रयोजना—[8]यद्यासामिष्टीनामाधानाङ्गता न स्यात्तथाऽप्याहवनीयाद्यग्निसंबन्धात्तानेवाग्नीनिष्टयस्तनुयुर्विस्तारयेयुः कुर्युः साधयेयुरित्यर्थः । तुश[9]ब्दस्त्वासामाधानाद्विशेषं दर्शयति । आधानेऽग्नीनां साध्यत्वेन संबद्धानामेव साध्यत्वम् । इष्टिषु साधनत्वेन संबद्धानामपि कल्पनागौरवभयात्साध्यत्वमिति विशेषं गृह्णीमः । [10]एवमाधानेनेष्टिभिश्चाग्नय एवांशतः साध्या इति । अनधिकाराणां कथमनुष्ठानसिद्धिरिति न्यायविदामेष उपालम्भो नास्माकम् । [11]अस्माकं तु साध्यसाधनसंबन्धेऽवगते तदर्थिनां*कर्तृत्वेनावगतानां ब्राह्मणादीनां कथं चिद+धिकारकल्पनाऽनुष्ठानसिद्धिः । अथ वाऽनधिकाराणामनन्यशेषाणामपि त[12]त्साधनसाध्यरूपेणोपकारकत्वेन कामश्रुति×प्रयुक्त्यैवैवंविधानामनुष्ठानसिद्धिरित्यलमतिविस्तरेण ।

## प्रथमायामग्निरग्निः पवमानः ।

प्रथमायामिष्टौ द्वे देवते अग्निः प्रथमः केवलो द्वितीयः पवमानगुणकोऽग्निः । केवलस्याग्नेर्नित्ये एव ।

## अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः ।

एते द्वितीयस्य पवमानगुणस्य ।

---

*क— अग्न्यर्थिनाम् । + क—फलकल्पनया । ×क—अग्निसिद्धिकाम आधानं कुर्यादिति कामश्रुतिप्रयुक्तिः ।

---

१ ख. ग. °णस्यासं° । २ क. नत्वेष । ३ ख. झ. ग. °ध्यस्य चान° । ४ क्यादर्थान्तराश्रयणाच्चे° । ५ घ. ङ. च. °ति । तत्राऽऽधा । ६ ख. ग. झ. °ति । नैत° । ७ ख. ग. झ. °रेणेति सि° । ८ ख. ग. यद्यप्यासा° । ९ घ. ङ. च. ब्दस्तु साधानादिषु विशे° । १० ख. ग. ङ. एतदाधा° । घ. च. एवं यद्याधा° । ११ ख. ग. °स्माकमृतुसा° । १२ क ख. ग. तत्साध्यसाधनरू° ।

**स हव्यवाळमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात् ।**

सौविष्टकृत्योर्याज्यानुवाक्ययोर्ऋचोरनेन संयाज्ये इतिसंज्ञा विधीयते ।

**सर्वत्र देवतागमे नित्यानामपायः ।**

सर्वत्रेति प्रकरणान्तरेऽपीति दर्शयति—देवतागम इत्यत्र समा[1]सनिर्देशस्य तुल्यत्वाद्देवताया देवतयोर्देवता[2]नां वाऽऽगम इत्येवं भवति । नित्यानां प्राकृतीनामित्यर्थः । अपायः, उद्धार इत्यर्थः । एतदुक्तं भवति—विकृतौ देवताया एकस्या आगमे द्वयोर्बह्वीनां वाऽऽगमेऽपि प्राकृतीनां सर्वासामुद्धार इति । यस्यां पुनर्विकृताविष्टिचोदनां कृत्वा देवतां न विदधाति तत्र नोद्धारः प्राकृतीनाम् । तत्र ता एव देवता भवन्तीत्यर्थः । यथा[3] गदितः ' सोमेन पशुनेष्ट्या वा ' इत्यादौ ।

**याः स्विष्टकृतमन्तराऽऽज्यभागौ च तास्तत्स्थाने ।**

नित्यानामपाय उक्तः । तत्र किं सर्वा नित्या उद्धर्तव्या, उत का[4]श्चिद्देव[5]तेत्येतं संशयं निवर्तयति । या आज्यभागौ स्विष्टकृ[6]तं चान्तरा देवता यष्टव्यास्ता उद्धर्तव्याः । याः पुनर्विकृतौ विहितास्तास्तत्स्थाने ' उद्धृतानां प्राकृतीनां स्थाने भवन्ति ' इति वचनात्तद्धर्मिकाश्च भवन्तीति गम्यते ।

**एष समानजातिधर्मः ।**

योऽयमतिदिष्टो विधिर्देवताभ्योऽन्यत्रापि स समानजातीयेषु भवति । समानजा[7]तीय एककार्य[8] इत्यर्थः ।

**द्वितीयस्यां वृधन्वन्तौ । अग्निः पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावक रोचिषाऽग्निः शुचिव्रततम उदग्ने शुचयस्तव ।**

एकः पावकगुणकोऽग्निरपरः शुचिगुणकः ।

**साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये । तृतीयस्यां सामिधेन्यावावपते प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे ।**

आवपत इतिवचनादधिके एते सामिधेन्यौ भवतः । प्र[9]थमायां द्वितीयस्यां तृतीयस्यामितिवचनाद्यस्यामिष्टौ यत्तन्त्रं विहितं तस्यामेकदेवतायामपि तत्तन्त्रं भवति न यथोक्तनानादेवतायामेवेति ।

---

१ क. °माननि° । २ ख. झ. ग. ङ. °नां चाऽऽ । ३ झ. °थाऽगदः सो° । ४ ख. ग. झ. घ. ङ. काश्चिद्दे° । ५ ख. ग. °वता इ° । ६ क. °कृतौ चा° । ७ ख. झ. ग. °जातय । ८ ख. ग. °कार्या इ° । ९ क. ङ. °थमस्यां द्वि° ।

**धाय्ये इत्युक्त एते प्रतीयात्पुष्टिमन्तावग्निना रयिमश्नवद्गयस्फानो अमीवहेति । अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि ।**

त्रयाणामेको गृह्यते ।

**अदितिः ।**

अदितिश्चान्या । अस्यां द्वे देवते ।

**उत त्वामदिते महि महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ।**

एषा कल्पजा ।

**प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्त एते प्रतीयादिति तिस्रः ।**

इत्येतास्तिस्र इष्टयोऽनुक्रान्ता इत्यर्थः । उक्तानुकीर्तनमुत्तरार्थम् । यदाऽऽद्योत्तमे वैव स्यातामाद्या वेति पक्षस्तदाऽपि तिसृणामिष्टीनां यावत्यो देवतास्ताः सर्वा यष्टव्या इत्येवमर्थम् । आद्योत्तमपक्षे मध्यमायां ये देवते ते आद्यायामेव प्रक्षेप्तव्ये । यदा पुनराद्यैव तदा सर्वा देवता आद्यायामेव प्रक्षेप्तव्या इत्येवमर्थम् ।

**अद्योत्तमे वैव स्याताम् ।**

इष्टी इति शेषः ।

**आद्या वा ।**

आद्यैव वेष्टिर्भवतीत्यर्थः ।

**तथा सति तस्यामेव धाय्ये विराजौ ।**

यदाऽऽद्यैव भवति तदा द्वितीयतृतीययोरपि देवतास्तत्र भवन्तीत्युक्तम् । अतस्तस्यामेव धाय्ये विराजौ भवतः । धाय्याविराजामनुप्रवेशस्य निमित्तं तृतीयस्या इष्टेर्देवतानुप्रवेश इत्येवमर्थं तथा सतीत्युक्तम् ।

**इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात् ।**

पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्मात्रे विकारे सति सेष्टिर्वैराजतन्त्रेति वेदितव्या ।

**आधानाद्द्वादशरात्रमजस्राः ।**

अत्राऽऽधानमिष्टीश्चोक्त्वाऽऽधानादूर्ध्वं द्वादशरात्रमजस्रा इत्युक्तं तस्यायमभिप्रायः— यावता कर्मसमुदायेनाग्नीनां सिद्धिर्भवति तावतः कर्मसमुदायस्याऽऽधानशब्दो वाचक इति ज्ञापयितुम् । तेनाग्न्याधेयं पुनराधेयं वेत्यत्र सेष्टिकस्याऽऽधानस्य ग्रहणं भवतीति सिद्धम् । आधानेनेष्टिभिश्च सिद्धा अग्नयो द्वादशाहोरात्राणि सर्वे स्वरूपेणैव धार्यन्ते । एतदजस्रधा-

रणमग्निहोत्रपूर्व एवाऽऽधाने भवति, अग्निहोत्रस्यैवानन्तरमुच्यमानत्वात् । अनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च । इष्टिपूर्वे च सोमपूर्वे च शास्त्रान्तराण्यालोच्य विचारणीयम् । तत्रायं विचारः—इष्टिपूर्वेऽजस्रधारणं नास्ति, आपस्तम्बवचनात् । 'अन्यमाहवनीयं प्रणीयाग्नीनन्वादधाति' इतीष्ट्यर्थतयाऽन्यस्य प्रणयनस्य विधानात् । 'अपवृज्य श्वो भूते पौर्णमासेन यजेत' इत्यपवर्जनविधानाच्च । तथा सोमपूर्वेऽपि नास्ति । तस्माद्दीक्षितो द्वादशाहं * भृतिं तन्वीत+ ' इति प्रकृतौ द्वादशदीक्षानियमादुपसद्भिः सुत्यया च सह षोडशाहानि प्रकृतेः कालः । अजस्रधारणं तु द्वाशाहपरिच्छिन्नम् । सोममध्ये विहरणस्य चासंभवः, दीक्षणीयासंस्कृतेष्वग्निषु सोमयागविधानात् । अत इष्टिपूर्वे सोमपूर्वे चाजस्रधारणं नास्तीति सिद्धम् । अग्निहोत्रपूर्वेऽपि यदाऽर्वागिष्टिकालाद्द्वादशाहानि न पूर्यन्ते तदा कथं तत्रैते पक्षा अजस्रे स्विष्टिकरणम्, इष्टिलोपः, यथासंभवमजस्रधारणम्, अजस्रलोप इति । तत्र यथासंभवमजस्रधारणमिति पक्षो दुराश्रयस्तथा विध्यभावात् । द्वादशाहकालविशिष्ट एवासौ विधिः श्रूयते नान्यकालविशिष्ट इति । तथेष्टिलोपपक्षोऽपि न संभवति । अग्निमत्तायां सिद्धायां पौर्णमासीकाल आगते तदनारम्भे प्रमाणाभावात्, अक्रियायां प्रायश्चित्तोपदेशाच्च । एवं चेदजस्रेष्वेव पौर्णमासो भवतु को दोषः । उक्तो दोषः × स्वार्थ एव प्रणीतेऽन्वाधानदर्शनादपवर्जनविधानाच्चेति । नन्वग्निहोत्रमपि स्वार्थ एव प्रणीत आहवनीये भवति, 'अर्थायार्थायाग्निं प्रणयति' इत्यस्यापि शिष्टत्वात् । सत्यमविशिष्टं तथाऽप्याधानानन्तरमजस्रधारणविधेः प्रवृत्तत्वात्तदवस्थेष्वेवाग्निष्वग्निहोत्राधिकारस्य प्राप्तस्य त्यागे प्रमाणाभावात्तेष्वेवाग्निहोत्रहोमो युक्तः । एतमेव न्यायमनुसृत्योक्तं भगवताऽऽपस्तम्बेन—' द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमाग्निहोत्रं जुहुयात् ' इति । तथा प्रणीते चेदग्निहोत्रकाल एतस्मिन्नेवाग्निहोत्रं जुहुयात् । एवमन्यत्र निष्क्रान्ते तन्त्र इत्यग्निहोत्रस्यान्यार्थेष्वपि प्रवृत्तिदर्शनान्नात्राय दोष इति गम्यते । अतोऽग्निहोत्रस्यान्यार्थेष्वपि प्रवृत्तिदर्शनादाधानानन्तरमग्निहोत्रस्यानन्या÷र्थाहवनीयासंभवादजस्रेष्वेवाग्निहोत्रहोमो न विरुध्यते । पौर्णमास्याः पुनर्द्वादशाहोत्तरकालवर्तिन्याः स्वार्थाहवनीयसंभवादजस्रेष्वेतस्याः प्रवृत्तिर्विरुध्यते । अतोऽजस्रेष्विष्टिकरणमित्ययमपि पक्षो न संभवति । नन्वजस्रलोपपक्षेऽप्याधानात् ' द्वादशरात्रमजस्राः ' इति नित्यवदाम्नानं विरुध्यते । न विरुध्यते । अस्य नित्यत्वासंभवात् । उक्तं हि 'इष्टिपूर्वे सोमपूर्वे चाप्रवृत्तिकरणम्' इति ।

---

* क.—हिरण्यादिकाम् । + क.—याचेत । × क.—इष्ट्यर्थ° एव । ÷ क.—स्वार्थाहवनीयस्य नामाग्निहोत्रार्थाहवनीयस्य ।

---

१ ख. ग. ङ. झ. दुर्भणस्त° । २ घ. ङ. °मासका° । ३ ख. झ. ग. °न्यत्रोपक्रा° । ४ ख. ग. 'न्मातं नि° । ५ घ. च. °र्वे वाप्र° ।

तस्मादस्य[1] विध्यन्तरानुपरोधेन प्रवृत्तिदर्शनादकरणे च प्रायश्चित्तानाम्नानादस्मिन्विषयेऽजस्रलोप एव श्रेयानिति वक्तुं युक्तम् ।

**अत्यन्तं तु गतश्रियः ॥ १ ॥**

अत्यन्तं यावज्जीवमित्यर्थः । गतश्रियः ' त्रयो वै गतश्रियः ' इति श्रुतावुक्ताः । गतश्रियामग्नयो यावज्जीवमजस्रा भवन्ति न द्वादशाहमेवेति[2] ॥ १ ॥

**उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैकयोनय इत्येके ध्रियमाणं वा प्रज्वल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत् ।**

उत्सर्गेऽजस्रोत्सर्गेऽग्निहोत्रहोमार्थं विहरेन्नाजस्रेषु । होमस्त्वजस्रेष्वपि भवतीत्युक्तम् । एवं स्थिते विहरणसहितमग्निहोत्रहोमप्रयोगं वक्तुकाम उत्सर्ग इत्युक्तवान् । अत्रापराह्णशब्देनाह्नश्चतुर्थभागो गृह्यते । विहरणकाले[3] गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत् । चतुर्णां वर्णानामन्यतमस्य[4] द्रव्यवतो वा गृहाद्गार्हपत्याद्वा । नित्यधार्यश्चेत्प्रज्वलयेत्[5] । काले काले यदि निर्मथ्यस्तदा[6] मन्थेत् । एषां प्रकाराणामुत्पत्तिवशाद्व्यवस्था । तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्याज्ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत् । पात्रान्तरेण पृथक्कुर्यादित्यर्थः ।

**देवं त्वा देवेभ्यः श्रिया उद्धरामीत्युद्धरेत् ।**

अनेन मन्त्रेणाग्निहोत्रार्थमुद्धरेत् । पूर्वस्योद्धरेदितिवचनस्येदं प्रयोजनं गार्हपत्यं प्रज्वल्येत्यादेराहवनीयं ज्वलन्तमुद्धरेदित्यन्तस्य मन्त्रवर्जितोद्धरणप्रकारस्य सर्वार्थत्वज्ञापनम् । एवं सर्वार्थमुद्धरणं विदधतैतत्साधितं भवति । येनाग्निना यत्र प्रयोजनं तत्र तस्योद्धरणं कर्तव्यमिति । शाखान्तरे स्पष्टं वचनमस्ति ' अर्थायार्थायाग्निं प्रणयति ' इति । उद्धरणमन्त्रोऽयमग्निहोत्र एव नान्यत्रेति सिद्धम् ।

**उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार । अह्ना यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मादिति प्रणयेत् ।**

प्रणयेत्प्राङ्नयेदग्निमाहवनीयं प्रत्यनेन मन्त्रेण ।

**अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ । तयाऽनन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुखः ।**

---

१ घ. °दपि वि° । २ ख. ग. ङ. झ. °दशरात्रमे° । ३ ख. ग. झ. °कालत्वेन गा° । ४ ख. झ. ग. °स्य मर्त्यस्य द्र° । ५ ख. झ. ग. °त्प्रज्वाल° । ७ ख. ग. ङ. च. °र्मन्थ्यस्त° ।

आदित्याभिमुखो भूत्वाऽनेन मन्त्रेणाऽऽहवनीयायतनेऽग्निं निदध्यादित्यर्थः ।

**एवं प्रातर्व्युष्टायां तमेवाभिमुखः ।**

एवमेव प्रातर्होमार्थमप्यादित आरभ्य निधानान्तं कुर्यात् । तमेवाभिमुखो निधियमानाहवनीयाभिमुख इत्यर्थः । एवं सति प्रातःकाल आहवनीयायतनात्पश्चात्स्थितेन निधानं भवति । सायं तु पुरस्तात्स्थितेन व्युष्टायामुषस्युदितायामादित्योदयात्प्राक् ।

**राज्या यदेन इति तु प्रणयेत् ।**

प्रणयनमन्त्रेऽह्ना यदेन इत्यस्य स्थाने राज्या यदेन इति कर्तव्यं प्रातःकाले ।

**अत ऊर्ध्वमाहिताग्निर्व्रतचार्या होमात् ।**

सत्रिधर्माश्चातुर्मास्यव्रतानि चात्र व्रतशब्देनोच्यन्ते । विहरणादूर्ध्वमग्निहोत्रहोमप्रयोगसमाप्तेर्व्रतचारी भवत्याहिताग्निः ।

**अनुदित होमी चोदयात् ।**

अनुदितहोमी चेत्समाप्तेऽपि प्रयोग ओदयाद्व्रतचारी भवेत् ।

**अस्तमिते होमः ।**

कर्तव्यः । अङ्गान्यपि प्रधानकाल एव कर्तव्यानि । यत्पुनरङ्गं विहरणवत्स्वकालविशिष्टं तत्स्वकाल एव कर्तव्यम् ।

**नित्यमाचमनम् ।**

उक्तं प्राङ्मुखस्याऽऽचमनं यत्पुरस्तात्तदिदानीं कर्तव्यमस्याङ्गत्वाय ।

**ऋतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत्रिस्त्रिरेकैकं पुनः पुनरुदकमादाय ।**

पर्युक्षणमन्त्रोऽपि जपित्वा पर्युक्षेदिति पृथक्क्रियते पर्युक्षणातिदिष्टे परिसमूहने मन्त्रो मा भूदिति । त्रिरेकैकमित्येतावतैवैकैकस्याग्नेस्त्रिस्त्रिः पर्युक्षणे सिद्धे त्रिस्त्रिरितिवीप्सावचनं मन्त्रस्यापि त्रिरावृत्तिर्भवत्वित्येवमर्थम् । पुनःपुनरुदकमादायेतिवचनं न सकृद्गृहीतेन त्रिः पर्युक्षेदित्येवमर्थम् ।

**आनन्तर्ये विकल्पः ।**

अग्नीनां पर्युक्षणादिषु कर्तव्येषु केनाऽऽनन्तर्येण कर्तव्या इत्यानन्तर्यविशेषे ज्ञातव्येऽनेन सूत्रेणाग्नीनामुत्पत्तिक्रमस्य होमक्रमस्य च विकल्पो विधीयते ।

**दक्षिणं त्वेव प्रथमं विज्ञायते पिता वा एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीयस्तस्मादेवं पर्युक्षेत् ।**

पर्युक्षेत् । पर्युक्षणेऽयमेव क्रमो दक्षिणाग्निं गार्हपत्यमाहवनीयमिति । तत्र श्रुतिमेव हेतु-

---

१ ख. ग. झ. °वाहवनीयमेवाभि° । २ क. °र्ध्वमाग्नि° ।

मुपन्यस्य तस्मादेवं पर्युक्षेदित्युपसंहृतम् । तेन पर्युक्षणातिदिष्टे परिसमूहनेऽयमेव क्रमः अन्यत्र पूर्वोक्तो विकल्पः । अत्र विनिवेशः प्रधानात्पूर्वेषामुत्पात्तिक्रमः, परेषां प्रधानक्रम इति ।

**गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुमन्विही-त्याहवनीयात् ।**

अयमाकारो मर्यादायामग्न्युपवातविरोधात् ।

**पश्चाद्गार्हपत्यस्योपविश्योदगङ्गारानपोहेत्सुहुतकृतः स्थ सुहुतं करिष्य-थेति ।**

पश्चाद्गार्हपत्यस्य तूष्णीमिव दक्षिणोत्तरिणोपस्थेनोपविश्य गार्हपत्यात्कतिपयानङ्गारानु-दक्पृथक्कुर्यादधिश्रयणार्थम् ।

**तेष्वग्निहोत्रमधिश्रयेदधिश्रि*तमस्यधिश्रितमधिश्रितं हिङ्इति ।**

तेष्विति । पृथक्कृतेष्वङ्गारेष्वित्यर्थः । अग्निहोत्रमिति होमसाधनभूतं द्रव्यमुपचर्यते ।

**इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा ।**

अनेन वा मन्त्रेणाधिश्रयेत्पूर्वेण वेति विकल्पविधिः ।

**न दध्यधिश्रयेदधिश्रयेदित्येके ॥ २ ॥**

अधिश्रयेन्न वेत्येतावतैव सिद्धे गुरुसूत्रकरणं न्यायविकल्पोऽयमिति प्रदर्शनार्थम् । अत्रैक आचार्याः प्रवृत्तिपरत्वाच्छास्त्रस्य कार्यस्य चातीन्द्रियत्वादलोपमाहुः । आचार्यस्तु कार्यार्थत्वात्प्रवृत्तेः कार्यस्य च दृष्टस्य त्यागे प्रमाणाभावात्तदत्यागे संस्कार्यस्वरूपविनाशा-त्संस्कार्यसं[३]पादकत्वात्संस्कारस्य लोप एवात्र श्रेयानित्याह ॥ २ ॥

**पयसा नित्यहोमः ॥**

नित्यश्चासौ होमश्च नित्यहोमः स पयसा कर्तव्यः । अकामस्याग्निहोत्रहोमः पयसा कर्तव्य इत्यर्थः । कामानुपदेशादेवास्य नित्यत्वे सिद्धे नित्यग्रहणमुत्तरार्थम् ।

**यवागूरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम् ।**

यथासंख्येन ग्रामकामादीनां यवाग्वादीन्यग्निहोत्रहोमद्रव्याणि भवन्ति । ग्रामकामः प्रसिद्धः । अन्नं च तदाद्यं चान्नाद्यम् । स्वाद्यान्नकाम इत्यर्थः । इन्द्रियं शुक्रं चक्षुरादीनि

---

* घ. प्रथमः कल्पः समर्थः ।

---

१ ख. ग. ञ. °रान्हविःश्रपणार्थमुद्°। २ क. ध. °णार्थाम् । ३ ग. घ. च. °संवाद° । ४ क. घ. च. °त्रद्° । ५ ख. ग. ग्रामः प्र° ।

वा । तेजश्छविः । नित्यहोम इत्यत्रापि संबध्यते । तेन पुरुषार्थैरपि क्रियमाणो होमो नित्य एव स्यान्न कामार्थः । होमाश्रितानि द्रव्याण्येव कामाश्रितानि भवन्तीति ।

**अधिश्रितमवज्वलयेत् ।**

अधिश्रितग्रहणादधिश्रितमात्र एवावज्वलयेन्न कालविक्षेपः कर्तव्य इत्यवगम्यते ।

**अनधिश्रयं दध्यग्निष्टे तेजो मा हार्षीरिति ।**

नाधिश्रयो यस्य तदनधिश्रयम् । अधिश्रयरहितमपि दध्यवज्वलयेदित्यर्थः । सर्वत्रावज्वलनमन्त्रोऽयम् 'अग्निष्टे तेजः' इति । दधिचेत्येतावतैव सिद्धे गुरुसूत्रकरणं[1] व्रीह्यादीनामपक्कानां संग्रहार्थम् ।

**स्रुवेण प्रतिषिञ्चयान्न* वा शान्तिरस्यमृतमसीति ।**

पयसा होमे दोहनपात्रप्रक्षालनं स्रुव आनीय तेन प्रतिषिञ्चेत् । अग्निहोत्रद्रव्यमन्यत्रोदकेनैव शान्तिरिति मन्त्रेण । न वा प्रतिषेकः कर्तव्यः ।

**तयोरव्यतिचारः ।**

तयोः प्रतिषेकाप्रतिषेकयोरित्यर्थः । अव्यतिचारोऽ+संकरः । एकस्मिन्पुरुष इत्यर्थः । एकः सर्वदा प्रतिषिञ्चेदपरः सर्वदा न प्रतिषिञ्चेदित्यर्थः ।

**पुनर्ज्वलता परिहरेन्निरन्तरितं रक्षोऽन्तरिता अरातय इति ।**

पुनर्वचनाज्ज्वलता येनोल्मुकेनावज्वलनं कृतं तेनैव परिहरणं कुर्यादिति गम्यते । उल्मुकादानं गार्हपत्यादेव न श्रपणार्थात् । श्रपणार्थं पृथक्कृतस्य पुनः प्रक्षेपविधानात् । अन्यत्र कार्यार्थं पृथक्कृतस्य कार्यपरिसमाप्तौ त्याग एव कर्तव्यः । तेनावज्वलनार्थं पृथक्कृतमवज्वलने कृते पृथगेव निधाय तेनैव परिहरणमपि कृत्वा त्यजेत् ।

**समुदन्तं कर्षन्निवोदगुद्वासयेद्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति निदधत् ।**

सम्यगुद्गतोऽन्तो यस्य द्रव्यस्य तत्समुदन्तं द्रव्यम् । परितः स्थालीसंबद्धप्रदेशोऽन्त इत्युच्यते । यदा पच्यमानं पय एवमवस्थं भवेत्तदा कर्षन्निवोदगुद्वासयेत् । कर्षन्निवेति मन्दगत्येत्यर्थः । निदधदिति । त्रिभिर्मन्त्रैस्त्रिर्निधानं कुर्वन्नवतारयेत् । प्रथमद्वितीयाभ्यामाकाशे धृत्वा तृतीयेन भूम्यां निदध्यात् ।

---

* घ. सद्यस्काला पौर्णमासी व्यहकाला वा रूपं कालोऽनुनिर्वापो देवताश्रपणं तथा । आदौ ये विधृताः पक्षास्त एव स्युः सदैव हि । + अत्र प्रथमारम्भे यः पक्षः स एव । न सर्वदा तुल्यविकल्पः ।

---

१ क. घ. च. °णं दध्यादी° । २ क. व. ङ. च. झ. °नाद्येनो° । ३ ङ. °णात् । ४ ख. ग. °पवचना° । ५ घ. ङ. च. °दङ्ङुद्दा° । ६ च. समुद्धृतोऽ° । ७ ङ. झ. °म् । द्रव्यस्य प° । ८ ख. ग. घ. ङ. च. °संबन्धप्र° ।

**सुहुतकृतः स्थ सुहुतमकार्ष्टेत्यङ्गारानति-सृज्य स्रुक्स्रुवं प्रतितपेत्प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति।**

अतिसर्गोऽङ्गाराणां गार्हपत्ये प्रक्षेपः।

**उत्तरतः स्थाल्याः स्रुचमासाद्योमुन्नयानीत्यतिसर्जयीत।**

स्थाल्या उत्तरतः स्रुचमासाद्य स्रुवहस्त एव सन्नोमुन्नयानीत्यनेन मन्त्रेणाऽऽहिताग्निम-तिसर्जयेत्।

**आहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैतच्छ्रुत्वोमु-न्नयेत्यतिसृजेत्।**

विहरणकाल एवाऽऽहिताग्निश्चाध्वर्युः पत्नी च स्नात्वाऽऽचम्य तीर्थेन प्रविशन्ति। तत्राध्वर्युर्विहरणं कृत्वा होमकाले प्राप्ते निष्क्रम्य प्राङ्मुख उदङ्मुखो वाऽऽचम्य तीर्थेनैव प्रविश्य पर्युक्षणादि कुर्यात्। पत्नी तु गार्हपत्यस्य दक्षिणत आस्त आहोमपरि-समाप्तेः। आहिताग्निश्चाऽऽहवनीयविहरणकाले दक्षिणत उपविश्योद्धराऽऽहवनीयमित्यध्वर्युं संप्रैषमुक्त्वाऽऽस्ते। ततो होमकाले प्राप्ते निष्क्रम्य प्राङ्मुख उदङ्मुखो वाऽऽचम्य तीर्थेनैव प्रपद्यापरेण वेदिदेशं पूर्वेण गार्हपत्यं दक्षिणाग्निं च गत्वा वेदेर्दक्षिणत उपविशेत्। उपविष्टः सन्नेतदतिसर्जनवाक्यं श्रुत्वोमुन्नयेत्यतिसृजेत्।

**अतिसृष्टो भूरिळा भुव इळा स्वरिळा भूर्भुव इळेति स्रुवपूरमुन्नयेत्।**

अतिसृष्ट इतिवचनं प्रवसति यजमाने स्वेनैवातिसृष्ट उन्नयेन्नानतिसृष्ट इत्येवमर्थम्। चत्वार एते मन्त्राः समेतत्रात्संसर्गाणामतश्चतुष्कृत्व उन्नयेत्। स्रुवपूरमिति णमुल्प्रत्ययप्रयो-गाच्च। अग्नियमग्नियमित्युन्नयनभेददर्शनाच्च। स्रुवपूरमिति। स्रुवं पूरयित्वा पूरयित्वेत्यर्थः। अत्र पञ्चममन्त्रस्याभावात्पञ्चावत्तिनां तूष्णीमेव पञ्चममुन्नीयते पुरुषविशेषधर्मत्वादवदानवि-शेषसंबन्धस्य।

**अग्नियमग्नियं पूर्णतमं योऽनु ज्येष्ठमृद्धिमिच्छेत्पुत्राणाम्।**

यो यजमानः पूर्वजातानुसारेणाऽऽत्मनः पुत्राणामृद्धितारतम्यमिच्छेत्तस्य पूर्वः पूर्वः पूर्णतमो भवेत्। अनेकपुत्रस्यायं काम्यः कल्पो न चतुष्पुत्रस्यैव।

**योऽस्य पुत्रः प्रियः स्यात्तं प्रति पूर्णमुन्नयेत्।**

प्राकृतानामेव पञ्चानां चतुर्णां वैकं स्रुवं प्रियं पुत्रं ध्यात्वा पूर्णमुन्नयेत्। अयमपि काम्यः। अयमेकपुत्रस्यापि भवति।

---

१ घ. च. स्रुमा°। २ च. स्रुवमा°। ३ ख. ग झ. प्रविश्याप°। ४ ख. ग. ङ. च. °मवत्त्वा°। ५ ङ. अग्र्यमग्र्यमि°। ६ ङ. अग्र्यमग्र्यं पू°। ७ च. °त्। प्राकृ°।

**स्थालीमभिमृश्य समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा प्राणसंमितामाहवनीयसमीपे कुशेषूपसाद्य जान्वाच्य समिधमादध्याद्रजतां त्वाग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहेति ।**

स्थाल्याः स्रुवेण स्रुच्युन्नयनं कृत्वा स्थालीमभिमृश्य स्रुचा सह समिधं च गृहीत्वाऽध्यधि गार्हपत्यं गार्हपत्यस्योपरि समीपं हृत्वाऽऽहवनीयस्य नेदीयसि नासिकासंमितां हरेत् । हृत्वा तस्य पश्चाददूरे कुशेषूपसाद्य दक्षिणं जानु निपात्य तां समिधमादध्याद्रजतामिति मन्त्रेण ।

**समिधमाधाय विद्युदसि विद्य मे पाप्मानमग्नौ अद्भ्रेत्यप उपस्पृश्य प्रदीप्तां द्व्यङ्गुलमात्रेऽभिजुहुयाद्भूर्भुवः स्वरोमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति ।**

समिधमाधायेत्युच्यते समिदाधानधर्मस्य जानुनिपातनस्यानुवृत्त्यर्थम् । समिधमाधायेत्यनेनैव समिद्ग्रहणेन पूर्वसूत्र आदध्यादित्येवोक्तेऽपि समिध एवाऽऽधाने सिद्धे यत्पूर्वसूत्रे समिद्ग्रहणं करोति तज्ज्ञापयति यत्र यत्र समिधमादध्यात्तत्र तत्र जान्वाच्याऽऽदध्यादिति । विद्युदसीत्यप उपस्पृश्य प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रेऽभिजुहुयात् । 'भूर्भुवः स्वरोम्' इतिमन्त्रेण ।

**पूर्वामाहुतिं हुत्वा कुशेषु सादयित्वा +गार्हपत्यमवेक्षेत पशून्मे यच्छेति ।**

हुत्वेतिवचनं निपातितजानुरेवोत्तरमपि कुर्यादित्येवमर्थम् । पूर्वामितिवचनं पूर्वाहुत्युत्तरकालीनं स्रुचं सादयित्वैव कुर्यात्, उत्तराहुत्युत्तरकालीनं स्रुग्धस्त एव कुर्यादित्येवमर्थम् ।

**अथोत्तरां तूष्णीं भूयसीमसंसृष्टां प्रागुदगुत्तरतो वा ।**

अथेत्यानन्तर्यवचनेन पूर्वाहुत्योत्तराहुतेः संबन्धः क्रियते । तेन जान्वाच्येत्यस्यानुवृत्तिर्लभ्यते । प्राधान्यं चोत्तराहुतेः । अतः पूर्वाहुतौ हुतायां द्रव्यदोषे सत्युत्तराहुत्यर्थं द्रव्यमुत्पादयितव्यमेव । भूयसीं पूर्वाहुतेर्भूयोद्रव्याम् । असंसृष्टां पूर्वयाऽऽहुत्या । प्रागुदक् पूर्वाहुतेरुत्तरतो वा तस्या एव ।

---

\+ घ.—स्रुच्यमाघारपथमभिजुहुयादिति द्वैधव्याख्याने सुबोधिन्यां—प्रधानहवींषि स्रुच्याघारपथस्योपरि जुहुयादिति । अथैनत्स्रुवेणाभिजुहोतीति सूत्रव्याख्यावसरेऽप्येनदनुमहतं मेक्षणमभि मेक्षणस्योपरि संस्रावेण स्विष्टकृद्धोमानन्तरमित्यादि । अभिहोम उपरिहोम इति प्रायश्चित्तप्रश्ने रुद्रदत्तः ।

---

१ ख. म. °नीये ने° । २ च. °द्रव्यम् । ३ क. °त्तरो वा ।

**प्रजापतिं मनसा ध्यायात्तूष्णींहोमेषु सर्वत्र ।**

यत्र तु तूष्णींशब्दविशिष्टो होमश्चोद्यते तत्र प्रजापतिदेवतां ध्यायेद्देवतासाध्यत्वाद्धोमस्य । ध्यानत्वादेव मानसत्वे सिद्धे मनोग्रहणं शब्दध्यानार्थम् । तेन चतुर्थ्यन्तं प्रजापतिशब्दं ध्यात्वा तदनन्तरं स्वाहेत्युपांशूक्त्वा जुहुयात् । होमेष्विति बहुवचनादेव प्रकरणादुत्कर्षे सिद्धे सर्वत्रग्रहणं[2] गाह्येष्वपि प्रापणार्थम् ।

**भूयिष्ठं स्रुचि शिष्ट्वा त्रिरनुप्रकम्प्यावमृज्य कुशमूलेषु निमार्ष्टि पशुभ्यस्त्वेति ।**

उत्तराहुतेर्भूयिष्ठं[3] भूयोद्रव्यं पूर्वाहुतेर्भूयिष्ठं यथा भवति । तथा भक्षार्थं स्रुचि शेषयेत् । पूर्वाहुत्यर्थं प्रक्षिप्ताद्द्रव्यादुत्तराहुत्यर्थं भूयो भवति । तस्मादपि भूयो भक्षार्थं भवति । तत्पूर्वाहुत्यपेक्षया भूयिष्ठमित्युच्यते । भूयिष्ठं द्रव्यं स्रुचि शेषयित्वा स्रुचमेवाऽऽहुतिदेशस्थां प्रकम्पयेत् । ततः स्रुग्गतलेपं पाणिनाऽधोमुखेनावमृज्य पाणिगतं लेपं कुशमूलेषु निर्मार्ष्टि निमृजेत्पशुभ्यस्त्वेति ।

**तेषां दक्षिणत उत्ताना अङ्गुलीः करोति प्राचीनावीती तूष्णीं स्वधा पितृभ्य इति वा ।**

तेषां कुशमूलानां दक्षिणत उत्ताना अङ्गुलीर्निदध्यात् । प्राचीनावीती भूत्वा 'स्वधा पितृभ्यः' इति मन्त्रेण तूष्णीं वा ।

**अपोऽवनिनीय ।**

एतावदेव सूत्रम् । अपश्च कुशमूलानां दक्षिणतो निनयेदवाचीनेन पाणिना । एतावत्स्रुग्घस्त एव करोति । एवं वा तेषां दक्षिणत उत्ताना अङ्गुलीः करोति प्राचीनावीती तूष्णीं स्वधा पितृभ्य इति वाऽपोऽवनिनीय ।

**वृष्टिरसि वृश्च मे पाप्मानमप्सु श्च्ढ्रेत्यप उपस्पृश्य ।**

इदमपि सूत्रमेतावदेव । निधाय स्रुचमप उपस्पृशेत् ।

**आहिताग्निरनुमन्त्रयेत ।**

अधिकारोऽयम् ।

**आधानमुक्त्वा तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवासीदेति समिधम् ।**

समिदाधानमन्त्रेण तेन ऋषिणेत्यनेन मन्त्रेण च समिधमाधीयमानामनुमन्त्रयते ।

**ता अस्य सूद दोहस इति पूर्वामाहुतिम् ।**

---

१ च. 'श्चोत्पद्य°' । २ ख. ग. '°णं गृह्येऽप्यस्य प्रा°' । ३ घ. ङ. 'तेर्भूयो°' ।

एतयर्चा पूर्वामाहुतिमनुमन्त्रयते ।

**उपोत्थायोत्तरां काङ्क्षेतेक्षमाणो भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः ।**

इतिकाराध्याहारेण सूत्रच्छेदः । उत्तराहुतेर्हूयमानाया देशतः कालतश्च समीपे स्थित्वा कटाक्षेणेक्षमाणस्तामेवाऽऽहुतिमनुमन्त्रयते । काङ्क्षेतशब्दः कटाक्षवचनः । केचिदुत्तरामाहुतिमीक्षमाणोऽनुमन्त्रयते तन्मन्त्राभिहितान्कामान्। काङ्क्षेत चेति वर्णयन्ति ।

**आग्नेयीभिश्च ।**

याभिः काभिश्च त्र्यवराभिराग्नेयीभिरुत्तरामेवाऽऽहुतिमनुमन्त्रयते ।

**अग्न आयूंषि पवस इति तिसृभिः ॥ ३ ॥**

---

**संवत्सरे संवत्सरे ।**

पूर्णे पूर्णे संवत्सर एताभिरधिकाभिः सकृदनुमन्त्रयेत[1] ।

**यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् ।**

यवाग्वा पयसा वा स्वयं पर्वणि पौर्णमास्याममावास्यायां[2] वा सायं प्रातर्यजमानः स्वयमेवाग्निहोत्रं जुहुयात् । अस्मिन्सूत्रे पर्वणि द्रव्यनियमः स्वयंकर्तृ[3]नियमश्च विधीयते । स्वयंहोमे समिधमनुमन्त्र्य 'विद्युदसि ' इति पूर्वामाहुतिमनुमन्त्र्य ' पशून्मे यच्छ ' इत्युत्तरामाहुतिमनुमन्त्र्य वृष्टिरसि ' इत्येवं क्रमो भवति । यत्किंचिदग्निहोत्रद्रव्यं काम्यं वैकल्पिकं वा प्रयुज्यते तत्सायमुपक्रम्य प्रातरपवर्गं प्रयुज्यते नान्यथेति । प्रतिनिधिस्त्वेकप्रयोगपर्यवसाय्येव ।

**ऋत्विजामेक इतरं कालम् ।**

ऋत्विजां मध्य एकः कश्चिदृत्विगितरस्मिन्कालेऽग्निहोत्रं जुहुयात् ।

**अन्तेवासी वा ।**

इतरस्मिन्कालेऽग्निहोत्रं जुहुयादिति शेषः । अन्ते समीपे वसतीत्यन्तेवासी । स पुनः पुत्रः शिष्यो वा । अत्र किंचिदुच्यते—ऋत्विजस्त्रिविधा देवभूताः पितृभूता मनुष्यभूता इति । ये कर्मणि कर्मणि व्रियन्ते ते देवभूताः । येऽन्वयागता ऋत्विजस्ते पितृभूताः । ये त्वेकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं व्रियन्ते ते मनुष्यभूताः । तत्र यस्याऽऽहिताग्नेः पितृभूता मनुष्यभूता वा ऋत्विजः सन्ति तेषामृत्विजामेकः कश्चित्पर्ववर्जितेषु कालेषु जुहुयात् । यस्य तु देवभूतास्तस्यान्तेवास्येवेति[4] निवेशः ।

**स्पृष्ट्वोदकमुदङ्ङावृत्य भक्षयेत् ।**

---

१ ख. ग. झ. 'न्त्रयते । य° । २ ख. ग. ङ. च. झ. °यां च सा° । ३ ख. ग. °र्तृत्वानि° । ४ ख. ग. झ. ङ. च. °ति विनि° ।

उक्तमेवोदकोपस्पर्शनं कृत्वोदगावृत्य स्रुग्गतं शेषं भक्षयेत् । उक्तसंकीर्तनमाहिताग्न्यधिकारे सत्यपि होमकर्तृप्रापणार्थम् ।

**अपरयोर्वा हुत्वा ।**

भक्षयेदिति शेषः ।

**आयुषे त्वा प्राश्नामीति प्रथमम् । अन्नाद्याय त्वेत्युत्तरम् ।**

प्रथममुत्तरमिति भक्षयोः संबन्धकरणार्थम् । तेनोत्तरस्यापि मन्त्रस्य प्राश्नाम्यन्तता भवति ।

**तूष्णीं समिधमाधायाग्नये गृहपतये स्वाहेति गार्हपत्ये ।**

जुहुयादित्यध्याहारः । तूष्णींग्रहणमाहवनीये[2] समिदाधाने होमे च ये धर्मा जानुनिपातनं प्रदीप्ताभिहोमो द्व्यङ्गुलमात्राभिहोमश्च[3] तेषां प्राप्तिसूचनार्थम् ।

**नित्योत्तरा ।**

उत्तराहुतिं[4] तूष्णीं भूयसीमित्येवमुक्तेत्यर्थः ।

**तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेति दक्षिणे । * अग्नयेऽन्नादायान्नपतये स्वाहेति वा ।**

मन्त्रविकल्पोऽयम् ।

**नित्योत्तरा ।**

गतार्थमेतत् ।

**भक्षयित्वाऽभ्यात्ममपः स्रुचा निनयते त्रिः सर्पदेवजनेभ्यः स्वाहेति ।**

भक्षयित्वेतिवचनं भक्षणानन्तरमेव निनयनमपि स्यादित्येवमर्थम् । अभ्यात्ममपः स्रुचा निनयेते[5] त्रिः । असंस्कारकर्मत्वान्मन्त्रोऽपि त्रिरावर्तते ।

**अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः प्रागुदीच्योर्निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तऋषिभ्यः स्वाहेतरजनेभ्यः स्वाहेति[6] ।**

अथेत्यभ्यात्मनिनयनानन्तरमेवेदमपि कर्तव्यमिति दर्शयति—एनां स्रुचमित्यर्थः । विहारस्य प्रागुदग्देशे पूर्णाश्चतस्रः स्रुचो निनयेदेकैकेन मन्त्रेणैकैकामिति ।

---

* घ.—एतामेवमाहुतिं जुहुयात् । वेदनं प्रशंसन्ति । अन्नादो हान्नपतिर्भवत्यश्नुते प्रजयाऽन्नाद्यम् । य एवं वेदेति । वेदिता स्वयमन्नादो रोगराहित्या( दन्नं ) भोक्तुं समर्थोऽन्नपतिरन्नस्वामी च भवति । तथा प्रजया हि पुत्रादिरूपया सहान्नाद्यं प्राप्नोति । ब्राह्मणभाष्ये सप्तमपञ्चिकायाम् ।

---

१ क. घ. च. 'वोप° । २ घ. ङ. च. °नीयस° । ३ ख. ग. झ. ङ्गुलाभि° । ४ झ. हुतिस्तूष्णीं° । ५ ख. ग. घ. च. °यत इत्यसं° । ६ ख. ग. °हेतीत° ।

**पञ्चमीं कुशदेशे पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहेति । षष्ठीं पश्चाद्गार्हपत्यस्य प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहेति ।**

पञ्चमीं षष्ठीमिति पूर्णस्रुक्संप्रत्ययार्थम् ।

**प्रताप्यान्तर्वेदि निदध्यात् ।**

प्रतपनमाहवनीयेऽन्तर्वेदिशब्दसमन्वयात् । प्रताप्य स्रुचमन्तर्वेदिदेशे निदध्यादित्युक्तम् ।

**परिकर्मिणे वा प्रयच्छेत् ।**

परिचारकः परिकर्मीत्युच्यते ।

**अग्रेणाऽऽहवनीयं परीत्य समिध आदध्यात्तिस्रस्तिस्र उदङ्मुखस्तिष्ठन् ।**

पूर्वेणाऽऽहवनीयं विहारस्य दक्षिणदेशं गत्वा तस्य तस्याग्नेर्दक्षिणत उदङ्मुखस्तिष्ठंस्तिस्रस्तिस्रः समिध आदध्यात् । पुनः प्रत्येत्य पर्युक्षणादि कुर्यात् ।

**प्रथमां समन्त्राम् ।**

सकृन्मन्त्रेणेति परिभाषा प्रधानकर्मसु न प्रवर्तत इति कृत्वा प्रथमां समन्त्रामित्युक्तवानाचार्यः ।

**आहवनीये दीदिहीति गार्हपत्ये दीदायेति दक्षिणे दीदिदायेति ।**

सर्वे स्वाहाकारान्ताः कर्तव्याः ।

**उक्तं पर्युक्षणम् ।**

यदुक्तं पर्युक्षणं तदिहापि कर्तव्यम् ।

**ताभ्यां परिसमूहने ।**

पूर्वोक्तमिदं च द्वे पर्युक्षणे ताभ्यां परिसमूहने व्याख्याते इति धर्मातिदेश एकोऽर्थः । परिसमूहने इति योगविभागात्स्वरूपसिद्धिश्च भवति । मन्त्रस्तु जपित्वेतिपृथक्करणान्न भवति लिङ्गाभावाच्च ।

**पूर्वे तु पर्युक्षणात् ।**

ये द्वे परिसमूहने पर्युक्षणकर्मके विहिते तयोरनेन क्रमो विधीयते पर्युक्षणाभ्यां पूर्वे परिसमूहने भवत इति ।

**एवं प्रातः ।**

सायंकालेऽग्निहोत्रविधिरुक्तः, एवं प्रातःकालेऽपि होमः कर्तव्य इत्यर्थः ।

तत्र विशेषमाह—

**उपोदयं व्युषित उदिते वा ।**

---

१ ख. ग. ङ. च. °णधर्मे° ।

उपोदयमादित्योदयसमीप इत्यर्थः । व्युषिते, उषस्युदित इत्यर्थः । उदिते, आदित्यमण्डले कृत्स्न उदित इत्यर्थः । एते त्रयः प्रातर्होमप्रधानकालाः । तत्र यद्युपोदयमुदित इत्युच्यते, उदित आदित्ये सत्युदयसमीप इति द्वाभ्यां पदाभ्यामेक एव कालो विहितः स्यात् , तद्भ्रान्तिनिवृत्त्यर्थं व्युषितशब्दात्पूर्वमुपोदयशब्दं पठितवानाचार्यः । एतेषु त्रिषु कालेषु प्रधानं यथा संपद्यते तथाऽङ्गानामेवोत्कर्षोऽपकर्षो[2]+ द्रष्टव्यः ।

**सत्यऋताभ्यां त्वेति पर्युक्षणमोमुन्नेष्यामीत्यतिसर्जनं हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहेति समिदाधानं भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति होम उन्मार्जनं च ॥ ४ ॥**

एते प्रातर्होमे विशेषाः ॥ ४ ॥

**प्रवत्स्यन्नग्नीन्प्रज्वल्याऽऽचम्यातिक्रम्योपतिष्ठते ।**

यस्मिन्स्तामेऽग्नय आसते तस्मा[3]त्प्रदेशाद्ग्रामान्तर एकरात्रावमो वासः प्रवासस्तं करिष्यन्प्रवत्स्यन्भवति । अग्नीनिति बहुवचनात्सर्वान्विहृत्य प्रज्वलयेत् । प्रज्वल्याऽऽचम्य तीर्थदेशेन प्रपद्यातिक्रम्याग्नीनुपतिष्ठते । अतिक्रम्येति । अव्यक्तोपस्थानदेशमतिक्र[4]म्यात्यन्तसमीपं गत्वा तं तमग्निमुपतिष्ठत इत्यर्थः । इदं कर्माऽऽहिताग्निः स्वयमेव कुर्यात् ।

इ[5]दमनेनेत्याह—

**आहवनीयं शंस्य पशून्मे पाहीति । गार्हपत्यं नर्यप्रजां मे पाहीति । दक्षिणमथर्वपितुं मे पाहीति । गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् । अविनष्टानविहृतान्पूषैनानभिरक्षत्वस्माकं पुनरायनादिति ।**

दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन्गार्हपत्याहवनीयावीक्षते, इमान्मे मित्रावरुणाविति । उत्तरत्र 'यथेतं प्रत्येत्य' इतिवचनात्तत्रैव तिष्ठन्निति लभ्यते । द्विवचनलिङ्गाद्युगपदेवेक्षेत ।

**यथेतं प्रत्येत्य प्रदक्षिणं प[6]र्यन्नाहवनीयमुपतिष्ठते । मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे । तत्त्वं बिभृहि पुनरामैतोस्तवाहं नाम बिभराण्यग्न इति ।**

---

+ घ.—उदितेत्यस्य प्रधानत्वम् । यथा ' उद्यन्तु खलु वा आदित्य आहवनीयेन रश्मीन्संदधाति ' इति श्रुतिः ।

---

१ क. ख. ग. च °पमित्य° । २ ख. ग. °र्षौ वा द्र° । ३ ख ग. ङ. °स्मात्प्रेत्य ग्रामा° । ४ घ. ङ. च. °क्रम्य स° । ५ ग. इमम° । ६ ख. ग. छ. परिय° ।

आहवनीयमुपस्थायोत्तरेण विहारं गत्वा गार्हपत्यस्य प्रत्यगुदग्देशेऽत्यन्तसमीपं गत्वा तमुपस्थाय तद्वदेव स्थित्वा दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन्गार्हपत्याहवनीयेक्षणं कृत्वा पुनस्तेनैव मार्गेणाऽऽहवनीयसमीपं गत्वा ततो गमनाय प्रदक्षिणमावर्तमान आहवनीयमुपतिष्ठते 'मम नाम प्रथमम्' इत्यनेन मन्त्रेण ।

**प्रव्रजेदनपेक्षमाणो मा प्रगामेति सूक्तं जपन् ।**

पृष्ठतोऽग्नीननवेक्षमाणो मा प्रगामेति सूक्तं जपन्यथेष्टं गच्छेत् । सूक्तग्रहणमनभ्यासार्थम् ।

**आराद्ग्निभ्यो वाचं विसृजेत ।**

अग्निभ्यो दूराद्गत्वा वाचं विसृजेत । यावद्गतेऽग्न्यागारच्छदिर्न दृश्यते तावदत्राऽऽराच्छब्देनोच्यते । अत्र वाग्विसर्गविधानादितः । प्राग्वाग्यत एव सर्वं कुर्यात् ।

**सदा सुगः पितुमाँ अस्तु पन्था इति पन्थानमवरुह्य ।**

ब्रूयादिति शेषः । योऽभिलषितदेशगामी पन्थास्तं प्राप्येत्यर्थः ।

**अनुपस्थिताग्निश्चेत्प्रवासमापद्येत । इहैव सन्तत्र सन्तं त्वाऽग्ने हृदा वाचा मनसा वा बिभर्मि । तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठत इति प्रतिदिशमग्नीनुपस्थाय ।**

यदि कदाचिद्यथोक्तोपस्थानमकृत्वैव गन्तव्यं स्याद्दैवान्मानुषाद्वा निमित्तात्तदा तत्रैव स्थितः 'इहैव सन्' इत्यनेन मन्त्रेण सर्वानग्नीनुत्पत्तिक्रमेण तं तमग्निं मनसि ध्यात्वा तां तां दिशमभिमुखमुपस्थाय गच्छेत् ।

**अपि पन्थामगन्महीति प्रत्येत्य ।**

ब्रूयादिति शेषः । प्रवासं कृत्वा प्रत्येत्य स्वग्रामसमीपं प्राप्य 'अपि पन्थामगन्महि' इति ब्रूयात् ।

**समित्पाणिर्वाग्यतोऽग्नीञ्ज्वलतः श्रुत्वाऽभिक्रम्याऽऽहवनीयमीक्षेत । विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषाम । नमस्ते अस्तु मीढुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वः संमारय्यासृजेति[१२] ।**

१ घ. च. °पन्थमाह° । २ घ. च. °नीयं चेक्ष° । ३ क. घ. च. ततः प्र° । ४ च. °भ्योऽदू । ५ ख. ग. ङ. प्राग्यतवाग्गेव । ६ ख. ग. झ. °स्तं देशं प्रा° । ७ ख. ग. झ. °य । आगच्छेदिति शेषः । य° । ८ ख. ग. घ. झ. °कृत्वा गतः स्या° । ९ ख. ग. झ. °स्याद्देवाद्वा मा° । १० क. ख. ग. °मभिमुख उप° । ङ. °मग्नीनुप° । ११ ख. ग. °स्थायाऽऽग° । १२ ख. ग. ङ. °ति । यतवाक्समि° ।

वाग्यतः समिधो गृहीत्वा पुत्रेण शिष्येण वा पूर्वं प्रस्थापिते नाग्नीन्विहृताञ्ज्वलतश्च ज्ञात्वा[1] स्वयमाहिताग्निराचम्य शुचिर्भूत्वा तीर्थेन प्रपद्याव्यक्तदेशादत्यन्तं समीपदेशमभिक्रम्याऽऽहवनीयमीक्षेत 'विश्वदानीम्' इति द्वाभ्यां मन्त्राभ्याम् ।

**अग्निषु समिध उपनिधायाऽऽहवनीयमुपतिष्ठते । मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः । ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेद इति ।**

इदानीमानीताः समिधो विभज्य तस्य तस्याग्नेः समीपे निधाय तत आहवनीयमुपतिष्ठते 'मम नाम तव च' इत्यनेन मन्त्रेण ।

**ततः समिधोऽभ्यादध्यात् ।**

उपनिहिता एवास्मिन्ननेनेत्याह—

**आहवनीये । अगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्व स्वाहेति । गार्हपत्येऽयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहेति । दक्षिणेऽयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः । अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहेति । गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहानजूगुपतं युवम् । अविनष्टानविहृतान्पूषैनानभ्यरक्षीदास्माकं पुनरायनादिति ।**

दक्षिणाग्निसमीपे स्थित इत्युक्तम् ।

**यथेतं प्रत्येत्य । ( परि*समुह्योदग्विहारादुपविश्य भूर्भुवः स्वरिति वाचं विसृजेत ) ।**

यथेतमित्युक्तार्थम् । यथेतं प्रत्येत्य सर्वस्य विहारस्य परिसमूहनं कृत्वा तस्योत्तरत उपविश्य वाचं विसृजेत भूर्भुवः स्वरित्यनेन । असत्यतिप्रवासनिमित्त एवं प्रयोगक्रमः । सति तु तन्निमित्ते यथेतं प्रत्येत्य[3] नैमित्तिकं कृत्वा परिसमूहनवाग्विसर्गौ कुर्यात् । एवमेव सूत्रस्वरूपं विविच्यम् ।

**प्रोष्य भूयो दशरात्राच्चतुर्गृहीतमाज्यं जुहुयात् । मनोज्योतिर्जुषता-**

---

* छ. संज्ञकेमूलपुस्तक एतद्धनुश्विहान्तर्गतसूत्रं 'प्रतिहोममेके' इत्यग्रिमसूत्रानन्तरं पठितमप्यर्थानुरोधाद्वृत्तिकृतैतत्सूत्रार्थैकवाक्यतयैव व्याख्यातम् ।

---

१ ख. ग. झ. श्रुत्वा । २ ङ. °वो रक्ष° । ३ ख. ग. °त्य तन्नैमि° ।

**माज्यं मे विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहेति ।**

दशरात्रादूर्ध्वं प्रवासं कृत्वा जुह्वां चतुर्गृहीतं गृहीत्वाऽनया जुहुयान्मनो ज्योतिरित्येतयर्चा । चतुर्गृहीतशब्दादेवाऽऽज्यद्रव्यसिद्धौ सत्यामाज्यग्रहणं तूष्णीमुत्पवनलाभार्थम् ।

**अग्निहोत्राहोमे च ।**

अग्निहोत्रहोमविच्छेदे चैतामाहुतिं जु+हुयात् । विशेषाभावादेकस्य द्वयोर्बहूनामपि विच्छेद एषैव प्रायश्चित्तिः कार्या ।

**प्रतिहोममेके ।**

चशब्दोऽत्राध्याहार्यः । एतामाहुतिं हुत्वा प्रतिहोमं च कुर्यादित्यर्थः । प्रतिहोमो नाम यावन्तः काला होमेन विच्छिन्नास्तावतामेकैकं कालं प्रत्येकैको होमः कर्तव्य इति ।

एवं परिसमुह्येत्यादिपूर्वमेव व्याख्यातम् ।

**गृहानीक्षेताप्यनाहिताग्निर्गृहा मा बिभीतोपैवः स्वस्त्येवोऽस्मासु च प्रजायध्वं मा च वो गोपतीरिषदिति प्रपद्येत गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानीति शिवं शग्मं शंयोः शंयोरिति त्रिरनुवीक्षमाणः ।**

ईक्षणं प्रपदनं चानाहिताग्निरपि कुर्यात् । 'गृहा मा बिभीत' इतीक्षेत । 'गृहानहम्' इति प्रपद्येत । प्रतिपद्यमान एवं प्रपद्येत—'शिवं शग्मं शंयोः शंयोः' इति त्रिरनुवीक्षमाणः । अनुवीक्षणमनुमन्त्रणं मन्त्रेण प्रकाशनम् । तत्पुनर्मन्त्रेण विना कर्तुं न शक्यत इति मन्त्रोऽपि त्रिरावर्तते ।

**विदितमप्यलीकं न तदहर्ज्ञापयेयुः ।**

अलीकमप्रियम् । अवगतमप्यप्रियं प्रवासादागतस्य तस्मिन्नहनि न निवेदयेयुः ।

**विज्ञायतेऽभयं वोऽभयं मेऽस्त्वित्यैवोपतिष्ठेत प्रवसन्प्रत्येत्याहरहर्वेति ॥ ५ ॥**

वाशब्दश्च शस्यार्थे । 'अभयं वः' इत्यनेन मन्त्रेण प्रवत्स्यन्प्रवासादागतश्चाहरहरग्निहोत्रहोमे चोपतिष्ठेतेति श्रुतिरेवोपन्यस्ता विज्ञायत इति । अस्मिन्पक्षे प्रयोगक्रमः—

---

+ घ. 'स्वयं दशरात्रमहुत एतामाहुतिं जुहुयात्' देवत्राते ।

---

१ ख. ग. ज्ञ. जुहोति मनो° । २ घ. च. °पमः स्व° । ३ छ. °वीक्ष्यमा° । ४ ङ. प्रप°।

विहृत्य प्रज्वाल्याऽऽचम्य तीर्थेन प्रपद्य तत्रैव स्थित्वा सर्वानग्नीन्सकृदेवोपस्थाय प्रदक्षिणमावृत्य तीर्थेनैव निष्क्रम्य 'मा प्रगाम' इतिजपन्प्रव्रज्य 'सदा सुगः' इति पन्थानं प्राप्य ब्रूयात् । प्रत्येत्य 'अपि पन्थाम्' इत्युक्त्वा विहृतान्ज्वलितांस्तीर्थेनैव प्रपद्य तत्रैव स्थित्वा 'अभयं वः' इत्युपस्थाय परिसमूहनादि शेषं पूर्ववत् । अतिप्र*वासोऽस्ति चेत्तस्य नैमित्तिकमपि कुर्यात् । अग्निहोत्रहोमे[1] च दक्षिणाग्निहोमानन्तरं 'अभयं वः' इत्युपतिष्ठेत । पूर्वोक्तस्यानुमन्त्रणस्य[2] याजमानत्वादस्य चोपस्थानत्वान्न विकल्पः, तेन समुच्चय एव । अनुपस्थिताग्नेः[3] प्रवास इहैव सन्निर्त्येतदेव[4] नान्यत्किंचित् ॥ ९ ॥

## अमावास्यायामपराह्णे पिण्डपितृयज्ञः ।

अमावास्याशब्दः प्रतिपत्पञ्चदश्योः संधिवचनोऽप्यत्रापराह्णशब्दसमन्वयात्तद्वत्यहोरात्रे[5] वर्तते । तस्यापराह्णेऽह्नश्चतुर्थे भागे पिण्डपितृयज्ञः कर्तव्य औपवसथ्येऽहनि[6] । यजनीये चेत्स्वार्थ एव दक्षिणाग्निः प्रणीयते । यदा पुनरहोरात्रसंधौ तिथिसंधिः स्यात्तदौपवसथ्य एवाहनि × क्रियते ।

**दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेद्ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्वस्मादिति ।**

एकोल्मुकमेकतः प्रदीप्तमुल्मुकं प्राग्दक्षिणा प्राग्दक्षिणस्यां दिशीत्यर्थः । दक्षिणाग्नेः सकाशादेकोल्मुकं गृहीत्वा तस्मादेव प्राग्दक्षिणस्यां दिशि प्रणयेत् 'ये रूपाणि' इत्यनेन मन्त्रेण ।

## सर्वकर्माणि तां दिशम् ।

अविशिष्टदिक्कानि[7] सर्वाणि कर्माणि तामेव प्राग्दक्षिणां दिशमभिमुखानि कर्तव्यानि ।

**उपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक्प्रत्यगुदक्त्वैकैकशः**

---

* घ.—भूयो दशरात्रादित्युक्तम् । दशरात्रं प्रवासेऽग्निरत्युच्छिन्नो भवति । तस्माद्दशरात्रं स्वयमालस्यादिनाऽहुत एतामाहुतिं जुहुयात् । अत ऊर्ध्वं पुनराधेयमेव व्युच्छिन्नत्वादिति देवत्रातभाष्ये । × घ.—अतोऽमावास्यातिथेरपराह्णव्याप्त्यभावेऽप्यनन्यक्षणावच्छिन्नाहोरात्र एव पिण्डपितृयज्ञः । पूर्वदिनापराह्णव्याप्तेस्त्वनादरः ।

---

१ ख. ग. घ. ङ. च. झ. होत्रहो° । २ ख. ग. ङ. झ. °क्तस्य याजमानस्यानुमन्त्रणत्वाद° । ३ ख. ग. °ताग्नेरिहै° । ४ ख. ग. झ. °त्येतावदे° । ५ क. घ. च. तत्राप° । ६ ख. ग. °थ्ये यजनीय एवाह° । ७ ख. ग. अवाशि° ।

**पात्राणि सादयेच्चरुस्थालिशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्ममेक्षणकमण्डलून् ।**

उभयोरप्युपसमाधानं परिस्तरणं च कर्तव्यं मध्यगतस्योभावितिशब्दस्य विशेषसंबन्धे कारणाभावात् । पात्राणीति चरुस्थाल्यादीन्युच्यन्ते । तेन शब्देन संव्यवहारार्थं चरुश्रपणार्था स्थाली चरुस्थाली । चरुस्थालीध्रुवाशब्दयोश्छान्दसं ह्रस्वत्वम् । एकेन प्रयत्नेन च्छिन्नाः कुशाः सकृदाच्छिन्नाः ।

**दक्षिणतोऽग्निष्ठमारुह्य चरुस्थालीं व्रीहीणां पूर्णां निमृजेत् ।**

निमृज्यादिति प्राप्ते निमृजेदिति च्छान्दसः । अग्निसमीपे तिष्ठतीत्यग्निष्ठं शकटम् । प्रयाणकाले वाऽग्नयो यत्र तिष्ठन्ति तदग्निष्ठम् । दक्षिणत आरुह्य तत्रैव शूर्पे स्थालीं निधाय व्रीहिभिरापूरयेत् । तां पूर्णां निमृज्याद्यथोपरितनाद्बिलदेशाच्छूर्पोपरि पतन्ति ।

**परिसन्नान्निदध्यात् ।**

स्थाल्यास्यदेशाच्छूर्पोपरि[1] ये पतन्ति तान्व्रीहीन्परिसन्नाञ्शकटे निदध्यात् ।

**कृष्णाजिन उलूखलं कृत्वेतरान्पत्न्यवहन्यादविवेचम् ।**

कृत्वा निधायेत्यर्थः । इतरान्स्थाल्यन्तर्गतानित्यर्थः । अविवेचम् । अविविच्याविविच्येत्यर्थः ।

**अवहतान्त्सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयेत् ।**

अवहतेष्ववहतवचनं फलीकरणनिवृत्त्यर्थम्[2] । दक्षिणाग्न्यधिकारेऽपि दक्षिणाग्नौ श्रपयेदिति श्रपणवचनं वचनादृते गार्हपत्य एव श्रपणमिति ज्ञापनार्थम् ।

**अर्वागतिप्रणीतात्स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति ।**

दक्षिणाग्न्यतिप्रणीतयोरन्तराल उल्लिखेदित्यर्थः ।

**तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य आसादयेदभिघार्य स्थालीपाकमाज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणतः ।**

आज्यं सर्पिरित्यादिर्ध्रुवायामाज्यं कृत्वा दक्षिणत इत्येवमन्तः पदसमूह आसादयेदभिघार्येत्यस्मात्पुरस्तादर्थतो द्रष्टव्यः । तेनायमर्थः—तां लेखामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्या[3]ऽऽज्यं सर्पिर्गृहीत्वा ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाऽऽज्येन स्थालीपाकमभिघार्य दक्षिणाग्नेः पश्चादासादयेत् । यदि नवनीतमाज्यकार्यार्थं स्यात्तदाऽस्य

---

१ ख. ग. ङ. झ. °रि पतिता° । २ क. ख. ग. ङ. च. °म् । दक्षिणाग्नौ° । ३ झ. °स्तीर्य ज्यार्यं स ।

विलापनमात्रं[1] कृत्वाऽन्यस्मिन्पात्र आनीय पवित्राभ्यां तूष्णीमुत्पूय ततो ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाभिघार्येत्यादिसमानम् । द्वितीयाज्यग्रहणस्येदं प्रयोजनं पात्रान्तरस्थमुत्पूय पश्चाद्ध्रुवायां ग्रहणमित्येवमर्थम् । पूर्वमाज्यग्रहणं कार्यलक्षणार्थम् । सर्पिः पक्कं नवनीतमपक्कम् ।

**आञ्जनाभ्यञ्जनकशिपूपबर्हणानि ।**

दक्षिणत इत्यत्रापि संबध्यते विशेषाग्रहणादपेक्षितत्वाच्च । आञ्जनादीनि च दक्षिणतो दक्षिणाग्नेर्निदध्यात् । पूर्वसूत्रेऽयथोक्रमेण सूत्रप्रणयनं दक्षिणत इत्यस्योभयार्थत्वायैव ।

**प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनाऽऽदायावदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति ।**

इध्मः पञ्चदशसंख्याकः । मेक्षणेनाऽऽदाय तेनैव जुहुयादवदानसंपदा । अवदानसंपन्नामोपस्तरणं द्विरवदानं प्रत्यभिघारणं च । तयेत्थंभूतं जुहुयात् । नात्र स्वाहाकारः, स्वधानमःशब्दस्य *प्रदानार्थत्वात् ।

**स्वाहाकारेण वाऽग्निं पूर्वं यज्ञोपवीती ।**

स्वधानमःशब्दस्य स्थाने स्वाहा[3]शब्दं वा कृत्वा जुहुयात् । अस्मिन्पक्षे[4] मन्त्रविपर्ययो व्यत्यासो यज्ञोपवीतत्वं च भवति । अग्निं पूर्वमिति । 'अग्नये कव्यवाहनाय' इत्येतं मन्त्रं पूर्वं कुर्यादित्यर्थः ।

**मेक्षणमनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदके*नोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति ।**

प्राचीनावीतीग्रहणं स्वाहाकारपक्षेपि मेक्षणानुप्रहरणोत्तरकालं प्राचीनावीतित्वप्रापणार्थम् । उभयस्मिन्पक्षेऽपि मेक्षणमग्नावनुप्रहर्तव्यमेव । त्रिभिर्मन्त्रैस्त्रिर्निनयेत्पिण्डस्थानेषु ।

**तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेऽसौ+ ये च त्वामत्रान्विति ।**

अधिकृतायां लेखायां लेखासंप्रत्ययार्थं तस्यां ग्रहणं क्रियते नाधिकाराल्लेखासंबन्धोऽस्तीति ज्ञापनार्थम् । तेन हविरासादनमग्नेः पश्चादिति साधितं भवति तथैवोक्तं च । निपृ-

---

* घ.—पित्र्यायां स्वधा नम इति वषट्कार इति प्रदानार्थत्वज्ञापनादिति सिद्धान्तभाष्ये ।
+ घ.—उपनयनं पिण्डस्थानदेशेष्विति जयन्तः । + घ.—एकाञ्जलिमुत्सृज्य तस्य गोत्रनाम गृहीत्वोत्तीर्थान्यानि [इति] गृह्यसूत्रे चतुर्थेऽध्याये चतुर्थखण्डे ।

---

१ घ. च. विलीयन° । २ ख. ग. °थाविधिक° । झ. °थार्थविधिक° । ३ क. घ. ङ. °हाकारं वा । ४ च. ख. ग. °क्षे यत्र विपर्यासो य° । ५ झ. पर्यासो य° ।

णीयाद्दद्यादित्यर्थः । निपरणं पित्र्येणैव तीर्थेन । पाणेरुत्तानत्वमजहदेव पित्र्येण तीर्थेन यदा कुर्यात्तदा पराचीन*पाणिर्भवति । असावित्यस्य स्थाने संबुध्यन्तानि पित्रादीनां नामानि गृह्णीयात् ।

**तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत्तदर्थत्वात् ।**

त्रयाणां मध्ये प्रेतानां पिण्डदानं, जीवानां प्रत्यक्षार्चनमिति गाणगारेर्मतं पितृप्रीत्यर्थत्वात्कर्मण इति ।

**सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात् ।**

पित्रादिभ्यस्त्रिभ्यः प्रेतेभ्यो जीवद्भ्यश्च सर्वेभ्यो निपरणं तौल्वलिर्मन्यते । क्रियायामुद्देशकारकत्वेन च गुणभूताः पितरो न तेषां प्रीतिः शास्त्रतो लोकतोऽवगम्यत इति ।

**अपि जीवान्त आ त्रिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारिता + ।**

आदिमध्यान्तशब्दैः पितृपितामहप्रपितामहा उच्यन्ते । जीवोऽन्तो यस्य स जीवान्तः अपिशब्देन जीवादिर्जीवमध्य इत्यपि लभ्यते जीवसर्व इति च अत्र त्रयाणामेकस्मिन्द्वयोः सर्वेषु वा जीवत्सु वा यावदर्थं परान्पितॄन्गृहीत्वा प्रेतेभ्यस्त्रिभ्यो दद्यादिति गौतमो मन्यते । क्रिया ह्यर्थकारिता । मरणपदार्थप्रवृत्ता यस्मात्क्रियेत्यर्थः ।

**उपायविशेषो जीवमृतानाम् ।**

पित्रादीनां जीवानां मृतानां च पिण्डदान उपायविशेषो वक्ष्यत इत्यर्थः ।

उपन्यस्तान्पक्षान्दूषयितुमाह——

**न परेभ्योऽन×धिकारात् न प्रत्यक्षम् । न जीवेभ्यो निपृणीयात् ।**

---

* घ.–आप० सत्या०—अवाचीनं पाणिर्ददातीति । अङ्गुष्ठभागपार्श्वमधो यस्य पाणेः सोऽवाचीन इति । निनयनसंस्कृतेषु स्थानेष्वेव ददातीति च संप्रदानकारकत्वाभावादत्रददातिर्निधानार्थः । उत्पत्तिविधौ त्रिर्निदधातीति श्रवणादिति च वैजयन्ती । + ख. ग. पुस्तकयोर्ह्यर्थकारितेत्यस्याग्रेऽयं ग्रन्थः—नामगोत्रे समुच्चार्य सम्यक्श्रद्धान्वितो ददेत् । संकीर्त्य देशकालादि तुभ्यं संप्रददे इति । न ममेति च सत्ताया निवृत्तिमपि कीर्तयेत् । दानहोमादिकं कुर्यादेवं श्राद्धसमन्वितः । इति हेमाद्र्युधृतवृद्धवसिष्ठवचनात् । × घ. सि० भाष्ये—कथमनधिकारः । पित्रे ददाति पितामहाय ददाति प्रपितामहाय ददातीति श्रुतेः । प्रेतेभ्यो ददातीति श्रुतेश्च ।

---

१ ख. ग. °त्वा परेभ्यः प्रे° । २ ख. ग. °प्रयुक्ता य° ।

गौतमगाणगारितौल्वलीनां क्रमेण दूषणानि ।

**न जीवान्तर्हितेभ्यः ।**

जीवव्यवहितेभ्यो न निपृणीयादित्यर्थः । सर्वपक्षव्यापीदं दूषणम् । सर्वत्रानधिकारादित्ययमेव हेतुः । अनधिकारात्, अयोग्यत्वादित्यर्थः । क्वचिद्विध्यभावात्क्वचिन्निषेधादयोग्यत्वमवगम्यते । अयमुपायविशेष उच्यते ।

**जुहुयाज्जीवेभ्यः ।**

जीवेभ्यो जुहुयात्प्रेतेभ्यो निपृणीयादित्यर्थः।[1] 'न जीवन्तमतीत्य दद्यात्' इत्यत्रापि निषेधोऽस्ति । तेन जीवपितुः जीवपितामहस्य जीवोभयस्य वाऽयमपि पक्षो नास्ति । तत्र होमान्तमनारम्भो* वा ।

अथ सर्वेषु जीवत्सु कथमित्याह—

**सर्वहुतं सर्वजीविनः ।**

सर्वहुतमिति । सर्वे पिण्डा होतव्या इत्यर्थः । पिण्डहोमो निपरणमन्त्रेण स्वाहाकारान्तेन कर्तव्यः । अत्र दूषणीयपक्षाणामुपन्यासे प्रयोजनं सपिण्डीकरणे पितामहे जीवति पितरि मृते संवत्सरादिषु कालेषु तस्यावश्यकर्तव्यत्वात्तत्रैषां पक्षाणामुपयोग इत्येवमर्थम् । एवमादीन्यन्यान्यपि प्रयोजनानि चिन्त्यानि ।

**नामान्यविद्वांस्ततपितामहप्रपितामहेति ॥ ६ ॥**

पित्रादीनां नामाज्ञाने ततादयः शब्दा नामस्थाने प्रयोक्तव्याः ॥ ६ ॥

**निपृतानतनुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ।**

निपूर्तानिति प्राप्ते निपृतानिति च्छन्दसो निर्देशः । निपूर्तानेव पिण्डाननुमन्त्रयते न हुतानित्येवमर्थं निपृतानित्युच्यते । तेन सर्वहोम इदमनुमन्त्रणं न भवति । अस्मिन्प्रकरणे यद्यपि पिण्डानामेवानुमन्त्रणमुपस्थानं प्रवाहणं च विधीयते तथाऽपि मन्त्राणां पितृलिङ्गत्वात्पिण्डा एव पितर इतिकृत्वा पितर एवैतैर्मन्त्रैरभिधातव्याः ।

**सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्त्यामीमदन्त पितरो यथाभागमावृषायीषतेति ।**

अनुमन्त्रयेतेति शेषः । सव्यावृदुदङ्ङित्येतावतैव सव्यावृत्त्योदङ्मुखत्वयोः सिद्धयोरा-

* घ. त्रयाणामन्यतमस्य जीवनेऽप्येवमेव । स्पष्टं चेदं यज्ञपुच्छसूत्र उक्तं जीवपृतेभ्य इत्यत्र वृत्तौ । आपस्तम्भसूत्रव्याख्यास्वप्येवम् ।

[1] ङ. °तीयादित्य° । च. घ. °तीयाद्द्यादित्य° ।

वृत्त्येतिवचनमावृत्त्यैवोच्छ्वासो न पूर्वमित्येतदर्थम् । यथाशक्त्यनुच्छ्वसन्नासित्वा पुनरभिप०र्यावृत्त्यामीमदन्त इत्यनुमन्त्रयते । आवृषायीषतेति यकारः पठितव्यः । व्यक्तिस्तु प्रमादजा ।

**चरोः प्राणभक्षं भक्षयेत् ।**

तूष्णीमेवात्र प्रा*णभक्षणं कार्यम् ।

**नित्यं निनयनम् ।**

यदुदकोपनयनमुक्तं शुन्धन्तां पितर इत्यादिमन्त्रकं तदत्र निनयनमित्युच्यते । तदत्र कर्तव्यमित्यर्थः ।

**असावभ्यङ्क्ष्वासावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने ।**

दद्यादिति शेषः ।

**वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वलोमैतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वमिति ।**

एतेषामन्यतमद्द्रव्यं वासोऽर्थे पिण्डेषु दद्यादित्यर्थः । दशा वस्त्रस्यान्तप्रदेशः । ऊर्णास्तुकां वा अविलोमानि । पञ्चाशद्वर्षाणि यस्य स तथोक्तस्तस्य भावः पञ्चाशद्वर्षता । पञ्चाशद्वर्षतायाः पञ्चाशद्वर्षेष्वतीतेषूर्ध्वं जीवन्स्वीयमेव लोम वासोर्थे दद्यात् । मन्त्रस्त्वयमेव सर्वेषु द्रव्येषु सकृदेव भवति ।

**अथैनानुपतिष्ठेत नमो वः पितर इषे नमो वः पितरः ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरोऽघोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम ।**

इतिकाराध्याहारेण सूत्रच्छेदः सन्तः स्यामेतिमन्त्रः +पठितव्यो विकारं वर्जयित्वा ।

**मनोऽन्वाहुवामह इति च तिसृभिः ।**

उपतिष्ठेतेति शेषः ।

---

* घ.—प्राणो नासिकास्थानो वायुस्तेन भक्ष्यते गन्धः प्राणभक्ष इति गन्धोपादानं, देवत्रातः । + घ.—पठितव्य उपचारं वर्जयित्वेति पुस्तकान्तरे पाठः—उपचारो नाम विसर्गस्थानिकः सकार इति प्रातिशाख्ये प्रसिद्धः ।

---

१ ख. ग. °त्यैवानुच्छ्वा° । २ ख. ग. °क्त्यनुसारेणानु° । ३ ख. ग. विवृत्तिस्तु । ङ. व्यक्तिविवृत्तिः । म° । ४ झ. °दिसम° । ५ घ. ङ. च. झ. °व्यो वका° ।

**अथैनान्प्रवाहयेत्परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्त्वायास्मभ्यं द्रविणे ह भद्रं रयिं च नः सर्ववीरं नियच्छतेति ।**

अत्रापि पिण्डस्थान्पितॄनेव प्रवाहयेत् * ।

**अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति ।**

प्रत्येयादितिवचनसामर्थ्याद्दक्षिणामुखेनात्र किंचिदनुव्रजनं कर्तव्य+म् । अग्निं प्रत्येयादग्नेतमद्याश्वं न स्तोमैरित्यविशेषवचनेन दक्षिणाग्निमेवं[1], इतरयोर्विशेषाभिधानात् ।

**गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा[3] जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसमिति ।**

प्रत्येयादिति शेषः ।

**वीरं मे दत्त पितर इति पिण्डानां मध्यमम् ।**

आददीतेति शेषः ।

**पत्नीं प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथाऽयमरपा असदिति ।**

तमेव मध्यममिति शेषः । पत्न्येव मन्त्रं ब्रूयादाधत्तेति ।

**अप्स्वितरौ ।**

प्रक्षिपेदित्यर्थः ।

**अतिप्रणीते वा ।**

प्रक्षिप्य दाहयेत् ।

**यस्य वाऽऽगन्तुरन्नकाम्याभावः स प्राश्नीयात् ।**

आगन्तुरभिनवो निर्निमित्त एवान्नेच्छाभावो यस्य स वेतरौ[2] प्राश्नीयात् ।

**महारोगेण वाऽभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति ।**

क्षयकुष्ठादिनाऽशक्यपरिहारेणातिपीडितः । प्राश्नीयादिति पुनर्वचनं पूर्वेणास्य संबन्धनिवृत्त्यर्थम् । तेनान्यतरामित्यत्रैव भवति । अन्यतरां गतिं गच्छतीत्ययमर्थः । सद्य एवारोगो भवेन्म्रियेत वेति ।

**एवमनाहिताग्निर्नित्ये ।**

अनाहिताग्निरप्येवं पिण्डपितृयज्ञं कुर्यान्नित्य औपासन इत्यर्थः ।

---

* घ—उपलभ्य पितॄन्प्रवाहयेद्विसर्जयेत्, देवत्रातः । + द—प्रवाहणार्थमिति सिद्धान्तभाष्ये ।

---

१ घ. च. °चनं द° । २ ख. ग. °व नेत° । ३ घ. च. छ. वा जाहिं° ।

**श्रपयित्वाऽतिप्रणीय जुहुयात् ।**

तस्यायं विशेषः—हविः श्रपणं कृत्वाऽतिप्रणयनं कर्तव्यम् । तस्यैवातिप्रणीतस्योपसमाधानं परिस्तरणं च कृत्वा ततोऽर्वागतिप्रणीतादित्यादिसमानम् । जुहुयादित्ययमनुवादः । अयं चात्र विशेषः—यदन्तरिक्षमित्यस्मिन्मन्त्रे गार्हप*त्यशब्द उद्धर्तव्यः, तच्छब्द प्रवृत्तिनिमित्तस्य संस्कारस्यात्राभावादिति ।

**द्विवत्पात्राणामुत्सर्गः ।**

द्विश इत्यर्थः ।

**तृणं द्वितीयमुद्रिक्ते ॥ ७ ॥**

एकस्यातिरिक्तस्य तृणेन द्वित्वं संपाद्योत्सर्गः कर्तव्य इत्यर्थः ॥ ७ ॥

**दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयाम् ।**

पूर्वं दर्शपूर्णमासयोः स्वरूपमात्रमुक्तम्, इदानीं तयोरनुष्ठारम्भ उच्यते[2] । इदानीं तावारप्स्यमानस्यान्वारम्भणीयाविधानात् । यस्मादाधानानन्तरमजस्राग्निहोत्रपिण्डपितृयज्ञा[3]नुक्त्वाऽनयोरारम्भ उच्यते तस्मादेतत्साधितं भवति—पौर्णमास्यामाधानमिष्टिं च कृत्वा ततोऽजस्रधारणमग्निहोत्रहोमं च कृत्वाऽमावास्यायां पिण्डपितृयज्ञं च कृत्वा पौर्णमास्यां तयोरारम्भ इति । तत्र यद[4]पस्तम्बवचनं 'पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टिं सान्वारम्भ[5]णीयमपवृज्य श्वोभूते पौर्णमासेन यजेत ' इति । अस्यायमर्थः—पौर्णमास्यामादधानस्तदहरेव पौर्णमासीमारभेतेति । तस्यायं विषयः—यस्यां पौर्णमास्यामन्वारम्भणीयापर्यन्तं सर्वं प्रतिपत्पञ्चदशीसंधिक्षणात्प्रागेव कर्तुं शक्यते साऽस्य विषयः । संध्यन+पगमात्पौर्णमास्याधिकारप्राप्तिरित्येकस्मिन्नहनि य उत्तरस्मिन्क्षणे दर्शपूर्णमासावारभते स तस्मात्पूर्वस्मिन्क्षणे तावारप्स्यमान इत्युच्यते । तस्यान्वारम्भणीया कर्तव्या । सेयं पुरुषार्था न कर्मार्था श्रुत्यादीनामभावात् । दर्शपूर्णमासावारप्स्यमान इत्यनेन च कर्मसंबन्धो वक्तुं न शक्यते । निमित्ततयाऽधिकारिविशेषणत्वेनोपक्षयादुद्देशा(श)[6]बोधकं न भवितुमर्हति । तस्मादनङ्गं तयोरन्वारम्भणीया । तथाऽपि तत्संबन्धिपुरुषसंबन्धात्तयोरेवाधिकारि[7]त्वेन पुरुषं संपादयतीति

* घ—स्मार्ते द्वितीयाध्यायेऽन्वष्टकाप्रकरणे , ये च त्वामत्रानु ' इत्यूहविचारः कृतो वृत्तौ तेन स्मार्त ऊहः कर्तव्यः । + क.—अनिवृत्तेः ।

१ ख. ग. °प्रकृतिने° । २ च. °ते ता° । ३ ख. ग. °ज्ञा नोक्त्वाऽ । ४ ख. ग. °दाहाप° । ५ ख. ग. °णीयाम° । ६ ख. ग. घ. ङ. च. झ. °देशकं । ७ ख. ग. °त्वे पुरुषे संबन्धमपि सं° ।

युक्तमुक्तम् । अतो दर्शपूर्णमासावृत्तौ विकृतिषु च न पुनः पुनः कार्याऽतिदेशाभावात् । कार्यसंबन्ध्यतिदिश्यते न पुरुषार्थसंबन्ध्यपीति ।

**अग्राविष्णू सरस्वती सरस्वानग्निर्भंगी ।**

भगीत्यग्नेर्गुणः ।

**अग्राविष्णू सजोषसे मा वर्धन्तु वाङ्गिरः । द्युम्नैर्वाजेभिरागतम् । अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा । दमे दमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्यत् । पावकानः सरस्वती पावीरवी कन्या चित्रायुः पीपिवांसं सरस्वतो दिव्यं सुपर्णं वायसं बृहन्तमासवं सवितुर्यथा स नो राधांस्याभरेति ।**

इष्टेर्याज्यानुवाक्याः ।

**आधानाद्यद्यामयावी यदि वाऽर्था व्यथेरन्पुनराधेय इष्टिः ।**

आमयावी, उदरव्याधिमान् । अर्थव्यथा, अर्थहानिः । अर्थाः पुत्रपश्वादयः । आधानानन्तरं तस्मिन्नेव संवत्सरे यद्येतानि निमित्तानि स्युस्तदा पुनराधेयं कर्तव्यमित्ययमर्थोऽस्मिन्सूत्रेऽर्थाल्लभ्यते । तस्मिन्पुनराधेये वक्ष्यमाणलक्षणेष्टिः कार्येत्यर्थः ।

**तस्यां प्रयाजानुयाजान्विभक्तिभिर्यजेत् ।**

तस्यामितिवचनं तस्यामेवेष्टौ नान्यस्यां वक्ष्यमाणो विधिः स्यादित्येवमर्थम् । तेन ज्ञायतेऽनैकेष्टिकं पुनराधेयमिति । विभक्तिभिः सहितान्प्रयाजानुयाजान्कुर्यात् । का विभक्तिः, क्व वा प्रदेशे प्रयोक्तव्या[२], किं सर्वेषूत कतिपयेष्वित्येतेषां संख्यानां निवृत्तये चतुरः प्रयाजान्पठित्वा[३] तानेव प्रयाजांश्चतुरो विभक्तिभिः सहितान्पठति, द्वावनुयाजौ च पठति[४], अप*ठितयो[५]रविकृतत्वसिद्ध्यर्थम् ।

**समिधः समिधोऽग्नेग्न आज्यस्य व्यन्तु । तनूनपादग्निमग्न आज्यस्य वेतु । इळो अग्निनाऽग्न आज्यस्य व्यन्तु । बर्हिरग्निरग्न आज्यस्य वेत्विति ।**

नराशंसिनां नराशंसोऽग्निमग्न[६] इति भवति । विभक्तिविधानस्याविशेषात्, पाठस्य चोत्तमप्रयाजानुयाजव्यावृत्त्यर्थत्वात् ।

---

* क. प्रयाजानुयाजयोः ।

---

१ ख. ग. ङ. च. °बन्धमपी° । घ. झ. °बद्धमपी° । २ क. घ. °क्तव्याः, किं । ३ झ. °त्वा द्वा° । ४ ङ. °पठिष्यति । ५ ख. ग. झ. °योरेवावि° । ६ ख. ग. °ग्निरग्न° ।

**समिधाग्निं दुवस्यतेह्यूषु ब्रवाणि त इत्याग्नेयावाज्यभागौ ।**

सोमस्थानेऽप्यग्निरेव । तयोरेते अनुवाक्ये ।

**बुद्धिमदिन्दुमन्तावित्याचक्षते ।**

आज्यभागयोरेतौ गुणौ ।

**तथाऽनुवृत्तिः ।**

निगमेषु सगुणयोरेवानुवृत्तिरित्यर्थः ।

**इज्या च ।**

इज्याशब्देन याज्यायां देवतादेश उच्यते । स च सगुणयोरेव कर्तव्यः । के चिदिहानुवृत्तिशब्देनैव देवतादेशस्यापि ग्रहणमभ्युपगम्य ‘ इज्या च ’ इत्यनेन याज्यामध्यगतस्याग्निशब्दस्य सगुणोच्चारणमिच्छन्ति ।

**नित्यं पूर्वमनुब्राह्मणिनः ।**

नित्यः केवलोऽग्निरनुवाक्या च । ‘ अग्निर्वृत्राणि ’ इत्यनुब्राह्मणिन आचार्याः ।

**अग्न आयूंषि पवस इत्युत्तरम् ।**

उत्तरोऽपि केवलोऽग्निरियं चानुवाक्याऽनुब्राह्मणिनामेवाभिप्रायेण ।

**नित्यस्तूत्तरे हविः शब्दः ।**

उत्तरे याज्यामन्त्रे हविःशब्दस्य सोमधर्मत्वात्तन्निवृत्तौ तस्य निवृत्तिप्रसङ्गे तत्स्थानापन्नत्वादग्नेरपि तद्धर्मसंबन्ध इति मत्वा नित्यास्त्वित्युक्तवान् ।

**आग्नेयं हविरधाह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैरग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेत्विति ॥ ८ ॥**

गतार्थमिदम् ॥ ८ ॥

**आग्रयणं व्रीहिश्यामाकयवानाम् ।**

अग्रेऽयनं भक्षणं येन कर्मणा तदाग्रयणम् । प्रथमाद्वितीययोर्ह्रस्वदीर्घत्वव्यत्ययः । एषां त्रयाणां द्रव्याणां संवत्सरे प्रथमनिष्पन्नानामाग्रयणं नाम कर्म कर्तव्यमित्यर्थः । व्रीहिशब्दस्य प्रथमनिपातो व्रीहीणां प्राधान्यस्थापनार्थम् । तेन कालचोदना व्रीह्याग्रयणस्यैव भवति । श्यामाकशब्दस्य मध्यनिपातो व्रीहिकालाद्यवकालो भिन्न इति ज्ञापयति ।

---

१ क. काले चो° ।

**सस्यं नाश्नीयादग्निहोत्रमहुत्वा ।**

सस्यं नवनिष्पन्नं तन्नाश्नीयादाग्रयणेनानिष्ट्वा । यद्याग्रयणेनानिष्टवतो नवनिष्पन्नेनाशनेन विना निर्वाहो न स्यात्तदा तेषां द्रव्याणां तत्कालनिष्पन्नेन सायंप्रातरग्निहोत्रं हुत्वाऽश्नीयात् । ततः काल आगत आग्रयणं कुर्यात् । अग्निहोत्रमहुत्वा नाश्नीयादितिवचनादाग्रयणेनानिष्ट्वाऽप्यग्निहोत्रं हुत्वाऽश्नतो न दोष इति गम्यते । सस्यग्रहणं व्रीह्याद्यन्यदपि[1] यन्नवनिष्पन्नं तस्य सर्वस्य प्रतिषेधार्थम् ।

**यदा वर्षस्य तृप्तः स्यादथाऽऽग्रयणेन यजेत ।**

यदा वर्षतृप्तिर्लोकस्य भवति तदाऽऽग्रयणेन यजेत । अनेन प्रकारेण व्रीह्याग्रयणस्य शरत्काल उक्तो भवति ।

एतमेव कालं श्रुत्या समर्थयति—

**अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याऽऽग्रयणेन हि यजत इति । अग्निहोत्रीं वैनानादयित्वा तस्याः पयसा जुहुयात् ।**

अथाऽऽग्रयणेन यजेतेतीष्टिरेवाऽऽग्रयणशब्देनोक्ता । इदानीमिदमप्युच्यते । अग्निहो-[2]त्रहोमार्था धेनुरग्निहोत्रीत्युच्यते । तां व्रीहिश्यामाकयवानामन्यतममाशयित्वा तस्याः पयसा सायं प्रातरग्निहोत्रं जुहुयात् । इष्टिः प्रथमकल्पः, तदसंभवेऽयमनुकल्प इति द्वावेवाऽऽग्रयणकल्पावत्रोच्येते ।

**अपि वा क्रिया यवेषु ।**

यवैराग्रयणस्य क्रिया वा भवेदक्रिया वेति विकल्पः ।

**इष्टिस्तु राज्ञः ।**

त्रयाणां वर्णानामविशेषेण कल्पद्वये प्राप्ते राज्ञो विशेष उच्यत इष्टिरेव नान्य इति ।

**सर्वेषां चैके ।**

सर्वेषामपि वर्णानामिष्टिरेवेत्येके मन्यन्ते ।

**श्यामाकेष्ट्यां सौम्यश्चरुः ।**

श्यामाकाग्रयणेष्ट्यां सोमदेवत्यश्चरुर्भवति[3] । कालो वर्षर्तुः शास्त्रान्तरे दर्शनात् ।

**सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामिति । अवान्तरेळाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत् । प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय ।**

---

१ ख. ग. झ. व्रीह्यादिभ्योऽन्य° । २ ख. ग. ङ. °होत्रार्था । ३ क. घ. च. °नदैव° ।

इतिकाराध्याहारेण सूत्रच्छेदः । नित्यजपशब्देनेळे भागमितिमन्त्र उच्यते । तस्य नित्यत्वे सत्यपि नित्यवचनमेतेन भक्षिण इति विध्यतिदेशे तद्वर्जितस्य प्रापणार्थम् ।

**भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहित्वा । सनो मयोभूः पितवाविशे ह शं नो भव द्विपदे शं चतुष्पद इति प्राश्याऽऽचम्य नाभिमालभेतामोऽसि प्राण तदृतं ब्रवीम्यमासि सर्वानासि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमा म एधि मामृधाम इन्द्रेति ।**

स्मृतिप्राप्तस्याऽऽचमनस्य विधानं यस्मिन्देश आचमनं कृतं तस्मिन्नेव देशे स्थितस्य नाभ्यालम्भनसिद्ध्यर्थम् ।

**एतेन भक्षिणो भक्षान्सर्वत्र[2] नवभोजने ।**

एतेन विधानेन * सर्वभक्षेषु सर्वे भक्षिणः+सर्वान्भक्षान्भक्षयेयुः । सर्वत्रवचनं प्रकरणादुत्कर्षार्थम् । नवभोजनवचनं लौकिकेऽपि नवभोजने प्रापणार्थम् । सर्वत्रवचनात्प्रकरणादुत्कृष्टमपि नवभोजनवचनाल्लौकिक एव व्यवतिष्ठते । वैदिकेऽग्निहोत्रहोमे ' नवानां सवनीयान् ' इत्यत्र च न प्राप्नुयात्तत्रापि प्रापणार्थं भक्ष[3]वचनम् ।

**अथ व्रीहियवानां धाय्ये विराजौ ।**

अथानन्तरं व्रीहीणां यवानां चाऽऽग्रयणेष्टिरुच्यते । तत्र व्रीह्याग्रयणस्य काल उक्तः । वसन्तो यवाग्रयणस्य । तत्र हि तेषां प्रथमः पाक इति तन्त्रे विशेषाभावादुभयोः सहवचनं तयोर्धाय्ये विराजौ च भवतः । ' इतरत्पौर्णमासं तन्त्रं वैराजम् ' इत्येतावतैवोक्तेऽपि तावन्मात्रविकारसिद्धौ सत्यां धाय्याविराड्ग्रहणं विकल्पेन वृधन्वतोरपि प्रापणार्थम् ।

**अग्नीन्द्राविन्द्राग्नी वा विश्वे देवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी ।**

आद्ययोर्विकल्पेनैका देवता गृह्यते । यदि श्यामाकाग्रयणमस्यामेवेष्टौ समानतन्त्रेण क्रियते तदा सोमस्तृतीयो भवति ।

**आधाये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्तो विश्वे देवास आगत ये के च ज्मामहि नो अहिमाया मही द्यौः पृथिवी च नः प्रपूर्वजे पितरानव्यसीभिरिति ॥ ९ ॥**

इन्द्राग्न्योः सोमस्य चोक्ता याज्यानुवाक्याः ॥ ९ ॥

---

* घ.—श्रौतस्मार्तेषु । + घ.—व्रीहियवश्यामाकान् ।

---

१ क. घ. ङ. च. ज. °वसेन° । २ क. भक्षणान्स° । ३ क. घ. च. °क्षणव° । ४ क. घ. च. °राजग्र° । ५ घ. च. °नेता दे° । ६ घ. च. °ह्यन्ते । य° । ७ ख. ग. झ. °धर्णं तस्या° ।

अथ काम्याः ।

अथानन्तरं काम्या इष्टयो वक्ष्यन्ते । प्राक्चातुर्मास्येभ्य इत्यर्थः । काम्या इतिवचनमनिर्दिष्टकामा अपि न नित्याः शास्त्रान्तरादपि तासां कामोऽन्वेष्टव्य इत्येवमर्थम् ।

आयुष्कामेष्ट्यां जीवातुमन्तौ ।

आयुष्कामस्येष्टिरायुष्कामेष्टिः । अस्मिन्प्रकरणे कामग्रहणानामेतत्प्रयोजनं यद्देवतासंयुक्तायामिष्टौ यत्तन्त्रं विहितं तद्देवतासंयुक्तायामप्यन्यकामसंयुक्तायां तन्त्र भवतीति ज्ञापनार्थम् ।

**आ नो अग्ने सुचेतुना त्वं सोम महे भगमिति । अग्निरायुष्मानिन्द्रस्त्राता ।**

द्वे देवते । आयुष्मानित्यग्नेर्गुणः त्रातेतीन्द्रस्य गुणः ।

**आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयातु परा यक्ष्मं सुवामि ते । आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधुचारु गव्यं पितेव पुत्रमभिरक्षतादिमम् । त्रातारमिन्द्रमवितारमिन्द्रं मा ते अस्यां सहसावन्परिष्टौ पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारयानव्यो अस्मानिति संयाज्ये स्वस्त्ययन्यां रक्षितवन्तौ ।**

स्वस्तिगमनसाधनीभूता स्वस्त्ययनीष्टिः ।

**अग्ने रक्षाणो अंहसस्त्वं नः सोम विश्वत इति ।**

त्वं न सोम विश्वत इति रक्षालिङ्गाद्गौतम्येव ।

**अग्निः स्वस्तिमान् । स्वस्ति नो दिवो अग्ने पृथिव्या[1] आरे अस्मदमतिमारे अंह इति । पूर्वयोक्ते संयाज्ये ।**

'पाहि नः' इत्येते ।

**पुत्रकामेष्ट्यामग्निः पुत्री ।**

पुत्रकामेष्टावग्निः पुत्री देवता । पुत्रीत्यग्नेर्गुणः

**यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः । अग्निस्तु विश्ववस्तममिति द्वे संयाज्ये आग्नेय्या उत्तरे ।**

ये उत्तरे इष्टी वक्ष्येते 'मूर्धन्वतः' 'कामाय' इति च ते अग्निदेवत्ये भवत इत्यर्थः । पूर्वस्यामग्नेर्मूर्धन्वान्गुणः, उत्तरस्यां कामो गुणः ।

---

१ ज. °थिव्यां आ° ।

**नित्ये मूर्धन्वतः ।**

' अग्निर्मूर्धा भुवो यज्ञस्य ' इत्यर्थः ।

**तुभ्यं ता अङ्गिरस्तमा श्यामतं काममग्ने तवोतीति कामाय ।**

कामगुणकस्याग्नेः ' तुभ्यं ता अङ्गिरस्तमा ' 'श्यामतं कामम्' इति याज्यानुवाक्ये ।

**वैमृध्या उत्तरे ।**

उत्तरे द्वे इष्टी वैमृध्यौ भवतः । तयोर्वक्ष्यमाणे याज्यानुवाक्यायुगले ते इन्द्रदेवते भवतः । स चेन्द्रो विमृद्गुणकः, वैमृधगुणको वा भवति । अत एते इष्टी वैमृध्या इत्युच्येते ।

**वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः सद्युत्तिमिन्द्र सच्युतिं प्रच्युतिं जघनच्युतिम् । प्रनाकाफान आभर प्रयप्स्यन्निव सक्थ्यौ वि न इन्द्र मृधो जहि । जनीखुदद्यथासफमभि नः सुष्टुतिं नयेति ।**

एते पुष्टिकामस्य याज्यानुवाक्ये ।

**इन्द्राय दात्रे पुनर्दात्रे वा ।**

इन्द्रो दाता स पुनर्दाता वा देवता भवति । उभयथाऽप्येते[2] एव याज्यानुवाक्ये वचनसामर्थ्यात् ।

**यानि नो धनानि क्रुद्धो जिनासि मन्युना । इन्द्रानुविद्धि नस्तान्यनेन हविषा पुनः । पुनर्न इन्द्रो मघवा ददातु धनानि शक्रो धनीः सुराधाः । अस्मद्यक्कृणुतां याचितो मनः श्रुष्टी न इन्द्रो हविषा[3] मृधातीति । आशानामाशापालेभ्यो वा ।**

आशा आशापाला वा देवता । अत्रापि याज्यानुवाक्ययोरैक्यम् ।

**आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । विश्वा आशा मधुना संसृजाम्यनमी वा आप ओषधयः सन्तु सर्वाः । अयं यजमानो मृधो व्यस्यत्वगृभीताः पशवः सन्तु सर्व इति लोकेष्टिः ।**

इष्टिनामेदम् ।

---

१ ख. ग. °मृध्यगु° । घ. मृध्योऽर्थगु° । च. °मृध्यार्थगु° । २ क. घ. च. ते° या° । ३ ख. ग. मघवा ।

**पृथिव्यन्तरिक्षं द्यौरिति देवताः ।**

देवताग्रहणं पृथिव्यादीनां पृथगेव देवतात्वसिध्यर्थम् । त्रिलिङ्गत्वाद्याज्यानुवाक्ययोस्तिस्रः सहिता एका देवता मा भूदिति । तेनैतत्साधितं भवति याज्यानुवाक्यालिङ्गाद्देवतानिर्णयः कार्य इति ।

**पृथिवीं मातरं महीमन्तरिक्षमुपब्रुवे । बृहतीमूतये दिवम् । विश्वं बिभर्ति पृथिव्यन्तरिक्षं विपप्रथे । दुहे द्यौर्बृहती पयः । वर्म मे पृथिवी मह्यन्तरिक्षं स्वस्तये । द्यौर्मे शर्म महि श्रव इति तिस्रस्त्रयाणाम् ।**

एतास्तिस्र ऋचस्त्रयाणां हविषां याज्यानुवाक्या भवन्ति । उत्तरसूत्रे विनिवेशसामर्थ्यादेवास्यार्थस्य सिद्धौ सत्यां वचनमिदमन्यत्रापि तिस्रस्त्रयाणां विहिता एवं विनिवेशयितव्या इत्येवमर्थम् ।

एवं भवन्तीत्याह—

**प्रथमे प्रथमस्योत्तमे मध्यमस्योत्तमा प्रथमा चोत्तमस्य ॥ १० ॥**

**मित्रविन्दा महावैराजी ।**

मित्राणि यया विन्दते सा मित्रविन्दा । गुणनामैतत् । महावैराजीति नामैव[2] ।

**अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टेत्येकप्रदानाः ।**

दशैता देवता एकप्रदाना महावैराज्यां भवन्ति । एकप्रदानशब्द उक्तार्थः ।

**अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपेण समनक्तु यज्ञम् ।**

इयमनुवाक्या ।

**प्रतिलोममादिश्य यजेद्ये३यजामहे त्वष्टारं सरस्वतीं पूषणं सवितारं बृहस्पतिमिन्द्रं मित्रं वरुणं सोममग्निं त्वष्टा रूपाणि दधती सरस्वती भगं पूषा सविता नो ददातु । बृहस्पतिर्ददिन्द्रः सहस्रं मित्रो दाता वरुणः सोमो अग्निरिति ।**

एता देवताः प्रतिलोममादिश्य यजेत् । ये३ यजामह इतिवचनं याज्यायामेव प्रतिलोमत्वं नान्येषु निगमेष्वित्येवमर्थम् । प्रतिलोमविधानादेव प्रतिलोमत्वे सिद्धे प्रतिलोमपाठस्येदं प्रयोजनम्—उत्पत्तियागक्रमयोर्विरोधे पूर्वेषूत्पत्तिक्रम उत्तरेषु यागक्रम इत्यस्य

१ ख. ग. ङ. ज. °त्तरे म° । २ ङ. °मैवास्याः । अ° ।

न्यायस्यैन्द्रामारुत्यामुक्तत्वादुत्तरेषु निगमेषु प्रतिलोमत्वं स्यादिति तन्निवृत्त्यर्थम् । इदं च पाठप्रयोजनं वरुणस्याप्युपांशुत्वं भवतीति । ' त्वष्टा रूपाणि ' इति याज्या ।

**अष्टौ वैराजतन्त्राः ।**

' आग्नेय्या उत्तरे ' इत्येवमाद्या महावैराज्यन्ता इष्टयो वैराजतन्त्राः ।

**तासामाद्याः षळेकहविषः ।**

अनुवादोऽयं प्राप्तत्वात् । प्राप्तानुवादे प्रयोजनं हविःशब्देन प्रधानहविषामेव ग्रहणमिति ज्ञापनार्थम् ।

**स्नुषाश्वशुरीययाऽभिचरन्यजेत ।**

स्नुषाश्वशुरीया नाम इष्टिः । तयाऽभिचरञ्शत्रुं मारयामीति संकल्पयन्यजेत ।

**इन्द्रः सूरो अतरद्रजांसि स्नुषा सपत्ना श्वशुरोऽहमस्मि । अहं शत्रूञ्जयामि जर्हृषाणोऽहं वाजं जयामि वाजसातौ । इन्द्रः सूरः प्रथमो विश्वकर्मा मरुत्वाँ अस्तु गणवान्सजातैः मम स्नुषा श्वशुरस्य प्रशिष्टौ सपत्ना वाचं मनस उपासताम् ।**

याज्यानुवाक्ययोर्लिङ्गादेवास्या देवता कल्प्या । सा चेन्द्रः, इन्द्रः सूरगुणो वा ।

**जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये विमतानां संमत्यर्थे संज्ञानी ।**

विमतानां विमनस्कानां संमतिप्रयोजनार्थं संज्ञानी नामेष्टिः कार्या ।

**अग्निर्वसुमान्सोमो रुद्रवानिन्द्रो मरुत्वान्वरुण आदित्यवानित्येकप्रदानाः ।**

चतस्रोऽग्न्यादयः सगुणा देवता एकप्रदाना वेदितव्याः ।

**अग्निः प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रैरभिरक्षतु त्मना । इन्द्रो मरुद्भिर्ऋतुथा कृणोत्वादित्यैर्नो वरुणः शर्म यंसत् । समग्निर्वसुभिर्नो अव्यात्सं सोमो रुद्रियाभिस्तनूभिः । समिन्द्रो रातहव्यो मरुद्भिः समादित्यैर्वरुणो विश्ववेदा इति ।**

एषा संज्ञानी नामेष्टिः स्वामिभृत्ययोः संमत्यर्थं ' यः समानैर्मिथो विप्रियः स्यात्तमेतया याजयेत् ' इति श्रुतेः ।

---

१ ख. ग. °त्वं न भ° । २ ख. ग. °रयतीति । ३ क. च. °वान्सुजा° । ४ क. ख. ग. च. प्रविष्टौ । ५ ख. ग. घ. ङ. च. झ. °तस्रः स° । ६ ख. ग. °नौ आदितिः श° ।

**ऐन्द्रामारुतीं भेदकामाः ।**

इन्द्रश्च मरुतश्च देवते यस्याः सैन्द्रामारुतीत्येवात्र विग्रहः । केवलानां मरुतां याज्यानुवाक्यादर्शनादिन्द्रस्य च पूर्वोक्तयोर्ग्रहणेन द्विदेवत्येयमिति निश्चीयते । भेदकामा राज्ञां च विशां च लोक आहिताग्नयो यदि स्युस्तेषामस्याधिकार एकैकस्यैव ।

**मरुतो यस्य हि क्षये प्रशर्धाय मारुताय स्वभानव इति ।**

इन्द्रस्य नित्ये एव ।

**ऐन्द्रीमनूच्य मारुत्या यजेन्मारुतीमनूच्यैन्द्र्या यजेदिन्द्रं पूर्वं निगमेषु मरुतो वा ।**

प्रधानक्रम एवाङ्गानां क्रम इति प्रसिद्धो न्यायः । अत्र तु प्रधानयोः परस्परव्य*तिपक्तसिद्धयोः[3] क्रमो नास्ति । याज्यानुवाक्याभ्यामुभाभ्यां यागक्रियावयवभूतस्योद्देशभागस्य सिद्धेरिति मन्यमानो विकल्पमुक्तवान् ।

व्युदस्यत्येनमाचार्यः[4]—

**इन्द्रं वा प्रधानादूर्ध्वं मरुतः ।**

सत्यमुत्पत्तिक्रमाभावे प्रधानक्रम एवाङ्गानां भवति । उत्पत्तिक्रमे तु सति स एवानु+पजातविरोधित्वात्प्रधानात्प्राग्भवति पश्चात्तु प्रधानक्रम एवेति न्यायः । अत्र तु प्रधानयोः क्रमोऽस्त्येव याज्याया एवोद्देशतायाः प्रतिपादकत्वात् । आवाहनादिवदनुवाक्याया देवताद्रव्यस्वरूपप्रतिपादकत्वान्मारुत एवात्र यागः पूर्वं क्रियते पश्चादैन्द्र इति विनिवेशमुक्तवानाचार्यः । वाशब्दोऽत्र पक्षव्यावृत्त्यर्थः ।

**प्रकृत्या संपत्तिकामाः संज्ञानीं च ।**

यद्याहिताग्नयो राजविशां संपत्तिं कामयेरन्तदा ते एते देवते प्रकृत्यैव यजेरन् । पूर्ववदेकैक एव ते । ततः संज्ञानीं च कुर्युरेवमेव ।

**ऐन्द्राबार्हस्पत्यां प्रधृष्यमाणाः ।**

शत्रुभिरभिभूयमानाः ।

**आ न इन्द्राबृहस्पती अस्मे इन्द्राबृहस्पती इति यद्यपीन्द्राय चोदयेयुः ॥ ११ ॥**

---

* क.—संकरीभूतयोः परस्परमिश्रयोः । + क.—उत्पत्तिक्रमविरोधाभावात् ।

---

१ घ. ङ. च. पूर्वयोक्त° । २ ख. ग. °मिष्टिरिति । ३ ख. ग. झ. °तिक्रमसि° । ४ क. घ. ङ. च. °नम् । इ° । ५ क. छ. ज. प्रदाना° । ६ ख. ग. °त्प्रागेव भ° । ७ ख. ग. एव न्याय्यः । अत्रापि प्र° । ८ झ. °देश्यतया प्र° ।

यद्यैन्द्राबार्हस्पत्यं निरूप्यैन्द्राय चोदयेयुरध्वर्यव:, यद्वा बार्हस्पत्यं निरूप्यैन्द्राय चोदयेयु:, उभयोरपि पक्षयोरेते एव याज्यानुवाक्ये भवत इत्यर्थः ॥ ११ ॥

**पवित्रेष्ट्याम् ।**

[ कर्तव्य *मुच्यत इति शेषः । पवित्रेष्टिरितीष्टिनाम ।
प्राक्षिप्तेयं पवित्रेष्टिर्जनैः शास्त्रान्तरादिह ॥
नाऽऽचार्येण कृता स्वेन कुत एतदिहोच्यते ।

आश्वलायनगृह्यपरिशिष्टे—

गृह्येऽपि यानि नोक्तानि क्वचिद्वैतानिकेऽपि वा ।
विधेरलोपनार्थाय तानि वक्षाम्यतः परम् ॥

इति प्रतिज्ञायास्या अपि तत्रैवोक्तेः । अत्रैव चान्यकृतत्वे लिङ्गानि वक्ष्यामः । अत एव देवस्वाम्यादयोऽपि न व्याचक्षते । तथाऽप्याम्नातार्थेयमपि पवित्रेष्टिः प्रवक्ष्यते । अत्र चाधिकारी वक्ष्यते—

**अपामिदं न्ययनं समुद्रस्य निवेशनम् । अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव । नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यन्तेअस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भवेति पावकवत्यौ धाय्ये ।**

सूत्रयति हि बौधायनः—तस्याः सप्तदश सामिधेन्यः समिध्यं च समिध्यमानं चान्तरेण पावकवत्यौ धाय्ये दध्यात्, अपामिदं नमस्त इति ।

**पावकवन्तावाज्यभागौ ।**

यावाज्यभागौ पावकशब्दवदनुवाक्यावन्तौ । आज्यभागावित्युक्तिः प्रक्षिप्तत्वे लिङ्गम् ।

अथ पावकवतोरनुवाक्ये आह—

**अग्नी रक्षांसि सेधति ।**

इयमग्नेः ।

**यो धारया पावकयेत्यृचौ याज्ये ।**

इयं सोमस्य । ऋचौ याज्ये, इत्येते ऋचौ याज्ये ।

**[ + यत्ते पवित्रमर्चिष्याकलशेषु धावतीति पवित्र इत्येते । ]**

---

* चतुष्कोणाकृतिकैसंस्थितोऽयं ग्रन्थः । ख. ग. संज्ञकपुस्तकेषु वर्तते । क. घ. ङ. संज्ञक पुस्तकेषु तु पवित्रेष्ट्यामित्यस्याग्रे ‘ एतत्खण्डमत्र न दृष्टम् ’ इत्येतावदेव व्याख्यातम् । एतदग्रिममूलंतुनलिखितम् । घ. पुस्तके—ऋक्संहिताभाष्ये सायणाचार्यैस्त्वेतत्खण्डस्थप्रतीका उदाहृता इतीयं टिप्पनी । एतत्खण्डं छ. ज. संज्ञकमूलपुस्तकवर्तत एव । + अत्र त्रुटितमिदं मूलं छ. ज. संज्ञकयोर्मूलपुस्तकयोर्वर्तते ।

तत्रयत्तेपवित्रमर्चिषीत्यग्ने', आकलशेष्विति सोमस्य ऋचौ न तु जुषाण इत्यादिनित्ये यजुषी इत्यर्थः । पवित्र इति श्येनो वर्मेति माभूदिति । एते मध्यगत [इ]ति शब्दश्चे- त्यपि प्रक्षेपे लिङ्गानि ।

अथ प्रधानदेवता आह—

**अग्निः पवमानः सरस्वती प्रिया अग्निः पावकः सविता सत्यप्रसवोऽ- ग्निः शुचिर्वायुर्नियुत्वानग्निर्व्रतपतिर्दधिक्रावाऽग्निर्वैश्वानरो विष्णुः शिपि- विष्टः ।**

निर्गुणोऽत्र दधिक्रावा न वाऽन्ये गुणसंयुक्ताः । प्रिया अग्निरित्यसंहिता छान्दसी ।

आसां मध्ये सरस्वत्याः प्रियाया दधिक्राव्णश्च द्वे द्वे आह—

**उत नः प्रियाप्रियास्विमा जुह्वाना युष्मदा नमोभिः ।**

सरस्वत्याः प्रियाया एते ।

**वायुरग्रेगा यज्ञप्रीर्वायो शुक्रो अयामि ते दधिक्राव्णो अकारिषमा- दधिक्राः शवसा पञ्च कृष्टीः ।**

दधिक्राव्ण एते ।

**जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये ।**

शिष्टानां द्वे द्वे वयं वक्ष्यामः । अग्नेः पवमानस्य, अग्न आयूंषि पवसेऽग्ने पवस्व स्वपा इति । अग्नेः पावकस्य, स नः पावक दीदिवोऽग्ने पावक रोचिषेति । सवितुः सत्य- प्रसवस्य, आविश्वदेवं सत्पतिं न प्रागिये सवितुर्दैव्यस्य तदिति । अग्नेः शुचेः, अग्निः शुचिव्रततम उदग्ने शुचयस्तवेति । वायोर्नियुत्वत', आ वायो भूषशुचिपा उप नः प्रियाभिर्यासि दाश्वांसमच्छेति । अग्नेर्व्रतपतेः, त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीति । अग्नेर्वैश्वानरस्य, वैश्वानरो अजीजनत्पृष्टो दिवीति । विष्णोः शिपिविष्टस्य, वषट्ते विष्णो प्रतत्ते अद्येति । सूत्रे पुरस्ताच्च दृष्टाः पुरस्ताद्दृष्टयाज्यानुवाक्याप्रक्षेपलि ङ्गम् । न च पुरस्ताद्दृष्टापेक्षणात्तस्य जाश्च प्रक्षेपत्वम् । यत्रेदं पठितं तत्रापि तत्सर्वं किल स्यादिति सत्यप्रसवसवितृनियुत्वद्वायुव्रतपत्याग्निवैश्वानरशिपिविष्टानां ह्यादेशापेक्षा । गृह्यप- रिशिष्टे त्वयं विशेषः—वायोर्नियुत्वतो, वायुरग्रेगा यज्ञप्रीर्वायो शुक्रो अयामि ते इति द्वे । अग्नेर्वैश्वानरस्य, वैश्वानरो न ऊतय इत्यनुवाक्या । विष्णोः शिपिविष्टस्य किमित्ते विष्णावित्यनुवाक्येति । ते च वायुरग्रेगा यज्ञप्रीरिति, खैलिकी पुरोरुक्[1], वैश्वा-

---

१ ज्ञ. रविष्णुशि ।

नरो अजीजनत्, वैश्वानरो न ऊतये, इत्युत्तरत्र प्रकीर्त्तिताः । जुष्टो दमूनाग्याज्ये स्विष्टकृत एते ।

अथ पवित्रेष्टयामधिकारिणमाह—

**सैषा संवत्सरमतिप्रवसतः ।**

कर्तव्येति शेषः । यः संवत्सरमतीत्य प्रवासं करोति सोऽतिप्रवसन्तस्यैषा कर्तव्येत्यर्थः । इह प्रवसत इति पुंस्त्वमुपलक्षणं पत्न्यामपि प्रवसंत्यामपीष्टत्वात् । तथा च बौधायनः— 'पथो एतत्सोऽपरिमितं प्रवसति । न संवत्सरमतिप्रवसतीत्येवेदमुक्तं भवति । स चेदति-प्रवसेत्पवित्रेष्टया यजेतेति । अथो एतत्सोऽपरिमितं प्रवसति न संवत्सरमतिप्रवसतीत्यवि-शेषाज्जायापत्योराहिताग्न्योर्विज्ञायतेऽर्धो वा एष आत्मनो यत्पत्नी च '

**शुद्धिकामो वा ।**

एतां कुर्यादिशेषः ।

अथैतच्छुद्धिकामकर्तव्यतामेव यज्ञगाथया द्रढयति—

**तदेषाऽभि यज्ञगाथा गीयते—**

**वैश्वानरीं व्रातपतिं पवित्रेष्टिं तथैव च ।**
**ऋतावृतौ प्रयुञ्जानः पुनाति दशपौ[2]रुषमिति ॥ १२ ॥**

तदुक्तमर्थ[3]मिति प्रगीयत आम्नायते । वैश्वानरीव्रातपत्यौ वक्ष्यमाणे द्वे इष्टी विश्वानराख्यविमतानामन्नभोजने व्रतातिपत्तौ व्रतातिपतय इति च । ऋतावृतौ वसन्तादिषु दशपुरुषसंयुक्तं स्ववंशं पुनाति शोधयति किं पुनरात्मानम् ॥ १२ ॥ ]

**वर्षकामेष्टिः कारीरी ।**

वर्षकामस्य कारीरी नामेष्टिः कार्या ।

**तस्यां प्रतित्यं चारुमध्वरमीळे अग्निं स्ववसं नमोभिरिति धाय्ये ।**

तस्यामिति । कारीर्यामेवेत्यर्थः । अत्र बहुदेवत्याया आम्नानादन्यदेयमेव कारीर्येक-देवत्या भवति तत्यामपि प्रापणार्थं तस्यां ग्रहणम् ।

**याः काश्च वर्षकामेष्टयोऽप्सुमन्तौ ।**

एतौ वर्षकामेष्टिमात्रे भवतः ।

**अप्स्वग्नेसधिष्टवाप्सु मे सोमो अब्रवीदिति ।**

अत्र पूर्वस्या गायत्रीत्वात्तत्साहचर्यादुत्तराऽपि गायत्र्येव ग्रहीतव्येति । तथा चोत्तरत्र वक्ष्यति—' अप्सुमन्तौ गायत्रौ ' इति । इदमेव वाक्या[4]म्नायमनुसरन् ।

---

१ झ. यथो° । २ ख. ग. च. °ति । यदु° । ३ झ. 'र्थरूपमभिप्र° । ४ च. मेवाम्नानुवा° । ५ च. °म्नानम° ।

**अग्निर्धामच्छन्मरुतः सूर्यः।**

धामच्छदित्यग्नेर्गुणः।

**तिस्रश्च पिण्ड्य उत्तराः।**

उत्तरास्तिस्रः पिण्ड्यश्च भवन्ति। पिण्ड्य इति पिण्डीद्रव्या मरुद्देवत्यास्त्रयो यागा इत्यर्थः।

**हिरण्यकेशो रजसो विसार इति द्वे त्वन्त्याचिदच्युता धामन्ते विश्वं भुवनमधिश्रितमिति वावाश्वेव विद्युन्मिमाति पर्वतश्चिन्महि वृद्धो बिमाय सृजन्ति रश्मिमोजसा वहिष्ठेभिर्विहरन्यासि तन्तुमुदीरयथा मरुतः समुद्रतः प्रवोमरुतस्तविषा उदन्यव आयन्नरः सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः।**

धामच्छदो याज्यानुवाक्यायुगलद्वयं व्यवस्थया योजनीयम्। यदा केवलोऽग्निस्तदा पूर्वं, यदाऽग्निर्धामच्छत्तदोत्तरमिति।

**अग्ने बाधस्व विमृधो विदुर्गहा यं त्वा देवापिः शुशुचानो अग्न इति संयाज्ये ऋचोऽनूच्य यजुर्भिरेके यजन्ति।**

पिण्डीयागानिति शेषः। एके शाखिन ऋच एवानुवाक्या उक्त्वा यजुर्भिरेव पिण्डीयागं कुर्वन्तीत्यर्थः। अत्र विशेषस्तेभ्य एवाधिगन्तव्यः।

**संस्थितायां सर्वा दिश उपतिष्ठेताच्छावदतवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन सूक्तेन वा ॥ १३ ॥**

एकैकां दिशं सर्वा दिश इत्युपक्रम्य चतसृभिः। प्रत्यृचमित्युपसंहारादन्यत्रापि दिशां सर्वत्वं चतसृष्वेव पर्यवस्यतीति गम्यते। सूक्तेन सूक्तेन वा। एकैकां दिशं कृत्स्नेन सूक्तेनोपतिष्ठेतेत्येवं वा ॥ १३ ॥

**अत ऊर्ध्वमिष्ट्ययनानि।**

अत ऊर्ध्वं यानि वक्ष्यन्तेऽस्मिन्नध्याये तानीष्ट्ययनसंज्ञानीति विद्यात्। इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्ययनानि।

**सांवत्सरिकाणि।**

संवत्सरेण क्रियन्ते संवत्सरैश्च क्रियन्त इत्युभयथा विग्रहः कर्तव्यो दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिध्यर्थम्।

---

१ झ. °दोर्याज्या°। २ झ. °शं कृत्स्नेन सूक्तेनोपतिष्ठेतेत्येवं वा स°।

## तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः ।

फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी । चित्रया युक्ता चैत्री । तेषां सांवत्सरिकाणा-मागन्तुकानामस्मिन्काले प्रारम्भः कार्यः । दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादी-नामारम्भे कालनियमो नास्तीति तेषामित्युच्यते ।

## तुरायणम् ।

तुरायणं नामेष्ट्ययनमुच्यते ।

## अग्निरिन्द्रो विश्वे देवा इति पृथगिष्टयोऽनुसवनमहरहः ।

अग्निदेवत्येन्द्रदेवत्या विश्वेदेवदेवत्या चैतास्तिस्र इष्टयः । त्रिषु सवनेषु यथासंख्यैनै-कैकेष्टिः कार्याऽहन्यहनि । अहरहरितिवचनं पौर्णमास्यमावास्ययोर्बाधनार्थम् ।

## एका वा त्रिहविः ।

एताभिरेव देवताभिर्युक्तैकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातःसवन एव कर्तव्या वेत्यर्थः ।

## दाक्षायणयज्ञे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ।

दाक्षायणयज्ञः कर्तव्य इत्ययमर्थोऽर्थाल्लभ्यते । तस्मिन्दाक्षायणयज्ञे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत । द्वितीयानिर्देशा*त्प्रातिरन्नयोर्द्वित्वं गुणो विधीयते ना+प्रतिपन्नयोर्द्वित्व-विशिष्टयोर्विधानमत्रेति गम्यते । एतदुक्तं भवति—या पौर्णमासी याऽमावास्या ते एव स्वस्वकाले द्विरावर्तयितव्ये इति ।

## नित्ये पूर्वे यथाऽसंनयतोऽमावास्यायाम् ।

आवृत्तयोः पूर्वे ये ते उक्ते एव न विकृते । तत्रामावास्याद्वित्वेऽसंनयतो या सैव निथम्यते ।

## उत्तरयोरैन्द्रं पौर्णमास्यां द्वितीयम् ।

उत्तरयोर्विकार उच्यते । पौर्णमास्यां यद्द्वितीयं हविस्तदैन्द्रं भवति ।

## मैत्रावरुणममावास्यायाम् ।

अमावास्यायां यद्द्वितीयं तन्मैत्रावरुणं भवति ।

## आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू इति प्राजापत्य इळादधः ।

इळादधो नामेष्ट्ययनम् । तत्प्रजापतिदेवत्यम् । तत्पर्वाणि पर्वणि कर्तव्यं विशेषविध्य-भावात् ।

---

* क.—प्रातरोर्दर्शपूर्णमासयोः । + क.—अप्रातयोः ।

**प्रजापते न त्वदेतान्यन्यस्त्वमेवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीव धन्य इदं नो देव प्रतिहर्य हव्यमिति द्यावापृथिव्योरयनम् ।**

इदमपीष्ट्ययनं नाम ।

तस्य स्वरूपमुच्यते—

**पौर्णमासेनाऽऽमावास्यादामावास्येनाऽऽपौर्णमासात् ।**

स्वकाले पौर्णमासं कृत्वा तेनैवाहरहर्यजेतामावास्यायाः कालात् । ततोऽमावास्यां स्वकाले कृत्वा तयैवाहरहरा पौर्णमासात् । एवं संवत्सरे समापयेत् । अत्रापि दर्शपूर्णमासयोः पुनः क्रिया नास्ति ।

**असमाम्नातास्वर्थात्तन्त्रविकारः ।**

अस्मिञ्शास्त्रे या असमाम्नाता इष्टयस्तास्वर्थात्तन्त्रविकारो भवति । इष्टिप्रकरणात्स्त्रीलिङ्गाच्चेष्टिष्वित्यवगम्यते । अर्थात्सामर्थ्याद्द्रव्यदेवतादेश्चोदना¹सामान्यात्स्वरूपसामान्याच्चेत्यर्थः । तदुक्तं प्रकृतिविकारभावस्य लक्षणं 'निर्वपेत्ताद्धितं चाऽऽज्यम्' इत्यादिना । तन्त्रविकारस्तन्त्रान्यत्वं पौर्णमासादित्यर्थः । उपदिष्टानामिष्टिपशूनां तन्त्रमुक्तम्, अनुपदिष्टानां कथमित्यपेक्षायां तन्निश्चयार्थमिदं सूत्रचतुष्टयमारब्धम् । अस्यार्थस्य न्यायलभ्यत्वात्पशूनामप्येतत्प्रदर्शनार्थत्वेन व्याख्येयम् ।

**अध्वर्युर्वा यथा स्मरेत् ।**

अध्वर्युशब्देन यजुर्वेद उच्यते तच्च³ प्रदर्शनार्थम् । तेनैवं भवति—यत्र क्वापि वेदेऽस्यैतत्तन्त्रमित्याम्नातं स्यात्तस्य तदेव तन्त्रं भवेन्न न्यायतस्तन्त्रकल्पनेति । वाशब्दोऽवधारणार्थः ।

**वैराजं त्वग्निमन्थने ।**

अग्निमन्थनसंयुक्तायामिष्टौ वैराजमेव तन्त्रं भवति । तुशब्दोऽवधारणार्थ एव ।

**धाय्ये त्वेवैके ।**

अग्निमन्थने सत्यपि धाय्ये एव केवले नियम्येते न वैराजं धाय्याभ्यामन्यन्न्यायकल्प्यमेव तन्त्रमिति ।

असमाम्नातासु तन्त्रलक्षणमुक्त्वेदानीं याज्यानुवाक्यालक्षणमुच्यते—

**देवतलक्षणा याज्यानुवाक्याः ।**

देवतलक्षणेति च्छान्दसो ह्रस्वः । लक्ष्यतेऽभिधीयते विहितदेवता येन पदेन तल्लक्ष-

---

१ ख. ग. घ. च. °नात्सामा° । २ झ. घ. °कारे भा° । च. °कारेऽमावास्याल° । ३ च. तन्त्रम° । ४ घ. च. °पि तन्त्रेऽस्यै° । ५ ङ. °दे तन्त्रेऽस्यै° ।

णम् । देवताया लक्षणं यास्वृक्षु ता याज्यानुवाक्या भवन्ति । विहितदेवतावाचकपदवत्य इत्यर्थः । व्यधिकरणोऽयं बहुव्रीहिः ।

**गायत्र्यावती हूतवत्युपोत्तवती पुरस्ताल्लक्षणानुवाक्या ।**

इदमनुवाक्यालक्षणम् । गायत्री छन्दः । आ, इत्येतत्पदवत्यावती हूतवती निष्ठान्तग्रहणे धातुमात्रग्रहणं भवतीति सार्वत्रिकमेतत् । हूत इति ह्वेञो रूपम् । उपोक्तवती । उपपूर्वस्य वचेरिदं रूपम् । उपोत्तवतीति प्रमादपाठः । पुरस्ताल्लक्षणा, ऋचः पूर्वभागे-देवतापदं यस्याः सा पुरस्ताल्लक्षणा ।

**त्रिष्टुब्वती वीतवती जुष्टवत्युपरिष्टाल्लक्षणा याज्या । अपि वान्यस्य च्छन्दसः ।**

असंभवे विहितच्छन्दसोऽन्यस्य वा याज्यानुवाक्याः कर्तव्याः ।

**न तु याज्या ह्रसीयसी ।**

सर्वथा तावदनुवाक्याया याज्या ह्रसीयसी न भवति ।

**नोष्णिङ्न बृहती ।**

नोष्णिङ् न बृहती याज्येत्यर्थः ।

**क्षामनष्टहतदग्धवतीस्तु वर्जयेत् ।**

एकवचनाधिकारे बहुवचनं याज्यानुवाक्यापरिग्रहणार्थम् ।

**व्यक्ते तु दैवते तथैव ।**

सर्वलक्षणसंपादनाशक्तौ स्वपदार्थपर्यवसिते कार्ये देवतापदे सति तथैवाऽऽश्रयणीयं न लक्षणान्तरमन्वेषणीयमित्यर्थः ।

**लक्षणमपि वाऽव्यक्ते ।**

अथ वैवं भवति—अव्यक्ते देवतापदे सति लक्षणं गायत्र्याद्याश्रयणीयमित्यर्थः । अव्यक्त इति चोदितनामधेयपर्याये वा वज्रहस्तधूमकेत्वादिपदे चोदितनामवये वा पदार्थे[1] सतीत्यर्थः ।

**अनधिगच्छन्सर्वशः ।**

उभयथाऽप्यभावे सर्वशोऽधिगन्तव्याः शाखान्तरादाहर्तव्या इत्यर्थः ।

**अनधिगम आग्नेयीभ्याम् ।**

एवमप्यसंभवे याभ्यां काम्यांचिदाग्नेयीभ्यां यजेतानुब्रूयाच्चेत्यर्थः ।

---

१ क. ख. ग. घ. ङ. च. परार्थे ।

**व्याहृतिभिर्वा ।**

तत्रानुब्रूयाद्यजेच्चेत्यर्थः । एवं व्याहृतिभिरित्याह—

**देवतामादिश्य प्रणुयाद्यजेच्च ।**

पुरस्ताल्लक्षणत्वायानुवाक्यायां देवतां द्वितीयया विभक्त्याऽऽदिश्य ततो भूर्भुवः स्वरोमिति ब्रूयात् । याज्यायामागुरमुक्त्वा ततो देवतां ततो व्याहृतीः पुनस्तां देवतामुपरिष्टाल्लक्षणत्वाय ततो वषट्कार इति[1] ।

**नम्राभ्यां वा ।**

नम्रे इति नामधेयमृचोर्वक्ष्यमाणयोः ।

**इ॒ममा॑गृणुधी॒ हवं॑ यं त्वा गी॒र्भिर्ह॒वाम॑हे । एवं ब॒र्हिर्नि॒षीद॑ नः । तीर्णं ब॒र्हिरा॑नुषगा॒सदे॑तदुपे॑ळाना इ॒ह नो॑ अ॒द्य गच्छ । अहे॑ळता मन॑सेदं जु॑षस्व वीहि ह॒व्यं प्रय॑तमाहुतं म इति नम्रे ।**

एते नम्रसंज्ञे । पुनर्नम्रे इति वचनमेतयोर्नमनप्राप्त्यर्थम् । नम्रे नमनशीले गुह्ये इत्यर्थः ।

**आग्नेय्यावनिरुक्ते ॥ १४ ॥**

देवतापदरहिते इत्यर्थः । तथाऽप्यग्निदेवत्ये एते ऋचौ भवत इत्यर्थः ॥ १४ ॥

**चातुर्मास्यानि प्रयोक्ष्यमाणः पूर्वेद्युर्वैश्वानरपार्जन्याम् ।**

चातुर्मास्यानीतीष्ट्ययननाम । तानि च वैश्वदेवादीनि चत्वारि पर्वाणि । तानि फाल्गुन्यां चैत्र्यां वाऽऽरप्स्यमानस्तस्याः[3] पूर्वस्मिन्नहनि वैश्वानरपर्जन्यदेवत्यामिष्टिं[4] चातुर्मास्यानामारम्भार्थं कुर्यात् । द्वे एते देवते याज्यानुवाक्यायुगलदर्शनात् । वैश्वानरोऽग्नेर्गुणः, याज्यानुवाक्ययोरग्निलिङ्गत्वात् । यद्यध्वर्यवः केवलं वैश्वानरं कुर्युस्तदा 'ऋतावानं वैश्वानरं नाभिं यज्ञानां सदनम्' इति याज्यानुवाक्ये भवतः ।

**वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् । क्षमया वृधान ओजसा । पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्रगायत प्रवाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेयप्रभृत्या त उपांशुहविषः ।**

अग्न्याधेयं प्रभृति कृत्वा वैश्वानरपार्जन्यान्ता इष्टयो यास्ता उपांशुहविष उपांशुप्रधाना इत्यर्थः ।

**सौमिक्यः ।**

सोमोत्पन्नाः ।

---

१ ङ. च. °ति । नाम्रा° । २ ख. ग. इदमा° । ३ च. °रभमाणस्त° । ४ ख. ग. घ. च. °रपार्ज° । ५ झ. °लद्वयद° ।

**प्रायश्चित्तिश्च्य: ।**

प्रायश्चित्तप्रकरणोत्पन्नाः ।

**अन्वायात्यैककपालाः ।**

अन्वायात्यैककपालानामिष्टित्वासंभवाद्यागा विशेष्यन्ते । अन्वायात्या एककपालाश्च ये यागास्त उपांशु प्रयोक्तव्या इत्यर्थः ।

**सर्वत्र वारुणवर्जम् ।**

सर्वत्र विषये वारुणं वर्जयित्वोपांशुत्वं भवति । न क्वचिदपि विषये वारुण उपांशु-र्भवतीत्यर्थः ।

**सावित्रश्चातुर्मास्येषु ।**

चातुर्मास्येषु सावित्र उपांशुर्भवति ।

**प्रधानहवींषि चैके ।**

हवींषीत्येतावता प्रधानप्रत्यये सिद्धे प्रधानवचनं प्रधानान्तरस्य * संप्रत्ययार्थम् । अतो ये चतुर्णां पर्वणां + व्यपदेशहेतवो वैश्वदेववारुणप्रघासमाहेन्द्रशुनासीरीयास्ते प्रधान-शब्दवाच्याः । तेषामुपांशुत्वं भवतीत्यर्थः ।

**पित्र्योपसदः सतन्त्राः ।**

तन्त्रेण सहिता उपांशवो भवन्ति ।

**पौनराधेयिकी च प्रागुत्तमादनुयाजात् ।**

याऽस्माभिराम्नाता पुनराधेयेष्टिः सा चोत्तमादनुयाजात्प्राक्सतन्त्रोपांशुर्भवति ।

**अपि वा सुमन्द्रतन्त्राः ।**

यासु सतन्त्रमुपांशुत्वं विहितं ताः सर्वाः सुमन्द्रतन्त्रा वा भवेयुः । सुमन्द्रतन्त्रा इति । मन्द्रेऽपि ये पूर्वतरा यमास्तैः प्रयोक्तव्यं तासां तन्त्रम् । प्रधानं तूपांश्वेवेत्यर्थः ।

**आगूः प्रणववषट्कारा उच्चैः सर्वत्र ।**

प्रणवशब्देनात्रानुवाक्याप्रणव एव गृह्यते, आगूर्वषट्कारसाहचर्यात् । आगुरादयः सर्वविषय उच्चैर्भवन्ति न क्वचिदपि विषये तेषामप्युपांशुत्वं स्यात् ।

**तथाऽऽग्रयणेऽग्र्यम्[२] ।**

अग्रे भवमग्र्यम् । आग्रयणे यत्प्रथमं हविराग्नेन्द्रमैन्द्राग्नं वा तदुच्चै×र्भवति ।

* क.—ज्ञापनार्थम् । + क.—व्यवच्छेदहेतवः । × घ.—केवलश्यामाकेष्ट्यां सौम्यस्यै-कस्याप्युच्चैष्ट्वं भवति, आद्यन्तवदेकस्मिन्निति परिभाषयेति सिद्धान्तभाष्ये ।

१ ख. ग. घ. च. °ववरु' । २ क. ख. ङ. च. छ. ज. °णेऽग्रियम् ।

*आहार्यस्तु प्राणसंततः प्रणवः पुरोनुवाक्यायाः ।

पुरोनुवाक्यायाः प्रणवस्योच्चैष्ट्वं विहितं स प्रणवः पुरोनुवाक्यायाः प्राणसंततः कार्यः ।

तथाऽऽगूर्वषट्कारौ याज्यायाः ।

तथैतौ याज्यायाः प्राणसंततौ कार्यावित्यर्थः । आगूरादिभिः प्रसिद्धोच्चस्वरैर्याज्यानुवाक्ययोः प्राणसंतानविधिसामर्थ्यादेवोपांशुत्वं सिद्धं भवति । प्राणसंततः प्रणवः, तथाऽऽगूर्वषट्कारावित्येतावतैव याज्यानुवाक्ययोरुपांशुत्वस्य प्राणसंतानस्य च सिद्धौ सत्यामपि यद्याज्यानुवाक्याग्रहणं करोति तज्ज्ञापयति अनुवाक्याया याज्यायाश्च पृथक्कृत्य प्राणसंतानेनाऽऽगूःप्रणववषट्कारा वक्तव्या ऋगन्तस्य[1] ऋगादेश्च[2] प्लुतादन्यः[3] संहितो विकारो मा भूदिति ।

तन्त्रस्वराण्युपांशोरुच्चानि ।

तन्त्रस्वरा आतो मन्द्रेणेत्येवमादिभिर्विहिताः । ते तन्त्रावयवसंबद्धत्वात्तन्त्रस्वरा इत्युच्यन्ते । ते येषां तानि तन्त्रस्वराण्युपांशुयाजसंबन्धीनि । यान्युच्चान्यावहादीन्यागुरादीनि च तानि तन्त्रस्वराणि भवन्ति ।

मन्द्राण्युपांशुतन्त्राणाम् ॥ १५ ॥

उपांशुतन्त्राणां तान्युच्चानि मन्द्रस्वराणि भवन्ति । न तन्त्रस्वराणि भवन्तीत्यर्थः ॥ १५ ॥

प्रातर्वैश्वदेव्यां प्रेषितोऽग्निमन्थनीया अन्वाह पश्चात्सामिधेनीस्थानस्य पदमात्रेऽवस्थायाभिहिंकृत्य ।

प्रातरित्युच्यते, प्रयोक्ष्यमाणः[4] पूर्वे+द्युरित्यनद्यतनविभक्तिदर्शनात्पूर्वेद्युरेव वैश्वदेव्या अपि यागः प्राप्नोतीति तन्निवृत्त्यर्थम् । अतः पूर्वेद्युरुपक्रम्यापरेद्युः प्रातर्वैश्वदेव्या[6] यष्टव्यमित्यर्थः । अग्निमन्थनार्था ऋचोऽग्निमन्थनीयास्ताः प्रेषितोऽनुब्रूयात् । प्रेषितवचनमस्यानुवचनस्य प्रैष एव निमित्तं नाऽऽम्नानम्[7] । अनाम्नानेऽपि[8] प्रेषितोऽनुब्रूयादेवेति । सामि·

---

* घ.—अधिकं हर्तव्य इति सिद्धान्तभाष्ये । + क.—पूर्वेद्युरित्यत्र सद्यः परुदिति सूत्रेण जायमान एद्युस्स्वार्थे जायमानत्वादनद्यतनार्थकः प्राग्दिशीयत्वाद्विभक्तिसंज्ञकः । एवं च पूर्वेद्युरित्यत्र, एद्युस अनद्यतनविभक्तित्वात्पूर्वेद्युर्यागः ।

---

१ घ. ङ. च. °गन्तैश्च ऋ° । २ घ. ङ. च. °गाद्यैश्च प्लुतैरन्यः । ३ झ. प्लुतैरन्यः । ४ ख. ग. °ते । यो य° । ५ ङ. °तनाद्यतन° । ६ ख. ग. °देव्यां य° । ७ ख. ग. °म्नातम् । ८ ख. ग. °म्नातेऽपि ।

धेनीस्थानस्य पश्चादवस्थायेत्येतावतैव पदमात्रेऽवस्थानस्य सिद्धौ सत्यां पदमात्र इतिवचनं पदमात्रेऽतीत इति * ज्ञापनार्थम् । अभिहिंकृत्येतिवचनमस्यानुवचनस्याभिहिंकारप्रतिषेधे सत्यप्यभिहिंकृतिसिद्ध्यर्थम् । तथा च वक्ष्यति—' प्रातरनभ्यासमनभिहिंकृतानि ' इति ।

**अभि त्वा देव सवितर्मही द्यौः पृथिवी च नस्त्वामग्ने पुष्करादधीति [1]तिसृणामर्धर्चे शिष्ट्वारमेदा संप्रैषात् ।**

त्वामग्न इति तिस्र ऋचः । तासामुत्तममर्धर्चे शिष्ट्वा यदवसानं तत्रावसायाऽऽरमेत् । आ संप्रैषात्, आ संप्रैषश्रवणात् । नोत्तरामाददीतेत्यर्थः ।

**अन्यत्राप्यन्तर्ऋचोऽवसाने ।**

अन्यत्रापि विषय ऋचो मध्येऽवसाने यत्राऽऽरमेदिति विधिरस्ति तत्राप्यासंप्रैषान्नोत[2]रामारमेत ।

**अजायमाने त्वेतस्मिन्नेवावसानेऽग्ने हंसि न्यत्रिणमिति सूक्तमावपेत पुनः पुनराजन्मनः ।**

मथ्यमानोऽग्निर्यदि न जायते तदा तत्रैवावसाने स्थित्वाऽग्ने हंसीत्यावपेत् । पुनः पुनरसकृदप्यावपेत, अग्नेराजन्मनः । आजन्मन इतिवचनाज्जाते सति संप्रैषात्प्रागपि सूक्तस्य कांचिदप्यृचं नाऽऽरभेत । एतस्मिन्नेवावसान इतिवचनादेतस्मिन्नेवार्धर्चावसान ऋगन्तरमावपेन्नान्यत्र । अन्यत्र ऋगन्त एवर्गन्तरमावपेतेति गम्यते । तेन यदा यूपसंस्कारेष्वञ्जनोच्छ्रयणपरिव्ययणेषु पदार्थानुसमयं कुर्वन्ति बहुयूपे कर्मणि तदा ऋगन्त ऋगन्तरावापः सिद्धो भवति । पादग्रहणसूक्तग्रहणयोः प्रयोजनमावापे पूर्वावधिरेका [3]ऋक्, परावधिः सूक्तम् । तत्रैकस्या द्वयोर्बहूनां वा ऋचां सूक्तस्य वाऽऽवापः सिद्धो भवति । आवृत्तौ च सूक्तं समाप्यैवाऽऽवृत्तिरित्येवमादि ।

**जातं श्रुत्वाऽनन्तरेण प्रणवेन शिष्टमुपसंतनुयात् ।**

जातश्रवणानन्तरमग्ने हंसीत्यस्य सूक्तस्य यः प्रणव आगच्छति तेन शिष्टमर्धर्चमुपसंतनुयात् ।

**शिष्टेनोत्तराम् ।**

अनावापपक्षे जातश्रवणानन्तरमेव शिष्टेनार्धर्चेनोत्तरामृचमुपसंतनुयात् ।

---

* घ.—मात्रशब्दः समीपवाची । पदादीषन्न्यूनेऽधिके वा नास्ति दोष इति सिद्धान्तभाष्ये ।

---

१ क. घ. च. छ. ज. तिसृणा° । २ ख. ग. झ. °रामाददीत । ३ झ. ऋगप° ।

**उत ब्रुवन्तु जन्तव आयं हस्तेन खादिनमित्यर्धर्च आरभेत् । प्रदेवं देव वीतय इति द्वे अग्निनाऽग्निः समिध्यते त्वं ह्यग्ने अग्निना तं मर्जयन्त सुक्रतुं यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात् ।**

यज्ञेनेत्यनयर्चा परिदध्यात् । समापयेदित्यर्थः ।

**सर्वत्रोत्तमां परिधानीयेति विद्यात् ।**

सर्वत्र शस्त्रादिषु योत्तमा ऋक्तां परिधानीयेति विद्यात् ।

**धाय्ये विराजौ नव प्रयाजाः प्रागुत्तमाच्चतुर आवपेत दुरो अग्न आज्यस्य व्यन्तूषासा नक्ताग्न आज्यस्य वीतां दैव्या होताराग्न आज्यस्य वीतां तिस्रो देवीरग्न आज्यस्य व्यन्त्विति ।**

बर्हिरग्न इति प्रयाजानन्तरमेतानावपेत् ।

**अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसो विश्वे देवा द्यावापृथिवी ।**

अष्टौ देवताः । स्वतवस इति मरुतां गुणः ।

**आ विश्वदेवं सत्पतिं वाममद्य सवितर्वाममुश्वः पूषन्तव व्रते वयं शुक्रं ते अन्यद्यजतं ते अन्यदिहेहवः स्वतवसः प्रचित्रमर्कं गृणते तुरायेति ।**

अस्मिन्पर्वणि निर्गुणानामपि मरुतामेते एव भवतः, प्रकरणपठितत्वात् । गुणशब्दस्य च स्तुत्यर्थतयाऽप्यन्वयसंभवात् ।

**नवानुयाजाः षळूर्ध्वं प्रथमाद्देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु । देवी उषासा नक्ता वसुवने वसुधेयस्य वीताम् । देवी जोष्ट्री वसुवने वसुधेयस्य वीताम् । देवी ऊर्जाहुती वसुवने वसुधेयस्य वीताम् । देवा दैव्या होतारा वसुवने वसुधेयस्य वीताम् । देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्त्विति ।**

अनुयाजानामेष देशः कृतः ।

**अनुयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद्वाजिभ्यो वाजिनमनावाह्याऽऽदेशम् ।**

त्रयाणामन्यतमस्मिन्काले वाजिभ्यो यागः कर्तव्यः । वाजिनं च तस्य द्रव्यम् । द्रव्यशब्देन कर्मणः संव्यवहारार्थं तद्वचनम् । अनावाह्येत्यावाहनप्रतिषेधोऽयमनुवादः, अपूर्व-

---

१ ख. ग. °स्मिन्कर्मणि ।

त्वादस्य कर्मणः[1] । पूर्ववत्त्वे कारणाभावात् । द्रव्यदेवतासंबन्धमात्रमत्र चोद्यते । नैतावता प्राकृतधर्मसंबन्धोऽस्ति । उक्तं च प्राकृतधर्मसंबन्धे कारणं निर्वपत्यादि । तस्य चात्राभावः । तेनापूर्वत्वं निश्चीयते । इष्टिशब्दवाच्यता चास्य नास्ति तेन चापूर्वत्वम् । तस्मादपूर्वत्वादुत्तरेष्वपि निगमेषु निगमनं नास्ति । आदेशवचनं वाजिनामन्वायात्यत्वसंशयनिवृत्त्यर्थम् । तत्रायं संशयः—किं यस्य कस्यचित्प्रधानस्यानु पश्चादायात्यते[2] क्रियते[3] तत्सर्वमन्वायात्यमुतान्वायात्यशब्दचोदितमेवेति । तत्र तच्छब्दचोदिते चातच्छब्दचोदिते चान्वायात्यशब्दप्रवृत्तिनिमित्तस्य विशेषाभावाद्यत्[4]किंचिदन्यानुप्रवेशि[5] तत्सर्वमन्वायात्यमिति कृत्वा वाजिनामप्यन्वायात्यत्वादनादेशः प्राप्नोति । एवं प्राप्तेऽनुप्रवेशिनामादेशं विदधन्नानुप्रवेशित्वमन्वायात्यत्वे निमित्तमिति दर्शितवानाचार्यः । अतस्तत्तच्छब्दचोदितमेवान्वायात्यमिति सिद्धम् । एतदेवाऽऽदेशवचनस्य प्रयोजनं नान्यदिति मन्तव्यम् ।

**शं नो भवन्तु वाजिनो हवेषु वाजे वाजेऽवत वाजिनो न इत्यूर्ध्वज्ञुरन*वानं याज्याम् ।**

ऊर्ध्वज्ञुरूर्ध्वजानुः । याज्याग्रहणस्य प्रयोजनमनुवषट्कार ऊर्ध्वज्ञुता मा भूदिति ।

**अग्ने वीहीत्यनुवषट्कारो वाजिनस्याग्ने वीहीति वा । यत्र क्व चैकसंप्रैषे द्वौ वषट्कारौ समस्तावेव तत्र द्विरनुमन्त्रयेत ।**

संव्यवहारार्थमिदम् । यत्र क्वच विषय एकस्मिन्नेवाध्वर्युसंप्रैषे तुल्यरूपावतुल्यरूपौ वा द्वौ वषट्कारौ भवतस्तत्र तौ वषट्कारौ समस्तावेव । 'वागोजः' इत्यादिना द्विरनुमन्त्रयेत[6] नैकैकम् ।

**न चाऽऽगूरुत्तरस्मिन् ।**

याज्यादावागूर्भवतीत्युक्तत्वादनुवषट्कारेऽप्यागूःप्राप्तौ निषेधः । आगुरः प्रतिषेधो याज्याधर्माणामितरेषां प्रापणार्थः ।

**वाजिनभक्षमिळामिव प्रतिगृह्योपहवमिच्छेत ।**

इष्टशिष्टं[7] वाजिनं भक्षार्थं पात्रेणाऽऽनीतामि×ळामिवाञ्जलिना प्रतिगृह्याञ्जलौ निधायोपहवमिच्छेत भक्षणानुज्ञापनार्थम् । वाजिनभक्षसंबन्धिनः सर्वान्याचेतेत्यर्थः[8] ।

---

* घ. अनवानमनुच्छ्वसन्निति देवत्रातभाष्ये । × घ. इळामिवेतिवचनादास्यसंमितस्य प्राणसंमितस्य वा धारणं लभ्यत इति सिद्धान्तभाष्ये ।

---

१ ग. °णः । अपूर्वत्वं च पूर्वत्वे का° । घ. °णः । अपूर्व° । ङ. झ. °णः । अपूर्ववत्त्वं व पूर्व° । २ झ. °ते वाऽत° । ३ झ. °ते वान्वा° । ४ क. ख. ग. घ. च. झ. °द्यद्यत्किं° । ५ ख. ग. झ. °शितत्व° । ६ क. घ. ङ. च. °त । न चा । ७ ख. ग. °ष्टशेषं वा° । ८ क. च. °न्याचेते° ।

सर्वेषु भक्षसंबन्धिषूपहवयाचनं कर्तव्यमित्युक्तम् । तदनेन क्रमेणैवंप्रकारेण वाक्येनेत्याह

**अध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्वाग्नीदुपह्वयस्वेति ।**

वचनसामर्थ्यादेवैषामयं क्रमः । एत आदितोऽन्ततोऽन्ये भक्षिणः, । वाक्यं चैवंप्रकारं कर्मनामधेययुक्तमित्येतत्तत्सर्वमवगम्यते । अतोऽन्ततो यजमानोपह्वयस्वेत्येतदपि लब्धं भवति[1][2] प्रतिवचनशब्दस्यास्मिञ्शास्त्रेऽनुक्तत्वात्तस्य चापेक्षितत्वाच्छास्त्रान्तरोक्तस्योपहूत इतिशब्दस्य ग्रहणं भवति ।

**यन्मे रेतः प्रसिच्यते यद्वा मे अपि गच्छति यद्वा जायते पुनः । तेन मा शिवमाविश तेन मा वाजिनं कुरु । तस्य ते वाजिपीतस्योपहूतस्योपहूतो भक्षयामीति प्राणभक्षं भक्षयेत् ।**

तस्य वाजिनस्य किंचिदादायानेन मन्त्रेणावजिघ्रेत् ।

**एवमध्वर्युर्ब्रह्माग्नीध्रः ।**

एते च प्राणभक्षं भक्षयेयुः । अध्वर्युग्रहणं भक्षणेऽपि क्रमोऽस्तीति ज्ञापनार्थं न तस्यापि प्राणभक्षणानियमार्थम् । अतो होतुर्भक्षणानन्तरमध्वर्य्वादेः क्रमेण भक्षणं सिद्धं भवति ।

**यजमानः प्रत्यक्षमितरे च दीक्षि*ताः ।**

यजमानादितरे च यत्र दीक्षिता भवन्ति तत्र सर्वे प्रत्यक्षमेव भक्षयेयुः । तच्च सत्रे संभवति । तत्र गृहपतेश्चान्येषां च प्रत्यक्षमेवेत्यर्थः । तत्र च क्रमो मुख्यादिगृहपत्यन्तः ।

**पौर्णमासेनेष्ट्वा चातुर्मास्यव्रतान्युपेयात् ।**

यस्मिन्नहनि वैश्वदेवी क्रियते तस्मादपरस्मिन्नहनि पौर्णमासेनेष्ट्वा तदानीमेव वक्ष्यमाणानि व्रतानि कर्तुमारभेत । पौर्णमासीयागवचनं व्रतारम्भकालविधानार्थं नित्यानामनित्या[3]नामनिवर्तकत्वाद्विकृतीनामिति । व्रतशब्देन मानसो नियम उच्यते । अतः केशनिवर्तनादीनि करिष्ये, मध्वादीनि वर्जयिष्य इति दृढसंकल्पो भवेत् । एतद्व्रतरूपं निवर्तनादीनि च कुर्यात्, मध्वादीनि वर्जयेच्च । न केवलं संकल्पमात्रमेव ।

**केशान्निवर्तयीत ।**

निव+र्तनं कर्तव्यम् ।

---

* घ.—आर्त्विज्ययाजमानयोर्विरोध आर्त्विज्यमेव बलीय इत्यत्रेदमेव ज्ञापकमिति सिद्धान्तभाष्ये । + घ.—निवर्तनं नाम ताम्रक्षुरेण केशव्यूहनमिति सिद्धान्तभाष्ये ।

---

१ ख. ग. ङ. च. °तत्स° । २ घ. च. °ति । अति° । ३ ख. ग. ङ. च. झ. °निव° ।

**श्मश्रूणि वापयीताधः शयीत मधुमांसलवणक्षवलेखनानि वर्जयेत्।**

केशप्रसाधनादीनि [1]स्वैरकर्माण्यवले*खनशब्देनोच्यन्ते । पूर्वाणि त्रीणि कार्याणि । पराणि पञ्च वर्जनीयानि । एतानि चातुर्मास्यव्रतानि । चातुर्मास्यव्रतवचनं सर्वेषां पर्वणामेतानि व्रतानि नैकस्यैव संनिहितस्य पर्वण इत्येवमर्थम् ।

**ऋतौ भार्यामुपेयात् ।**

स्त्रीशब्देन प्रतिषिद्धस्य कालविशेषे प्रतिप्रसवोऽ+यम् ।

**वापनं सर्वेषु पर्वसु ।**

उत्तरविवक्षार्थोऽयमनुवादः ।

**आद्योत्तमयोर्वा ॥ १६ ॥**

[2]आद्योत्तमयोर्वा पर्वणोर्वापनं न मध्यमयोरित्यर्थः । अनु[3]वादाभाव आद्यन्तयोरिव वापनं स्यात्तच्च विकल्पेन मध्यमयोर्वापनप्रसङ्ग एव नास्तीति गम्यते । तेनाऽऽद्यन्तयोर्नित्यं वापनं मध्यमयोरनित्यमिति सिद्धं भवति ॥ १६ ॥

**पञ्चम्यां पौर्णमास्यां वरुणप्रघासैः ।**

यस्यां पौर्णमास्यां वैश्वदेवी कृता तामारभ्य या पञ्चमी पौर्णमासी तस्यां वरुणप्रघासनामकैर्यष्टव्यमित्यर्थः ।

**पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितोऽग्निप्रणयनीयाः प्रति×पद्यते ।**

वेदेः पश्चादिति प्रदर्शनार्थम् । प्रणीयमानस्याग्नेः पश्चादित्यर्थः । प्रेषितवचनमुक्तप्रयोजनम् । अग्निप्रणयनीया अग्निप्रणयनार्थाः ।

**प्र देवं देव्या धियेति तिस्र इळायास्त्वाप देव यमग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्च आरभेत् । आसीनः प्रथमामन्वाहोपांशु सप्रणवाम् ।**

उपविष्टस्यैवाऽऽसीन इतिवचनं व्रजत्स्वपि प्रथमामसमाप्य[4] माऽनुव्रजनायोत्तिष्ठेदित्येवमर्थम् । सप्रणवां समानप्रणवामित्यर्थः । प्रथमायास्तृतीयप्रणवेऽवसानेऽपि त्रिमात्र एवेत्यर्थः ।

---

* घ. अवलेखनं नाम श्मश्रुवापनं दन्तधावनं वासःप्रक्षालनं केशप्रसाधनं गात्रोन्मर्दनादीति सिद्धान्तभाष्ये । + घ. अजातपुत्रश्चेदिति देवत्रातभाष्ये । × प्रारभत इति देवत्रातभाष्ये ।

---

१ घ, ङ. च. झ. स्वैरिक° । २ ख. ग. आद्योत्तमयोरे° । ३ ख. ग. ङ. च. झ °व्य नानु° । ४ ण. °णवाव° ।

**तत्र स्थानात्स्थानसंक्रमणे प्रणवेनावसायानुच्छ्वस्योत्तरां प्रतिपद्यते ।**

तत्र प्रणवेनावसायेत्येतावतैव सिद्धे स्थानात्स्थानसंक्रमण इति वचनमस्य विधेः सर्वार्थत्वाय । तत्रोपांशुस्वरस्थानात्स्वरान्तरस्थानसंक्रमणे प्रणवेनावसायानुच्छ्वस्यैवोत्तरामृचमारभेत । ऋगन्ते श्वासस्य प्राप्त्यभावे सत्यप्यनुच्छ्वासवचनमवसानविधिबलादुच्छ्वासोऽपि प्राप्नोतीति तन्निवृत्त्यर्थमनुच्छ्वासविधानम् । तेनावसानविधानमुच्छ्वासार्थमिति साधितं भवति । अतो यत्रोच्छ्वासप्रतिषेधस्तत्रावसानमपि न कर्तव्यं भवेद्गावानादौ । अग्निमन्थनाग्निप्रणयनादयो मन्द्रस्वरेण प्रयोक्तव्याः प्राथम्यात्तस्य स्वरस्य । तदतिक्रमणे कारणाभावात्[1] । आतो मन्द्रेणेत्यत्र पूर्वविधेरभावाच्च[2] ।

**प्राणसंततं भवतीति विज्ञायते ।**

यदिदमवसायानुच्छ्वस्योत्तरामारभत इति तत्प्राणसंततं भवतीति विज्ञायते[3] श्रुतेत्यर्थः ।

**उत्तरमग्निमनुब्रुयादुत्तराः ।**

अनुब्रूयादिति शेषः । द्वयोः प्रणीयमानत्वादुत्तरमिति विशेष्यते । अग्निद्वित्वेऽप्याहवनीयद्वित्वाभावान्मन्त्राणामूहो नास्ति ।

**इमं महे विदथ्याय शूषमयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये ।**

समानजातीयत्वादेवाऽऽभ्यां बाधः प्रदेवमित्यस्याः । अयं राजन्यवैश्ययोर्विशेषः अन्यत्समानम् ।

**पश्चादुत्तरस्या वेदेरवस्थाय ।**

शेषं समापयेदिति शेषः । वेदिद्वित्वादुत्तरस्या इत्युच्यते ।

**उत्तरवेदेस्तु सोमेषु ।**

पश्चादवस्थाय समापयेदिति शेषः ।

**निहितेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्नि होता होतृषदने विदान इति द्वे परिधाय तस्मिन्नेवाऽऽसन *उपविश्य भूर्भुवः स्वरिति वाचं विसृजेत ।**

अत्र निहितेऽग्नावित्युत्तरादानस्य निमित्तं नाध्वर्युसंप्रैषः । तस्मिन्नेवेति यस्मिन्निदमनुवचनमारब्धं तस्मिन्नेवेत्यर्थः ।

---

* घ.—इदमुपवेशनं गौतममते समन्त्रकमाश्वलायनमते त्वमन्त्रकम् ।

---

१ घ. च. °त् । अतो मन्द्रस्वरेण° । २ क. ख. ग. घ. च. °वात् । प्रा° । ३ ख. ग. ङ. च. झ. °ते श्रूयत इत्य° । घ. °ते श्रूय दित्य° ।

**अन्यत्रापि यत्रानुब्रुवन्ननुव्रजेत्[१] ।**

तत्राप्येवं कर्तव्यमितिशेषः । अनुब्रुवन्नितिवचनमनुवचन एवैतत्स्यान्नाभिष्टवनाविल्येवमर्थम् ।

**तिष्ठत्संप्रैषेषु[२] तथैव वाग्विसर्गः ।**

तिष्ठतः संप्रैषेषु तिष्ठन एव वाग्विसर्गो* भवति ।

**अग्निमन्थनादिसमाना वैश्वदेव्या ।**

इयमिष्टिर्वैश्वदेव्या समाना भवति । द्वयोरपि मथ्यमानयोरग्निद्वित्वं नास्ति, एकस्यैवायमग्नेर्विभाग इति कृत्वा । अनूहेनाऽऽहवनीयाभिधायिनां प्रयोगसिध्यर्थमाग्निमन्थनादिसमानावचनम् ।

**हविषां तु स्थाने षष्ठप्रभृतीनामिन्द्राग्नी मरुतो वरुणः कः ।**

अयमत्र विशेषः । षष्ठाद्यास्तिस्र उद्धृत्येन्द्राग्न्यादयश्चतस्रः[३] कर्तव्या इति ।

**इन्द्राग्नी अवसा गतं श्नथद्वृत्रमुत सनोति वाजं मरुतो यस्य हि क्षयेऽरा इवेद् चरमा अहेवेमं मे वरुण श्रुधि तत्वा यामि ब्रह्मणा वन्दमानः कयानश्चित्र आभुवाद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः ।**

उपहवयाचनेऽयं तृतीयो भवति । भक्षणे चतुर्थः । उपहवयाचनं होत्रादियजमानान्तम् । होतुरध्वर्य्वादि । यजमानस्याग्नीदन्तम् । भक्षणं तु होत्रादियजमानान्तमेव । वैश्वदेव्यामप्येवमेव ।

**संस्थितायामवभृथं व्रजन्ति ।**

संस्थितायामिष्टाववभृथकर्मार्थमुदकं गच्छन्त्यध्वर्यव इत्यर्थः ।

**तत्रावभृथेष्टिः कृताकृता ।**

कृतिरेव कृतम् । कृतं चाकृतं च यस्याः सा कृताकृता । अनित्येत्यर्थः । इष्ट्यभावे[४] यदन्यदप्यवधानादि तत्सर्वं न भवति ।

**तामुपरिष्टाद्व्याख्यास्यामो द्वयोर्मासयोरैन्द्राग्नः पशुः॥ १७ ॥**

वरुणप्रघासपौर्णमासीमारभ्य तृतीयस्यां पौर्णमास्यामित्यर्थः । अनेन चातुर्मास्याङ्गत्वेन

* घ.—देवत्रातभाष्ये तु 'तिष्ठत्संप्रैषे तु' इति तुशब्दसहितमेकवचनान्तपाठमङ्गीकृत्य तुशब्दो विशेषविध्यर्थ इति व्याख्या ।

१ ख. ग. °त् । अन्यत्रा° । २ ख. ग. ङ. °षे तु त° । ३ ख. ग. च. °द्धृत्यैन्द्रा° । ४ क. घ. च. °वे भ ।

पक्षान्तरं विधीयते । नानेन निरूढकालो विधीयते । अतो निरूढोऽपि स्वकाले कर्तव्य एव ॥ १७ ॥

**तथा ततः साकमेधाः ।**

यथा वरुणप्रघासेभ्य ऐन्द्राग्नस्तथैन्द्राग्नात्साकमेधाः । द्वयोर्मासयोरित्यर्थः । अनीकवदादीनामादित्यान्तानां साकमेधा इति नाम ।

**पूर्वेद्युस्तिस्र इष्टयोऽनुसवनम् ।**

यस्यां पौर्णमास्यां साकमेधा यष्टव्यास्तस्याः पूर्वेद्युः सवने सवन एकैकेष्टिः कार्या ।

**प्रथमायामग्निरनीकवाननीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे । स नः पर्षदतिद्विषः सैनानीकेन सुविदत्रो अस्मे इति । उत्तरस्यां वृधन्वन्तौ मरुतः सांतपनाः सांतपना इदं हविर्यो नो मरुतो अभिदुर्हणायुरिति । मरुद्भ्यो गृहमेधेभ्य उत्तराऽऽज्यभागप्रभृतीळान्ता ।**

मरुतो गृहमेधा देवताः । आज्यभागप्रभृतिश्च सेळान्ता चेत्याज्यभागप्रभृतीळान्ता ।

**गृहमेधास[2] आगत प्रबुध्न्या व ईरते महांसीति ।**

आम्नातत्वादेते एव गृहमेधेभ्यो भवतः ।

**पुष्टिमन्तौ विराजौ संयाज्ये अनिगदे ।**

इह विराजौ संयाज्ये इत्युक्तम् । ते संयाज्ये अनिगदे निगदरहिते भवत इत्यर्थः । निगद इति ' अथाळग्निः ' इत्यादि ' जुषतां हविः ' इत्येवमन्त[3]मुच्यते ।

**अन्यत्राप्यनावाहने ।**

गृहमेधीयादन्यत्रापि यत्राऽऽवाहनं नास्ति तत्राप्यनिगदे संयाज्ये भवतः । अन्यत्रापीति योगविभागार्थमुच्यते । तस्य प्रयोजनमन्यत्रानावाहनेऽनिगदे भवत इह त्वावाहनेऽनावाहने वाऽनिगदे एवेत्येवमर्थम् । अत एवात्र पक्ष आवाहनमप्यस्तीति ज्ञापितं भवतीति गम्यते । पूर्वसूत्रे संयाज्याग्रहणस्येदं प्रयोजनमिदमनिगदत्वविधानं संयाज्यामात्रस्य न विराज एवेति ज्ञापनार्थम् ।

**आवाहनेऽपि पित्र्यायां पशौ च ।**

अनयोरावाहने सत्यप्यनिगदे एवं संयाज्ये भवतः ।

**बहु चैतस्यां रात्र्यामन्नं प्रसुवीरन् ।**

प्रसुवीरन्निति बहुवचनं लोके यष्टारो बहव इति । प्रसुवीरन्दद्युरित्यर्थः । एतस्यां रात्र्यामितिवचनाद्रात्रावेवेष्टिः परिसमाप्यत इति गम्यत इति ।

---

१ ङ. °ढस्य का° । २ ङ. °मेधेभ्योऽपि भ° । झ. °मेधे भ° । ३ ख. ग. ङ. °न्त उच्य° । ४ ख. ग. व. ङ. च. झ. °व भ° ।

**तस्या विवासे पौर्णदर्वं जुहुयुः ।**

विवासो रात्र्याः *पश्चाद्भागः । पौर्णदर्वमिति कर्मनाम । तत्तस्मिन्काले कर्तव्यम् ।

**ऋषभे रवाणे ।**

ऋषभे रुवति ।

**स्तनयित्नौ वा ।**

मेघे वा रुवति ।

**आग्नीध्रं हैके रावयन्ति ब्रह्मपुत्रं वदन्तः ।**

तस्याप्यभावे ब्रह्मपुत्रशब्देनाऽऽग्नीध्रं संबोध्य रावयन्ति ब्रह्मपुत्रे रोरुहीत्येवम् ।[1]

**यदि होतारं चोदयेयुस्तस्य याज्यानुवाक्ये । पूर्णादर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो । देहि मे ददामि ते नि मे धेहि नि ते दधे । अपामित्यमिव संभरक्रोऽम्बा ददते दददिति ।**[2]

एतत्कुर्वन्तोऽध्वर्यवो यदि होतारमपि चोदयेयुरनुब्रूहि यजेति तदैते याज्यानुवाक्ये भवतः । शतक्रतुलिङ्गाच्छाखान्तर ऐन्द्रं पौर्णदर्वमित्याम्नानाच्चेन्द्रोऽस्य देवता भवति ।

**मरुद्भ्यः क्रीळिभ्य उत्तरा ।**

इष्टिरित्यर्थः ।

**उत ब्रुवन्तु जन्तवोऽयं कृत्नुरगृभीत इति परोक्षवार्त्रघ्नौ ।**

आज्यभागौ परोक्षवार्त्रघ्नौ भवतः ।

**क्रीळं वः शर्धो मारुतमत्यासो न ये मरुतः स्वञ्चः ।**[3]

मरुतां क्रीळिनामेते आम्नाते । अक्रीळिनामप्येते याज्यानुवाक्ये भवतः ।

**जुष्टोदमूना अग्ने शर्ध महते सौभगायेति संयाज्ये वाजिनावभृथवर्जं माहेन्द्र्युक्ता वरुणप्रघासैः ।**

माहेन्द्रीतीष्टिनाम । आमिक्षाभावादेव वाजिनाभावे सिद्धे वाजिनप्रतिषेधं कुर्वन्वाजिनस्य प्रधानधर्मसंबन्धं[4] दर्शयति । तेन वाजिनस्य मध्यमः स्वरः साधितो भवति ।

**हविषां तु सप्तमादीनां स्थान इन्द्रो वृत्रहेन्द्रो महेन्द्रो वा विश्वकर्मा ।**

वृत्रहाशब्द इन्द्रस्य गुणः । आद्यास्तिस्रो विकल्प्यन्ते[5] । विश्वकर्माऽन्त्यः[6] । अतोऽष्टावत्र देवताः ।

---

* घ. प्रबोधकाल इति देवत्रातभाष्ये ।

---

१ झ. °त्र रुवीही° । २ ङ. च. °मित्थामि° । ३ क. ख. ग. घ. च. झ. °ञ्चः । क्री° । ४ क. घ. च. °नसं° । ५ ख. ग. ङ. च. झ. °कल्पन्ते । ६ झ. °र्माऽन्यः । अ° ।

**आतून इन्द्र वृत्रहन्ननु ते दायिमह इन्द्रियाय विश्वकर्मन्हविषा वावृधानो या ते धामानि परमाणि यावमेति ॥ १८ ॥**

**दक्षिणाग्नेरग्निमतिप्रणीय पिञ्या ।**

दक्षिणाग्नेरग्निमानीयातीत्य तं देशमन्यत्र निधाय तस्मिन्नग्नौ पिञ्यानाम कर्म कर्तव्यम्[1] । अतिप्रणीय पिञ्येतिवचनात्तस्मिन्नेव पिञ्या भवेत् । नैमित्तिकं त्वाहवनीयादिष्वेव । आहवनीयोऽप्यत्र विहरणीयः, उत्तरत्रोपस्थानदर्शनात् ।

**सा शंय्वन्ता ।**

साग्रहणं योगविभागार्थम् । योगविभागप्रयोजनमनतिप्रणीतचर्यायामपि शंय्वन्तादिधर्मप्रापणार्थम् ।

**लुप्तजपा होतारमवृथा वषट्कारानुमन्त्रणाभिहिंकारवर्जम् ।**

जपशब्देनात्र केवलो जप एव न गृह्यते किंत्वनुमन्त्रणलोपप्रतिषेधाज्जपादीनां षण्णामुपलक्षणार्थमिति गम्यते नान्यस्योपांशुप्रयोज्यस्यापि । तेनेळानिगदस्यालोपः सिद्धो भवति । लुप्ता जपा यस्याः सा लुप्तजपा । होतारमवृथेत्यस्य निगदैकदेशस्योपांशुत्वसिद्ध्यर्थेन[2] जपेदितिवचनेन जपशङ्कया लोपशङ्कानिवृत्त्यर्थं तद्वर्जनवचनमितरयोः प्राप्तस्य प्रतिषेधस्य प्रतिप्रसव एव ।

**तस्यां प्राञ्चि कर्माणि दक्षिणा ।**

तस्यामिति वचनं कृत्स्नप्राप्त्यर्थम् । प्रकृत्याऽत ऊर्ध्वमित्यत्रापि प्रापणार्थम् । यानि प्रकृतौ प्राञ्चि कर्माणि प्राङ्मुखानीत्यर्थः । तान्यस्यां दक्षिणामुखानि कर्तव्यानीत्यर्थः ।

**इतराणि तथान्वयम् ।**

यानीतरदिङ्मुखानि प्रकृतौ तान्यस्यां निर्दिष्टदिक्कान्यनिर्दिष्टदिक्कानि च तथान्वयं कर्तव्यानि । दक्षिणां दिशं प्राचीं कृत्वा तदनुसारेणान्यदिङ्मुखानि कर्तव्यानीत्यर्थः ।

**उशन्तस्त्वा निधीमहीत्येतां त्रिरनवानं ताः सामिधेन्यः ।**

एतामृचं त्रिरनुच्छ्वसन्ननुब्रूयात् । ता इति वचनात्ता एव सामिधेन्यो न पुनरभ्यसितव्या इत्यवगम्यते ।

**तासामुत्तमेन प्रणवेनाऽऽवह देवान्पितॄन्यजमानायेति प्रतिपत्तिः ।**

तासां सामिधेनीनामुत्तमेन प्रणवेनाऽऽवह देवान्[3]पितॄन्यजमानायेति प्रतिपत्तिरेव संधेया । तेनाग्ने महानित्यादि परिभूरसीत्यन्तं लुप्यते । प्रतिपत्तिश्चैवंरूपा भवति पिञ्यायां

---

1 °नीयादयोऽ । २ ख. ग. घ. च. °द्ध्यर्थं न । ३ ङ. 'या ना° । ४ ङ. 'तेऽत्र तत् । प्र° ।

प्रकृतौ देवा इज्यन्त इति तेषां संकीर्तनं कृतम्, इह तु देवाश्च पितरश्चेज्यन्त इति पितृशब्दोऽपि प्रयोक्तव्य इति। सर्वत्र देवशब्दवति मन्त्रे पितृशब्देऽपि प्रयोज्यत्वेन प्राप्ते स्वार्थ एव देवशब्दपितृशब्दः प्रयोज्यो न परार्थ इति कृत्वाऽऽचार्योऽन्यत्र परार्थत्वादप्रयोगं मन्यमानस्तत्सहितं प्रतिपत्तिवाक्यं पठितवान्। तेनान्यत्र पितृशब्दो न प्रयोक्तव्य इति सिद्धम्।

प्रतिपत्तिवाक्यमुक्त्वा ततो वक्ष्यमाणदेवता आवाहयेत्—

**अग्निं होत्रायाऽऽवह स्वं महिमानमावहेत्येतस्य स्थानेऽग्निं कव्यवाहनमावाहयेत्।**

आज्यपान्ता देवता आवाह्य प्राकृतस्य स्विष्टकृदावाहनस्योद्धारं कृत्वा तत्स्थानेऽग्निं कव्यवाहनमावाहयेत्।

**उत्तमे चैनं प्रयाजे प्रागाज्यपेभ्यो निगमयेत्।**

उत्तमे च प्रयाजे प्रागाज्यपेभ्योऽग्निं कव्यवाहनं निगमयेत्।

**सूक्तवाके चाग्निर्होत्रेणेत्येतस्य स्थाने।**

निगमयेदिति वर्तते।

**नेह प्रादेशः।**

कार्यार्थत्वान्मन्त्राणां मन्त्रलोपेऽपि कार्यस्यालोप इति कृत्वा कार्यस्यापि प्रतिषेधः क्रियते।

**न बर्हिष्मन्तौ प्रयाजानुयाजौ नेळायां भक्षभक्षणम्।**

भक्षेषु प्राणभक्षमिति प्राप्त इळायां भक्षणमेव नास्तिकः प्रसङ्गः प्राणभक्षस्येत्यर्थः। भक्षवचनं प्रकृताववान्तरेळाभक्षादन्य इळाभक्षोऽस्तीति ज्ञापनार्थम्। इळायामिति सप्तमीनिर्देशादिळाविषयं यद्भक्षणमिति गम्यते नेळाया एव भक्ष इति। तेनावान्तरेळाभक्षणमिळाभक्षणं चात्र नास्तीति गम्यते।

**न मार्जनम्।**

इळाभक्षणाङ्गत्वादेव मार्जनाभावे सिद्धे तदभाववचनं तदङ्गत्वज्ञापनार्थम्।

**न सूक्तवाके नामादेशः।**

सूक्तवाके यद्यजमाननाम तन्नाऽऽदेष्टव्यम्। सूक्तवाकवचनं स्रुगादापनादिष्वध्वर्य्वादिशब्दप्रसङ्गनिवृत्त्यर्थम्।

---

१ घ. च. इतरेषां। २ घ. ङ. च. च। ३ ङ. झ. शब्दे पि° । ख. ग. घ. च. °शब्दः प्र° ४ ब. °तं महितं प्र° । ५ च. °र्यं तद्भ° । ६ झ. °दनङ्ग° ।

**ईक्षितः सीद होतरिति वोक्त उपविशेत् ।**

उत्तरस्योपवेशनस्येदं निमित्तद्वयं विधीयते । प्रादेशकरणाद्यर्थत्वात्पूर्वस्य तदभावेऽभावः प्रादेशस्याभाव उक्तः । अनुमन्त्रणमप्यत्र नास्ति । अनुमन्त्रणाप्यायनोपस्थानानां मन्त्रारूढरूपत्वात्क्रियार्थाः, मन्त्राभावे क्रियाया अप्यभाव इति । तस्मादत्र पूर्वमुपवेशनं नास्ति । मानुषशब्दप्रत्याम्नाय ईक्षणादिः । तज्ज्ञास्वोपविशेदित्युक्तत्वादभिक्रमणादि सर्वं न भवति निरसनोपवेशनबर्हिरुपस्पर्शनानि मन्त्ररहितानि कुर्यादेव ।

**जीवातुमन्तौ सव्योत्तर्युपस्थाः प्राचीनावीतिनो हविर्भिश्चरन्ति ।**

उपस्थविधानं येषां तदङ्गं तेषामेव हविर्ग्रहणं प्रधानेष्वेवायं धर्म इति ज्ञापनार्थम् । तेन प्रधानमध्येऽपि यत्प्रायश्चित्तत्वेन प्राप्तं तस्यायं धर्मो न भवतीति गम्यते ।

**दक्षिण आग्नीध्र उत्तरोऽध्वर्युर्द्वे अनुवाक्ये अध्यर्धामनवानम् ।**

अत्रानुवाक्याकार्यस्यैकत्वान्मध्ये प्रणवो * नास्ति ।

**ओं स्वधेत्याश्रावणम् । अस्तु स्वधेति प्रत्याश्रावणम् । अनुस्वधास्वधेति संप्रैषः ।**

द्वावेतौ संप्रैषौ । अनुस्वधेत्येकः । स्वधेत्यपरः । एकवचनं जात्यभिप्रायम् । अनुस्वधास्वधेति दीर्घः पठितव्यः ।

**ये स्वधेत्यागूर्य स्वधा महे इति वा स्वधा नम इति वषट्कारः ।**

अत्रोंस्वधेत्यादयः स्वधाशब्दा दीर्घान्ता एव प्रयोक्तव्याः । अध्वर्युसंप्रैषपाठप्रयोजनं तदेव श्रुत्वाऽस्य कार्यकरणार्थम् ।

**नित्याः प्लुतयः ।**

उक्ताः प्लुतयः प्रकृतावाद्ये द्वितीय उपान्त्ये च यदक्षरस्था प्लुतिः, एतेष्वपि तदक्षरस्यैव कार्येत्यर्थः ।

**पितरः सोमवन्तः सोमो वा पितृमान्पितरो बर्हिषदः पितरोऽग्निष्वात्ता यमः ।**

पितॄणां सोमवत्ता गुणः । सोमस्य पितृमत्ता गुणः । बर्हिषदोऽग्निष्वात्ता इति च पितॄणामेव गुणः । आद्ये वैकल्पिके ।

---

* घ. द्विदेवत्यप्रणवेऽपीदं वक्ष्यते ।

---

१ ख. ग. °वेनायं प्रा° । २ ख. ग. °भावः । अ° । ३ ख. ग. घ. च. °र्थायो म° । ४ ख. ग. घ. ध. ङ. च. झ. °दि । त° । ५ घ. च. °षेया प्र° । ६ ख. ग. घ. ङ. च. °यः म° ।

**उदीरतामवर उत्परासस्त्वया हि नः पितरः सोम पूर्व उपहूताः पितरः सोम्यासस्त्वं सोम प्रचिकितो मनीषा सोमो धेनुं सोमो अर्वन्तमाशुं त्वं सोम पितृभिः संविदानो बर्हिषदः पितर ऊत्यर्वागाहं पितॄन्सुविदत्रां अवित्सीदं पितृभ्यो नमो अस्त्वद्याग्निष्वात्ताः पितर एह गच्छत ये चेह पितरो ये च नेह ये अग्निदग्धा ये अनग्निदग्धा इमं यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरनु ।**

पञ्चानां तिस्रस्तिस्र ऋचः ।

**वैवस्वताय चेन्मध्यमा याज्या ।**

यदि यमो वैवस्वतो देवता तत उत्तमे त्रिके मध्यमा ऋग्याज्या भवति । प्रथमोत्तमे अनुवाक्ये इति ।

**ये तातृषुर्देवत्रा जेहमानास्त्वदग्ने काव्या त्वन्मनीषाः सपत्नथा सहसा जायमान इति ।**

स्विष्टकृत इति शेषः ।

**अग्निः स्विष्टकृत्कव्यवाहनः ।**

प्रकृतौ योऽग्निः स्विष्टकृदिह तत्कार्यकरोऽग्निः कव्यवाहन इत्यर्थः । तेनात्र स्विष्टकृच्छब्दो न प्रयोक्तव्यः । *

**प्रकृत्यात ऊर्ध्वम् ।**

स्विष्टकृत ऊर्ध्वं प्रकृत्या भवति । सव्योत्तर्युपस्थादयो न भवन्तीत्यर्थः । वचनमिदं स्विष्टकृत्यपि प्रापणार्थम् । अङ्गत्वादेवोत्तरत्र प्राप्त्यभावात् ।

**वषट्कारक्रियायां चोर्ध्वमाज्यभागाभ्यामन्यन्मन्त्रलोपात् ।**

मन्त्रलोपशब्देन पूर्वोक्ताः सर्वे विकारा लक्ष्यन्ते । तेभ्योऽन्येषां सव्योत्तर्युपस्थतादी[1]नामभावाय प्रकृतिभावो विधीयते प्रधानेषु स्विष्टकृति च स्वधाकारं वर्जयित्वा वषट्कारेण क्रिया चेत् । ऊर्ध्वमाज्यभागाभ्यामिति वषट्कारक्रियास्थानलक्षणार्थम् । तेनाऽऽज्यभागाभ्यामूर्ध्वं स्विष्टकृत्पर्यन्ते स्थाने वषट्कारक्रियायां प्रकृत्या भवतीति गम्यते । तत्र मन्त्रलोपादिः पूर्वो विकारः सर्वप्रकारायां पिण्ड्यायामासमाप्तेर्भवत्येव ।

* घ — देवत्रातस्तु—अग्निं स्विष्टकृतं कव्यवाहनमिति प्रयोगः । न चाऽऽवाहनान्यथात्वं दोषः । प्रकृतौ दर्शनात् । अग्निं होत्रायाऽऽवहेत्यावाहने । अग्निं स्विष्टकृतमिति याज्यायामित्याह ।

१ घ. ङ. च. °पस्थताद° ।

**एकैका * चानुवाक्या ।**

प्रकृतिभावादेकैकत्वे[1] सिद्ध एकवचनमिदं तयोरेकैकस्याग्रहणार्थम्[2] ।

**यो अग्निः कव्यवाहनस्त्वमग्न ईळितो जातवेद इति संयाज्ये ।**

वषट्कारक्रियायामेव ।

**भक्षेषु प्राणभक्षान्भक्षयित्वा बर्हिष्यनुप्रहरेयुः । + संस्थितायां प्राग्वाऽऽनुयाजाभ्यां दक्षिणावृतो दक्षिणाग्निमुपतिष्ठन्ते ।**

उभयतो विहारादनियमे प्राप्ते नियमार्थं दक्षिणावृद्वचनम् ।

**अनावृत्त्याऽनतिप्रणीतचर्यायाम् ।**

× अनतिप्रणीतचर्यायां पित्र्यायामावर्तनमकृत्वैवोपतिष्ठन्ते तथैवाभिमुखत्वसंभवात् ।

**अयाविष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः । स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनूं तन्वामैरयतेति ।**

अयं दक्षिणाग्नेरुपस्थानमन्त्रः[3] ।

**आवृत्य त्वेवेतरौ ।**

अतिप्रणीतचर्यायां दक्षिणावृद्दक्षिणाग्नेरुपस्थानमुक्तम् । अनतिप्रणीतचर्यायामनावृत्त्यैं तस्यैवोपस्थानमुक्तम् । इदानीं गार्हपत्याहवनीययोरुपस्थानमुच्यते । तुशब्दो विशेषविध्यर्थः । एवशब्दोऽवधारणार्थः । अतिप्रणीतचर्यायामनतिप्रणीतचर्यायां च गार्हपत्याहवनीययोरावृत्त्यैवोपस्थानमिति ।

**आहवनीयं सुसंदृशं त्वेति पङ्क्त्या ।**

पङ्क्तिवचनं प्रतीकसंदेहनिवृत्त्यर्थम्

**गार्हपत्यमग्निं तं मन्य = इति ।**

एकयर्चा न सूक्तेन, उत्तरत्र सूक्तवचनात्

**अथैनमभिसमायन्ति मा प्रगा माऽग्ने त्वं न इति जपन्तः ।**

एते सूक्ते जपन्त एनं गार्हपत्यमभितः समायन्ति प्रादक्षिण्येन

---

* घ.— इह याज्यासंनिकर्षादनुवाक्ययोरुत्तरा ग्राह्या । एके पूर्वामिच्छन्तीति सिद्धान्तभाष्ये । उत्तरैवेति देवत्रातः । + घ.—अन्तर्वेदीति देवत्रातभाष्ये । × घ.— सर्वं दक्षिणाग्निं निरवशेषेण प्रणीय चरन्ति चेत्साऽनतिप्रणीतचर्येत्युच्यत इति सिद्धान्तभाष्ये । = घ.— इहापि पङ्क्त्येत्यनुवृत्तेर्हीनपादत्वेऽप्यृगेव न सूक्तमिति सिद्धान्तभाष्ये ।

---

१ ङ. °भाव एक° । २ ख. ग. भ. घ. च. °रेकैक° । ३ झ. °नमन्त्रम् । अ° ।

**पूर्वेण गार्हपत्यं सूक्ते समाप्य सव्यावृतस्त्र्यम्बकान्व्रजन्ति ।**

गार्हपत्यस्य पुरस्ताद्यो देशस्तस्मिन्देशे यथा सूक्ते समाप्येते तथा समापयन्ति । सूक्तग्रहणमग्निं तं मन्य इत्यत्र ऋग्ग्रहणार्थम् । यदीष्टिं समाप्योपतिष्ठन्ते तदा ततस्त्र्यम्बकान्व्रजन्ति । यदाऽनूयाजाभ्यां प्राक्तदा समाप्योष्टिं त्र्यम्बकार्थं व्रजेयुः । त्र्यम्बका नाम कर्मविशेषाः

**तत्राध्वर्यवः कर्माधीयते ।**

तत्र यदध्वर्युणोक्तं तदस्मदीयैरपि कर्तव्यमित्यर्थः ।

**प्रत्येत्याऽऽदित्यया चरन्ति ।**

अदितिरत्र देवता नाऽऽदित्यः । आदित्यानां याज्यानुवाक्यानाम्नानात् ।

**पुष्टिमन्तौ धाय्ये विराजौ ॥ १९ ॥**

**पञ्चम्यां पौर्णमास्यां शुनासीरीयया ।**

साकमेधकालमारभ्य या पञ्चमी पौर्णमासी तस्यां शुनासीरीया कर्तव्या । शुनासीरीयेति कर्मनाम ।

**अर्वाग्यथोपपत्ति वा ।**

पञ्चम्याः पौर्णमास्या अर्वागपि यत्र काले कर्तुं संभवति तत्र वेत्यर्थः । ततो द्व्यहे त्र्यह इति शास्त्रान्तरोक्त इत्यर्थः* ।

**वाजिनवर्जं समाना वैश्वदेव्या । हविषां तु स्थाने षष्ठप्रभृतीनां वायुर्नियुत्वान्वायुर्वा शुनासीराविन्द्रो वा शुनासीर इन्द्रो वा शुनः सूर्य उत्तमः ।**

नियुत्वानिति वायोर्गुणः । शुनासीरः शुनश्चेन्द्रस्य गुणौ । प्रथमद्वितीयौ वैकल्पिकौ । पुनस्त्रयो[2] विकल्प्यन्ते[3] । सूर्यस्योत्तमवचनं देवतान्तरप्रवेशेऽपि सूर्य उत्तम एव, अन्यत्र क्रमान्तरमपि भवतीत्येवमर्थम् ।

**आ वायो भूष शुचिपा उप नः प्रयाभिर्यासि दाश्वांसमच्छ स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनट्शुनासीराविमां वाचं जुषेथां**

---

* च. देवत्रातभाष्ये—अध्वर्यूणामप्युक्तम् । ततो द्व्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेष्विति ।

---

१ झ. 'नामनाम्ना' । २ ख. ग. ङ. च. झ. °योऽपि वि° । ३ ख. ग. झ. °कल्पन्ते ।

**शुनं नः फाला विकृषन्तु भूमिमिन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे । स वाजेषु प्रनोऽविषत् । अश्वायन्तो गव्यन्तो वाजयन्तः शुनं हुवेम मघवानमिन्द्रमश्वायन्तो गव्यन्तो वाजयन्तस्तरणिर्विश्वदर्शताश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः ।**

याज्यानुवाक्याग्रहणं या अस्मिन्प्रकरण आम्नाता याज्यानुवाक्यास्ता एवैतत्प्रकरणसंबन्धिनीनां देवतानां शास्त्रान्तरादागतानामपि कथंचिदपि संभवे ग्रहीतव्या नान्या इत्येवमर्थम् ।

**समाप्य सोमेन यजेताशक्तौ पशुना ।**

चातुर्मास्यानामेतावङ्गभूतौ पशुसोमौ निरूढज्योतिष्टोमप्रकृतिकौ समाप्तिनिमित्तत्वादनयोः ।

**चातुर्मास्यानि वा पुनश्चातुर्मास्यानि वा पुनः ॥ २० ॥**

**इत्याश्वलायनश्रौतसूत्रे पूर्वषट्के द्वितीयोऽध्यायः ॥ २ ॥**

---

चातुर्मास्यैरिति वक्तव्येऽन्यथावचनं नेमानि तदङ्गभूतानीति ज्ञापयितुम् । तेन पुनरपि तान्येवाभ्यसितव्यानीति गम्यते । अभ्यासपक्षे समाप्तावपि नैव पशुसोमौ कर्तव्यौ । तस्य पक्षस्य पूर्वाभ्यां सह वैकल्पिकत्वात् । वरुणप्रघासेषूह उच्यते । अग्निद्वित्वाभावादग्निवाचिनामनूहः । 'घृतवतीम्' इत्यत्र 'अध्वर्यू आस्येथां विश्ववारा' इत्यूहः । 'वेदोऽसि' इत्यत्र वेदविषयाणां पदानामूहः । अन्यदप्येवं रूपमस्ति चेत्तदन्वेषणीयम् ॥ २० ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

अथ तृतीयोऽध्यायः

---

**पशौ ।**

अधिकारोऽयं प्राक्प्रायश्चित्ताधिकारात् । पशुगुणकं कर्म पशुरित्युच्यते ।

**इष्टिरुभयतोऽन्यतरतो वा ।**

तस्य पशोरुभयतोऽन्यतरतो वेष्टिः कर्तव्या ।

**आग्नेयी वा ।**

याऽसाविष्टिः पशोरुभयतोऽन्यतरतो वा कर्तव्यत्वेन चोदिता साऽग्निदेवत्या वा भवेदित्येकोऽर्थः । अपरश्चार्थो वाशब्दाल्लभ्यते—येयमाग्नेयीष्टिः पशोरुभयतोऽन्यतरतो वाऽङ्गत्वेन विहिता सा न भवेद्वेति । तेनेयमिष्टिरनित्येत्यवगन्तव्या । अतः सिद्धं स्वतन्त्रेषु पशुषु कर्तव्याऽङ्गभूतेषु न कर्तव्येति ।

---

१ ङ. °वाराविष्टू° । २ ख. ग. °तो न°

**आग्नावैष्णवी वा ।**

ईष्टिकरणपक्षे देवताविकल्पोऽनेन विधीयते ।

**उभे वा ।**

आग्नेयी चाऽऽग्नावैष्णवी चैकस्मिन्पशुप्रयोगे द्वे वा इष्टी भवेताम् ।

**अन्यतरा पुरस्तात् ।**

यदोभे स्यातां तदैका पुरस्तात्, इतरोपरिष्टादित्येवं भवतः । नोभे[2] संहते उभयतोऽन्यतरतो वा भवेतामिति सूत्रार्थः ।

**उक्तमग्निप्रणयनम् ।**

उक्तग्रहणं वारुणप्राघासिकस्य सविधिकस्य[3] ग्रहणार्थम् ।

**पश्चात्पाशुबन्धिकाया वेदेरुपविश्य प्रेषितो यूपायाज्यमानायाञ्जन्ति त्वामध्वरे देवयन्त इत्युत्तमेन वचनेनार्धर्च आरमेत् ।**

वेद्यन्तरस्याभावेऽपि पाशुबन्धिकाया इति विशेषस्तत्स्थाने[4] तद्वदुपचारसिद्ध्यर्थम् । प्रेषितवचनं बहुयूपके कर्मण्यञ्जनादीनां पदार्थानुसमये क्रियमाणे प्रेषितः प्रेषितोऽनुब्रूयादित्येवमर्थम् । यूपायाऽऽज्यमानायेति यूपमज्यमानमभिधातुमेतामृचमनुब्रूयादित्यर्थः । तस्या उत्तमेन वचनेनेति संबन्धः ।

**उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तादूर्ध्व ऊषु ण ऊतय इति द्वे जातो जायते सुदिनत्वे अह्नामित्यर्धर्च आरमेत् । युवा सुवासाः परिवीत आगादिति परिदध्यात् ।**

परिदध्यादितिवचनं पदार्थानुसमये प्रतिपदार्थानुवचनस्य[5] भेद इति ज्ञापनार्थम् ।

**यत्रैकतन्त्रे बहवः सपशवोऽन्त्यं परिधाय संस्तुयादनभिहिंकृत्य यान्वो नरो देवयन्तो निमिम्युरिति षड्भिः ।**

यस्मिन्कर्मण्येकस्मिन्नेव पशुतन्त्रे बहवो यूपाः सपशवश्च तत्रान्त्यमनुवचनं[6] परिधाय संस्तुयाद्यूपान् । काण्डानुसमयाभिप्रायेणेदमुच्यते । अन्त्यमिति तदनुवचनस्य[7] भिन्नत्वात्पदार्थानुसमये त्वेकमेवानुवचनं भवति । एकतन्त्र इति वचनमेककर्ममात्रानिवृत्त्यर्थम् । बहव इति द्वयोर्निवृत्त्यर्थम् । स पशव इत्यपशुक बहुत्वनिवृत्त्यर्थम् ।

---

१ ख. ग. झ. ङ. च. इष्टेः क° । २ ख. झ. ग. °भे सहिते उ° । क. घ. °भे सहत उ° । ३ ख. झ. ग. °कस्येह ग्र° । ४ ख. ग. झ. °षणं तत्स्था° । ङ. °षणः कर्मणः । तत्स्था° । ५ ख. झ. ग. °दार्थमनु° । ङ. °दार्थे नानु° । ६ क. घ. च. तन्त्रान्त्य° । ७ ङ. तदानु° ।

**पञ्चभिर्वा । अनभ्यासमेके ।**

प्रथमोत्तमयोरनभ्यासमित्यर्थः ।

**उक्तमग्निमन्थनं तथा धाय्ये कृताकृतावाज्यभागौ । आवाहने पशुदेवताभ्यो वनस्पतिमनन्तरम् ।**

आवाहयेदिति शेषः । आवाहनग्रहणमावाहनादिष्वैष्टिकेष्वेव निगमेषु निगमनं वनस्पतेर्न पाशुकेष्वित्येवमर्थम् । अतः सूक्तवाकप्रैषे निगमनं न कर्तव्यं भवति ।

**संमार्गैः संमृज्य प्रवृताहुतीर्जुहुयात् ।**

संमार्गैः संमृज्योदकं स्पृष्ट्वा प्रवृताहुतीर्जुहुयात् । प्रवृताहुतीरिति कर्मनाम न गुणविधिः ।

**जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्तमं तस्मिन्माधाः सरस्वत्यै वाचे स्वाहा । पुनरादाय पञ्चविग्राहं स्वाहा वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्यै स्वाहा सरस्वते महोभ्यः संमहोभ्यः[1] स्वाहेति ।**

सकृद्गृहीत्वैकां हुत्वा पुनः सकृद्गृहीत्वा पञ्चाऽऽहुतीर्जुहुयात् । आहुतिसंख्याभेदादेव द्रव्यभेदे सिद्धे विग्राहवचनं मन्त्रविग्रहणार्थम् ।

**सोम एवैके ।**

सोमशब्देन सौत्यमहरुच्यते । सौत्य एवाहन्ययं होमो नान्यस्मिन्नित्येके ।

**प्रशास्तारं तीर्थेन प्रपाद्य दण्डमस्मै प्रयच्छेद्दक्षिणोत्तराभ्यां पाणिभ्यां मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामीति ।**

विहारप्रपदनस्य तीर्थेनैव सिद्धत्वात्तीर्थेनेतिवचनं प्रशास्तस्तीर्थेन प्रपद्यस्वेति संप्रैषलाभार्थम् । प्रदानमन्त्रो मित्रावरुणयोरित्यादिः ।

**तथायुक्ताभ्यामेवेतरो मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रतिगृह्णाम्यवक्रो विथुरो[2] भूयासमिति ।**

प्रतिगृह्णीयादिति शेषः । तथायुक्ताभ्यामिति । दक्षिणोत्तराभ्यां पाणिभ्यामित्यर्थः ।

**प्रतिगृह्योत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेन्न चानेन संस्पृशेदात्मानं वाऽन्यं वाऽऽप्रैषवचनात् ।**

अनेन दण्डेनाऽऽत्मानमन्यं वा न संस्पृशेदा प्रैषवचनात् । यावत्प्रैषोच्चारणं नास्ति तावदयं नियमः । आरब्धे प्रथमप्रैषे नायं नियमः ।

---

१ क. ध. °महेभ्यः । २ ख. ग. ङ. विधुरो ।

**अन्यान्यपि यज्ञाङ्गान्युपयुक्तानि न विहारेण व्यवेयात् ।**

अन्यान्यपीतिवचनाद्यत्पूर्वोक्तमुत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डनं हरेदिति तदपि व्यवायपरिहारार्थमेवेति गम्यते । तेनैतद्दर्शितं भवति—हवींषि चाग्नयोऽन्तरतमाः, हविःषु च प्रधानाप्रधानविशेषोऽस्ति, तत्र स्रुगादीनि साधनानि, तेषु च विशेषोऽन्वेषणीयः । ततः कर्तारस्तेषु च स्वामी मुख्यो द्वितीयतृतीयचतुर्थेषु विशेष इत्येवं बुद्ध्यैतेषूपचारे कृते यज्ञाङ्गानि विहारेणाव्यवेयानि[1] भवन्ति । उपयुक्तवचनमनपवृत्तकर्मणामेव ग्रहणार्थम् । सर्वार्थं चेदं सूत्रं व्यवायप्रतिषेधपरत्वात् ।

**दक्षिणो होतृषदनात्प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात्प्रैषांश्चाऽऽदेशम् ।**

वेदिश्रोण्यां बहिर्वेदि होतृषदनं तस्य दक्षिणतो बहिर्वेदि स्वयमवस्थायान्तर्वेदि दण्डमवष्टभ्य ब्रूयात्—प्रैषानादेशमाप्रैषं प्रेषणमित्यर्थः । यावन्ति प्रैषार्थानि प्रेषणानि सन्ति तावत्सु प्रेषणेषु प्रैषान्ब्रूयादिति । एतदुक्तं भवति—प्रैषाम्नायपरिपठितान्सर्वान्प्रैषान्मैत्रावरुण एव प्रेषितः प्रेषितोऽनुब्रूयादित्यर्थः । चशब्दो मैत्रावरुणानुकर्षणार्थः । तेन ज्ञायते व्यवायप्रतिषेधसूत्रं सर्वार्थमिति ।

**अनुवाक्यां च सप्रैषे पूर्वां प्रैषात् ।**

अनुवाक्यां ब्रूयादिति शेषः ।

**पर्यग्निस्तोकमनोतोन्नीयमानसूक्तानि च ।**

एवंभूतमैत्रावरुणानुकर्षणार्थश्चशब्दः ।

**सोम आसीनोऽन्यत् ॥ १ ॥**

उक्तेभ्यो यदन्यन्मैत्रावरुणस्य सोमे कर्मास्ति तदासीनो ब्रूयात् । सोमेऽप्येतानि तिष्ठन्नेव ब्रूयादित्यर्थः ॥ १ ॥

**एकादश प्रयाजाः ।**

पशावेकादश प्रयाजा इति नियम्यते सर्वत्र सर्वेषाम् ।

**तेषां प्रैषाः ।**

तेषां प्रयाजानां प्रैषा अपि भवन्ति ।

ते चैत इत्याह—

**प्रथमं प्रैषसूक्तम् । उक्तं द्वितीये ।**

यदुक्तं प्रकृतौ वासिष्ठादीनां नाराशंसः, इतरेषां तनूनपादिति तदप्राकृतेषु प्रैषेष्वपि स्यादित्येवमर्थं सूत्रम् ।

---

१ ख. ग. ङ. झ. °वेतानि । २ ख. ग. झ. °तस्माद्दक्षि° । ३ ख. ग. घ. ङ. च. °नां नरा° ।

**अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति प्रैषैर्होतारम् ।**

एवं सति होत्रा नाध्वर्योः प्रैष आकाङ्क्षणीय इत्यर्थः ।

**होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः ।**

होतृग्रहणं मैत्रावरुणाधिकारात्प्रैषसलिङ्गाभिरित्याप्रीष्वपि तनूनपान्नराशंस इति विवेकः कर्तव्य इत्यर्थः ।

**समिद्धो अग्निरिति शुनकानां जुषस्व नः समिधमिति वसिष्ठानां समिद्धो अद्येति सर्वेषाम् ।**

वसिष्ठशुनकानामुक्त्वा विधीयमानत्वात्तद्वर्जानां सर्वेषामिति गम्यते । अन्त्यं जामदग्न्यमिदं त्वाप्रीसूक्तं नाऽऽगस्त्यम् । आम्नायक्रमानुगुण्याद्वासिष्ठविध्युत्तरकालिकत्वाच्चास्य विधेः । तत्राग्न्यादीनां नाराशंस्येव वासिष्ठ्याहर्तव्या प्रैषसलिङ्गाभिरित्युक्तत्वात् । एवं प्राजापत्येऽपि पशौ वसिष्ठादीनां नाराशंस्येत्येवं ।

**यथ ऋषि वा ।**

यो यस्यार्षिस्तदानु*गुण्यं यथर्षिशब्देनोच्यते । तथा वाऽऽप्रीसूक्तं ग्रहीतव्यम् । स्वीयर्षिनामधेयस्यानुगुणा आप्र्यः कर्तव्या इत्यर्थः । तत्र भगवता शौनकेन यथर्षिपक्ष आप्रीविवेकार्थमेव श्लोक उक्तः—

कण्वाङ्गिरोगस्त्यशुनका विश्वामित्रोऽत्रिरेव च ।
वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः ॥

तत्र दशानां सूक्तानां प्रथमं कण्वानां ' सुसमिद्धो न आवह ' इति । द्वितीयं तद्वर्जानामङ्गिरसां ' समिद्धो अग्न आवह ' इति । तृतीयमगस्तीनां ' समिद्धो अद्य राजसि ' इति । चतुर्थं शुनकानां ' समिद्धो अग्निर्निहितः पृथिव्याम् ' इति । पञ्चमं विश्वामित्राणां ' समित्समित्सुमनाः ' इति । षष्ठमत्रीणां ' सुसमिद्धाय शोचिषे ' इति । सप्तमं वासिष्ठानां ' जुषस्व नः समिधमग्ने अद्य ' इति । अष्टमं कश्यपानां समिद्धो विश्वतस्पतिः ' इति । नवमं वाध्र्यश्वानाम् । ' इमां मे अग्ने समिधं जुषस्वेळ ' इति । शुनकवाध्र्यश्ववर्जितानां भृगूणां दशमं ' समिद्धो अद्य मनुषो दुरोण ' इति । यथर्षिपक्षे विवेकोऽयम् ।

---

* क. अनुसरणम् ।

---

१ ग. °ष । तत्राग्न्यादीनां नाराशंस्येव य° । २ घ. च. °म । स्वयमृषिना° ।

**प्राजापत्ये तु जामदग्न्यः सर्वेषाम् ।**

तुशब्देनात्र वसिष्ठशुनकसहितानामिति विशेषो लभ्यते ।

**दशसूक्तेषु प्रेषितो मैत्रावरुणोऽग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह ।**

कालोपदेशादप्रेषितोऽपि ब्रूयादिति प्रेषितवचनम् । मैत्रावरुणग्रहणमुत्तरार्थम् । पर्यग्नय इति परितः क्रियमाणमग्निमभिधातुमित्यर्थः ।

**अध्रिगवे प्रेष्योपप्रेष्य होतरिति वोक्तोऽजैदग्निर-सनद्वाजमिति प्रैषमुक्त्वाऽन्तर्वेदि दण्डं निदध्यात् ।**

मैत्रावरुणग्रहणं द्वितीयेऽपि संप्रैषे मैत्रावरुण एव ब्रूयादित्येवमर्थम् । प्रैषपाठस्तु होतृलिङ्गेन[1] विकृतत्वात् । पूर्वस्य तु पाठः *परिसंख्याभयात्[2] । प्रैषवचनं प्रैषमित्येकवचनविवक्षार्थं[3] न द्विवचनविवक्षार्थम् । तद्विवक्षया प्रैषैक्यसिद्धिद्वारेणानवानमस्य साधितं भवति । इदानीं दण्डनिधानवचनाच्च पूर्वं निधातव्य । इति गम्यते ।

**अध्रिगुं होतोहन्नङ्गानि दैवतं पशुमिति यथार्थम् ।**

अध्रिगुरिति ' दैव्याः शमितार आरभध्वम् ' इत्यस्य मन्त्रस्य नाम । मैत्रावरुणाधिकाराद्धोतृग्रहणम् । ऊहन्नित्यभिधेयवशेन वचनानि सन्नमयन्नित्यर्थः । अङ्गानीतिवचनमध्रिगावङ्गादीनां शब्दा एवोह्यन्ते नान्ये बर्हिर्मातृपितृशब्दादय इति ज्ञापनार्थम् । यथार्थमिति । यो अस्य शब्दस्यार्थस्तं तथोहन्ब्रूयादित्यर्थः । ऊहन्नित्यनेनैवास्मिन्नर्थे सिद्धे यथार्थमितिवचनं संव्यवहारार्थेयमूहसंज्ञेति ज्ञापनार्थम् ।

**पुंवन्मिथुने ।**

मिथुनमिति स्त्रीपुंसयोः समाहार उच्यते । अस्मिन्समाहारे पुंलिङ्गेनैवोहः कर्तव्य इति । नियम्यते ।

**मेधपतीम् ।**

अयं शब्दो देवतावाची । तस्य स्त्रीप्रत्ययान्तस्यायं निर्देशः कृतः । तेनायमपि पदार्थो देवतावाचिनः स्त्रीप्रत्ययस्य संबन्धादस्मिन्सूत्रे लभ्यते स्त्रीदेवतेति । स च स्त्रीदेवतेति पदार्थोऽस्मिन्सूत्रे पुंवद्वचनस्य विधीयमानत्वात्स्त्रीदेवतायामभिधेयायामित्यर्थात्क-

---

* क —व्यावृत्तिः ।

---

१ ख. घ. च. °ङ्गेनावि° । २ झ. °ख्याभावात् । ३ ख. ग. झ. °र्थं तद्वि° । ४ ध. च. °वक्षयां । प्रै° । ५ ख. ग. झ. बर्हिर्मा° । घ. ङ. च. बर्हिर्मातृ । ६ ख. ग. तथानुब्रूया° । ७ ख. ग. °ति गम्य° ।

ल्प्यते । मेघपतिशब्दप्रातिपदिकं च पुंवद्वचनस्य विषयत्वेनेत्येवं संप्रदायाविच्छेदादव-गम्यते । अत एवं सूत्रार्थः—स्त्रीदेवतायां मेघपतिशब्दं पुंवद्ब्रूयादिति । एवं व्याख्यायमानेऽस्मद्ब्राह्मणमनुसृतं भवति ' अथो खल्वाहुर्यस्यै वाव कस्यै च ' इत्यादि ।

**मेधायां विकल्पः ।**

मेधशब्दात्पशुवाचिनः परः स्त्रीप्रत्ययः पूर्ववत्स्त्रीपशाविति नियमयति । तेन स्त्रीपशौ मेधशब्दं पुंवद्वा स्त्रीवद्वा ब्रूयादिति विकल्पोऽत्र विधीयते ।

**यथार्थमूर्ध्वमध्रिगोरन्यान्मिथुनेभ्यः ।**

अध्रिगोरूर्ध्वं यथार्थमूहो भवति मिथुने तु सर्वत्राध्रिगुवदेव । एतदुक्तं भवति—अध्रि-गोरूर्ध्वमङ्गादिशब्दा अन्ये चार्थवशेनोह्यन्ते न नियमेनाङ्गादिशब्दा एवेति । मिथुनं तु सर्वत्र पुंवदेवाभिधेयमिति ।

**सर्वेषु यजुर्निगदेषु ।**

न केवलमयं विधिः पशावेव । कथं तर्हि सर्वेषु यजुर्निगदेषु चार्थवशेनोहः कार्यः । यजूंष्येवोच्चैः प्रयोगार्हाणि निगदा उच्यन्ते ।

**प्रकृतौ समर्थनिगमेषु ।**

प्रकृताविति यस्मिन्कर्मण्यर्थाभिधानार्थो यो मन्त्र उत्पद्यते तस्य मन्त्रस्य तत्कर्म प्रकृतिः । समर्थो नाम यथार्थाभिधायी शब्दः । निगमा नाम मन्त्राः । उत्पत्तिस्थाने ये मन्त्रा यथार्थाभिधायिशब्दवन्तस्तेषु विकृतिषूहो भवति । ये तु पुनः प्रकृतावेवायथार्थाभि-धायिशब्दवन्तस्तेषु विकृतावपि न भवत्यूह इति प्रकृतावसमर्थनिगमसंभवानुज्ञानान्न प्रकृ-तावूहो विद्यत इति गम्यते । उपपन्नमेवेदम् । तदर्थाभिधानार्थमेव तस्य मन्त्रस्य प्रत्यक्षाम्नानात् । तत्र ल*क्षणया गौण्या वाऽभिधानं कल्पनीयम् । तस्याः कल्पनाया विकृताव-प्यविशेषात्तेषां विकृतावप्यनूह एवेति युक्तमुक्तं प्रकृतौ समर्थनिगमेष्विति ।

**प्राकृतास्त्वेव मन्त्राणां शब्दाः ।**

ऊहे क्रियमाणे मन्त्राणां प्राकृता एव शब्दा भवेयुः । एतदुक्तं भवति—यदि प्रकृतौ छान्दसं प्रातिपदिकं स्यात्तदा तस्मादेव विभक्त्यूहः कर्तव्यो न प्रातिपदिकसंस्कार इति । तुशब्देन न्यायविरुद्धोऽयमर्थ इति दर्शयति । ऊहस्यास्मदायत्तप्रयोगत्वाद्भाषिकत्वमेवेति

* क.—शक्यसंबन्धो लक्षणा । यथा गङ्गायां घोष इत्यादौ गङ्गापदशक्यार्थे प्रवाहे घोषासंभवात्तत्संबद्धे तीरे घोष इत्यर्थो बुध्यते ।

१ क. °शब्द ए° । २ ख. ग. °र्हाणि नि° । ३ झ. मत्याम्ना° । ४ च. °त्वात्पारिभाषि° ।

न्यायविरुद्धमपि । असमर्थेष्वनूहवचनं छान्दसस्यापि प्राकृतस्यैव शब्दस्य ग्रहणमित्युभयं ग्रहीतव्यमेवेत्येवमर्थं तुशब्दं प्रयुक्तवान्स्वयमेवाऽऽचार्यः ।

**प्रतिनिधिष्वपि ।**

प्राकृता एव शब्दा इति वर्तते ।

**नाभिरुपमा मेऽद्रो हविरित्यनूह्यानि ॥ २ ॥**

यथाकथंचित्प्राप्तानां प्रतिषेधोऽयम् । उपमेत्युपमार्थाः श्येनादयः शब्दा गृह्यन्ते ॥ २ ॥

**दैव्याः शमितार आरमध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनुपिताऽनुभ्राता सगर्भ्योऽनुसखा सयूथ्यः । उदीचीनां अस्य पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् । एकधाऽस्य त्वचमाच्छ्यतात्पुरा नाभ्या अपि शसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमस्य वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपे वांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाऽष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षः संसृजतात् । वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ अपाप ।**

अयमध्रिगुः । अत्रोह्यानि पदानि वक्ष्यन्ते । मेधपतये मेधपतिभ्यां मेधपतिभ्यः । मेधं मेधौ मेधान् । मेधां मेधे मेधा एवं वा । अस्मै, आभ्याम्, एभ्यः । अस्यै, आभ्याम्, आभ्यः । एनम्, एनौ, एनान् । एनाम्, एने, एनाः । अस्य, अनयोः, एषाम् । अस्याः, अनयोः, आसाम् । शरीरं शरीरे शरीराणि । त्वचं त्वचौ त्वचः । वपां वपे वपाः । वक्षः, वक्षसी वक्षांसि । प्रशंसा[1], प्रशसः । बाहू बाहून् । दोषणी दोषाणि । अंसौ, अंसान्[2] । अच्छिद्रे, अच्छिद्राः । श्रोणी श्रोणीः । ऊरू ऊरून् । अष्ठीवन्ता अष्ठीवन्तः । वनिष्ठुं वनिष्ठू वनिष्ठून् । इत्येवमूहः । मेधं, सयूथ्यः, शरीरं, वारयध्वात्, अनूनं कृणुतात्, खनतात्, सृजतात्, शमितारः अध्रिगा ३ उ अपाप इत्येतान्यवसानानि अत्र[3] श्लोकः—

मेधं सयूथ्यश्च शरीरयध्वादनूनपूर्वं कृणुतान्नताच्च ।
जतान्मितारोऽध्रिगा उ अपाप एतेऽध्रिगौ मध्यविरामदेशाः ॥

१ ख. ग. °शसाः प्र° । २ घ. अंसम्,° । ३ ङ. तंत्र ।

**अस्ना रक्षः संसृजताच्छमितारोऽपापेत्युपांशु ।**

एते त्रयः शब्दाः स्वे स्वे स्थान उपांशु प्रयोक्तव्याः । शमितार इतीतरयोर्मध्ये पाठात्तन्मध्यगत एवोपांशु[1]र्भवति नान्यः ।

**एकधा षड्विंशतिरिति द्विर्द्विबहूनाम् ।**

द्विबहूनां पशूनां संबन्धिनावेतौ शब्दौ द्विर्ब्रूयात् । विभक्त्यूहे[2]नमस्य वचननिवृत्त्यर्थं षड्विंशतिशब्दस्याभ्यासो नियम्यते ।

**पुरान्तरिति चैके । अध्रिग्वादि त्रिरुक्त्वा शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तदिति जपित्वा दक्षिणावृदावर्तते ।**

अध्रिगो शमीध्वमित्याद्यपापान्तं त्रिरुक्त्वा शमितार इत्यादि च जपित्वा दक्षिणावृदावर्तते । दक्षिणावृद्वचनं विहारादव्यावृत्तिरिति प्राप्तमनूद्यते, ए[3]वं मन्त्रं जपित्वेदमेव कुर्यान्नान्यत्किंचिद्दक्षिणावृदित्येवमर्थम् । उक्तेन प्रकारेणाऽऽवृत्य पृष्ठतः कृत्वाऽऽसीत ।

**मैत्रावरुणश्च ।**

मैत्रावरुणश्चैवमावृत्य पृष्ठतः कुर्यात् ।

**सव्यावृतौ ब्रह्मयजमानौ संज्ञप्ते पशावावर्तेरन् ॥ ३ ॥**

पुनरावर्तनकालोऽयम् । तस्मादेतावन्तं कालं पराञ्च एवाऽऽसीरन् ॥ ३ ॥

**वपायां श्रप्यमाणायां प्रेषितस्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तममिमं नो यज्ञमिति ।**

वपायां श्रप्यमाणायामितिवचनं श्रप्यमाणवपासंबन्धिस्तोकाभिधाना[4]नुवचनेन वपैव संस्क्रियत इति ज्ञापनार्थम् । प्रेषितवचनं प्रैष एवास्यानुवचनस्य निमित्तं नावसरविशेष इत्येवमर्थम् ।

**उक्तमादापनं स्वाहाकृतिभ्यः ।**

स्वाहाकृत्यर्थमत्र स्रुगादापनं कर्तव्यम् । तेन[5] माध्यंदिने सवने प्राजापत्येषु स्तोकानन्तरं स्वाहाकृत्यभावादादापनं न कर्तव्यं भवति । एतदप्यत्रावगम्यते—स्रुगादापनं प्रयाजार्थमेवेति । तेनाऽऽज्यभागप्रभृतिषु हविराहुतिप्रभृतिषु चैतन्न स्यात् ।

**होताऽयक्षदग्निं स्वाहाऽऽज्यस्य स्वाहा मेदस इति प्रैष उत्तमाऽऽप्री याज्या ।**

दशसूक्तेष्वितिवचनादुत्तमप्रैषोऽवशिष्टः स्वाहाकृत्यर्थः, तदर्थमेवाऽऽप्री चावशिष्टा,

---

१ ख. ग. घ. ङ. च. झ. °शु भव । २ क. ग. घ. हतमस्य । ३ ख. ग. घ. ङ. च. झ. एतं म° । ४ ङ. झ. °नादनु । ५ क. ख. ग. घ. °न मध्यंदि° ।

किमित्यत्रोभयोर्वचनम् । आप्रीवचनस्येदं प्रयोजनम्- उत्तमैवाऽऽप्री याज्या नात्र देवताः स्वाहाऽऽमुं स्वाहाऽमुमिति । प्रकृताभिगन्तव्येति । प्रैषवचनं विस्पष्टार्थम् ।

**वपा पुरोळाशो हविरिति पशोः प्रदानानि ।**

प्रदानानीति । यागा इत्यर्थः । पशावेतद्द्रव्यसंबन्धिनस्त्रयो यागाः कर्तव्या इत्यर्थः । तेषां प्रदानानीति संज्ञा । पशावित्यधिकारे पशोर्वचनं पशोः पशोरिति वीप्सार्थम् । तेनैकदेवत्येषु बहुषु पशुषु प्रतिपशु वपाहविर्भेदवत्पुरोडाशभेदः सिद्धो भवति ।

**तानि पृथङ्नानादेवतेषु ।**

एकदैवत्य एकस्मिन्नपि पशौ वपापुरोडाशहविषां प्रैषयाज्यानुवाक्याभेदात्पृथग्भावः सिद्धः परस्परम् । तथा नानादेवतेषु पशुषु वपायागानामेवं पृथग्भावः सिद्धो याज्यानुवाक्याभेदादेव । तथा पुरोळाशानां हविषामपीति पृथग्भावस्याविधेयत्वादेकदेवतेषु वपानां सकृद्यागः । तथा पुरोडाशानां हविषामपीति व्यतिरेक एवात्र विधातव्यः । तानीति वचनं योगविभागार्थम् । तेनैकदेवतेष्वपि वपादीनां पृथक्प्रदानत्वं न भवति । एकयोगत्वे नानादेवतेष्वेतेषां पृथक्प्रचारवत्पृथक्प्रदानत्वमपि स्यात् । योगविभागे सति पूर्वेण सर्वेषां प्रदानत्वम् , उत्तरेणैकदेवतेषु सहप्रचार इति युक्तम् ।

**मनोतां च ।**

अवदीमानहविरर्थत्वान्मनोताया नानादेवतेषु पृथक्प्रचारे सत्यवदानस्य यागव्यवधानात्प्रतिपशु मनोतामन्त्रमावर्तयेत् ।

**न मनोताऽऽवर्ततेत्येके ।**

एक आचार्या मनोता नाऽऽवर्तयितव्येत्याहुः । मनोता वेत्येतावता विकल्पे सिद्धे गुरुसूत्रकरणं न्यायविकल्पोऽयमिति प्रदर्शनार्थम् । तत्रैके मन्यन्ते । आग्नेयत्वान्मन्त्रस्य । 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोताशब्दस्याग्नौ प्रवृत्तिदर्शनात् । 'अग्निर्वै देवानां मनोता ' इति च श्रुतेः । संप्रैषे च हविःशब्दस्य मनोताकाललक्षणार्थत्वेनापि संभवादनुवचनस्याग्न्यर्थत्वम् । अग्न्यर्थत्वे च यागावृत्तावप्याहवनीयाख्यस्याग्नेरभेदेनानावृत्तिरेवेति । आचार्यस्तु । पशोर्वाऽऽलब्धस्य मनोऽपक्रामति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याह । ' मन एवास्यावरुन्धे ' इति श्रुतिः । तस्या अयमर्थः—पशोरालब्धस्य

---

१ ख. ग. °मैवाऽऽप्री°। २ ङ. °वतावचना स्वा°। ३ क. °हाऽमुं°। ४ घ. च. °ग्भावाः। सिद्धाः प°। ५ झ. °द्धोऽनु°। ६ ख. ग. घ. ङ. च. झ. °नां प्रदानत्वं भ°। ७ ङ. झ. °ष्वेव ते°। ८ क. घ. °पक्रम°। ९ ख. ग. °लम्भनस्य ।

संज्ञपनकाले जीवोऽपक्रामति स एव मनःशब्देनोच्यते । ' यत्ते यमं वैवस्वतं मनो जगाम दूरकम् ' इत्यादिषु जीवे मनःशब्ददर्शनात् । जीवेऽग्निशब्दश्च दृश्यते—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।

इति भगवद्गीतासु दर्शनात् । अग्निजीवमनसामेकार्थत्वं च दृश्यते ' अयं होता प्रथमः पश्यतेमम् ' इति [1]तृचे । अतोऽवदीयमानहविषो मनोताया अनुब्रूहीत्युक्तेऽग्निजीवाख्यस्य मनसो हविःसंबन्धार्थमनुब्रूहीत्युक्तं भवति । अतोऽग्निं प्रकाशयदनुवचनं हविषो जीवमेव प्रकाशयतीति हविरर्थमेवेति गम्यते । तेन यागावृत्ताववदानस्य पदार्थान्तरव्यवधानात्प्रतिहविर्मनोता[2]नुवचनावृत्तिं[3] मन्यते । अत्र न काचिल्लक्षणाऽप्यस्तीति तमेव पक्षं परिगृहीतवानाचार्यः ।

**तेषां सलिङ्गाः प्रैषाः ।**

तेषां प्रदानानां समानलिङ्गाः प्रैषाः[4] प्रैषसमाम्नाय एव पठितास्तदर्थत्वेनैव समानलिङ्गाः समानदेवता इत्यर्थः । तेनैतत्साधितं भवति—यद्दैवत्यः पशुस्तद्दैवत्यः पुरोडाशो भवतीति । तेषामिति वचनं तेषामेव संप्रैषत्वं नाऽऽज्यभागयोरित्येवमर्थम् । प्रैषसमाम्नायस्य क्रत्वर्थत्वात्तत्र चाऽऽज्यभागयोः[5] संप्रैषस्यानाम्नानादप्रैषावेवेति मन्यमानस्तेषामित्युक्तवानाचार्यः । यद्यध्वर्यवः[6] संप्रैषौ कुर्युस्तदा ' होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज ' इत्येतौ प्रैषौ भवतस्तदाज्यभागयोः ।

**तेष्वग्नीषोमयोः स्थाने या या पशुदेवता ।**

तेषु प्रदानप्रैषेषु पश्वन्तरेष्वतिदेशात्प्राप्तेषु यास्तासु विकृतिषु देवतास्तासामेकैकामेवाग्नीषोमस्थाने निर्दिश्य यष्टव्यं न सर्वा देवताः सकृदेव निर्देष्टव्याः । यावत्यस्तत्र देवतास्तावत्कृत्वः प्रैषोऽभ्यसितव्य इत्यर्थः । एतदर्थमेव या या पशुदेवतेति वीप्सावचनमुक्तम् । अयमर्थोऽस्मिन्सूत्रे सम्यग्व्युत्पादितोऽग्नीषोमयोः स्थान इति ब्रुवताऽऽचार्येणाग्नीषोमीयः पशूनां प्रकृतिः पाशुके विध्यन्ते गृह्यमाण इति ।

**छागस्थान उस्रो गौर्मेषोऽविको हयोऽश्वोऽन्वादेशे व्यक्तचोदनाम् ।**

गोमेषहयानामेकैकस्या जातेर्द्वौ द्वौ शब्दौ नियम्येते वैकल्पिकौ । एतदुक्तं भवति गोजातिश्चेत्पशुश्छागस्थाने गोशब्दमुस्रशब्दं वा प्रयुञ्जीत । एवमितरयोरपि जात्योः । प्रायिकोऽयं विधिः । कुतः । अन्वादेशे व्यक्तचोदनाम् । औपदेशिकस्य मन्त्रस्य प्रकृतौ

---

१ च. तृचे । २ घ. च. °तानुवृ° । ३ ख. ग. झ. °वृत्तिर्गम्यते । ४ क. घ. प्रैषाप्रै° । ५ झ. °योः संप्रै° । ६ क. झ. °र्यवः संप्रे° ।

प्रयोग आदेशः । तस्यैवातिदेशप्राप्तस्य विकृतौ प्रयोगोऽन्वादेशः । व्यक्तचोदना प्रकृतिप्राप्तस्य मन्त्रस्य विकृतौ संस्कृत्य पुनः पाठः । यथा 'प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्य' इत्येवमादि । तत्र[3] तमनुसृत्यैव मन्त्राः प्रयोक्तव्याः । एतदुक्तं भवति—आतिदेशिकमन्त्रप्रयोगे यस्माद्विकृत्युपदेशमनुसृत्यैव मन्त्रः प्रयोक्तुं युज्यते तस्माद्विकृत्युपदेशे सति स एव भवति । तदभावे गोशब्द उस्रशब्दो वेत्येवं द्रष्टव्यम् ।

**एवं वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु ।**

यथा प्रदानप्रैषेषु देवताशब्दस्य पशुशब्दस्य च स्थान एकैकं देवताशब्दं पशुशब्दं च कृत्वा प्रयोग उक्तः, एवं वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु प्रयोगः कर्तव्यः । तत्रायं विशेषः—नानादेवतेष्वपि पशुषु यत्राग्नेरित्यादेः प्रिया धामान्यन्तस्य, अयाळादेस्तदन्तस्य, बध्नन्नमुष्मा अमुमित्यस्य च त्रिषु प्रैषेष्वभ्यासो न सर्वस्य प्रैषस्येति ।

**प्राजापत्ये त्वग्निचित्या संयुक्ते वायव्यं पशुपुरोळाशम् । एके वायव्ये प्राजापत्यं तेन पशुदेवता वर्धत इत्याचार्याः पुरोळाशतत्प्रधानत्वात् ।**

अयमभिप्रायः प्रकृतावग्नीषोमीये पशौ समानदैवतत्वात्पुरोडाशयागस्य पशुदेवताप्रत्यभिज्ञानात्तत्संस्कारद्वारेण तदर्थता युक्ता । अत्र पुनर्भिन्नदैवतत्वात्तदर्थता न युक्ता । ततश्च सूक्तवाकप्रैषेषु पुरोडाशेन पशुदेवतावर्धनमयुक्तमित्याशङ्का नैव कर्तव्या । प्राजापत्येऽपि पशौ प्राकृतकार्यार्थतयैव पुरोडाशयागोऽपि प्राप्त एव । एवं पशुयागार्थतया प्राप्तस्य देवतान्तरं विधीयमानं प्राकृतदेवताकार्यकरत्वेनैव विधीयते । तत्र यच्छब्दभेदादप्रत्यभिज्ञानमाशङ्क्यते तदपि नैवाऽऽशङ्कनीयम् । तदर्थ एवायंशब्दः प्रयुक्त इत्यवगम्यते । ऐन्द्र्या गार्हपत्यमितिवद्भविष्यतीति । 'तेन पशुदेवता वर्धत इत्याचार्याः पुरोळाशतत्प्रधानत्वात्' इतिवदतः सूत्रकारस्येत्ययमेवार्थः श्रुतौ चोद्योत्तरभङ्ग्योपपादितः । तदाहुः—यदन्यदेवत्य उत पशुर्भवति' इत्येवमादिना 'पवमानः प्रजापतिः' इत्येवमन्तेन ।

**पुरोळाशनिगमेषु पुरोळाशवद्धवींष्याज्यवर्जं येषां तेन समवत्तहोमः ।**

यस्मिन्ननेकपशुके पशुतन्त्रे पुरोडाशस्य स्थाने पुरोडाशचर्वाज्यधानाकरम्भपरिवापामिक्षादयो विहितास्तत्र स्विष्टकृति तेषां सर्वेषां समवदाय प्रचारो विहितश्च । तत्र पशुपुरोडाशस्विष्टकृत्प्रैषे सूक्तवाकप्रैषे च पशुपुरोडाशेन देवता वर्धने कर्तव्ये सति प्रकृतौ पुरोडाशस्य पुरोडाशत्वात्तेनैव शब्देन वर्धनं कृतम् । इह तु नानारू-

१ ख. ग. °स्य प्रकृ°। २ ख. ग. झ. °दनां प्र°। ३ ङ. °त्रताम°। ४ ख. ग. °वतात्वा°। ५ ख. ग. °वतात्वा°। ६ घ. च. °धानाः क°।

त्वाद्धविषां स्वेन स्वेनैव शब्देन निगमने प्राप्ते पुरोडाशशब्देनैव चर्वादीनां निगमनं विधीयते । सवनीयानां स्विष्टकृत्प्रैषे सौमिके सूक्तवाकप्रैषे चास्य च्छात्रिन्यायस्य दृष्टत्वा-देवमुक्तम् । आज्यभागस्य तु तत्राभावाददृष्टः प्रयोग इति तस्य स्वशब्देनैव निगमनं भवति । आज्यस्य तु पुरोडाशत्वसंभावनैव संदिग्धा । यद्यसंभवस्तदाऽऽज्यवर्जमित्ययम-भावानुवादः । यदि संभवति तदा स्वशब्देनैव निगमनमाज्यपुरोडाशानामाज्यपुरोळाशैरिति ।

**मेधो रभीयानिति पश्वभिधाने ।**

मेधो रभीयानित्येते पदे पश्वभिधाने पशोरभिधायके इत्यर्थः । मेधपदस्य विधानं प्रथ-मप्रयुक्तात्वादस्मा एनमित्येवमादीनां प्रदर्शनार्थम् । रभीयानित्यस्योपमार्थत्वशङ्कानिवृत्त्य-र्थम् । पश्वभिधाने आदद्घसदिति पाठः कर्तव्यः प्रगृह्यत्वादस्य पदस्य ।

**आदद्घसत्करज्जुषतामघदग्रभीदवीवृधतेति देवतानाम् ॥ ४ ॥**

एतेषां पाठो द्विवचनान्तानामाम्नायसिद्धत्वादेकवचनबहुवचनयोरिष्टलकारपरिग्रहार्थम् । आदत्, आदन् । घसत्, घसन् । करत्, करन् । जुषतां, जुषन्ताम् । अघत्, अघन् । अग्रभीत्, अग्रभीषुः । अवीवृधत, अवीवृधन्त ॥ ४ ॥

**हुतायां वपायां सब्रह्मकाश्चात्वाले मार्ज-यन्ते निधाय दण्डं मैत्रावरुणः ।**

अस्मिन्नवसरे चात्वाले मार्जयन्ते । बहुवचनेनैव सर्वेषां मार्जने सिद्धे सब्रह्मकवचनमस्म-दीयाः सर्वे सह मार्जयेयुर्न पृथक्पृथगित्येवमर्थम् । दण्डनिधानवचनं स्तोकानुवचनार्थमात्तस्य दण्डस्यात्रैव निधानं न प्रागित्येवमर्थम् ।

**इदमापः प्रवहत सुमित्र्या न आप ओषधयः सन्तु दुर्मि-त्र्यास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति ।**

इदमापः प्रवहतेत्यनयर्चा यजुषा चोभाभ्यां मार्जनं कर्तव्यम् ।

**एतावन्मार्जनं पशौ ।**

एतावदेव मार्जनं नाऽऽतिदेशिकं कर्तव्यमित्यर्थः । पश्वधिकारे पुनः पशाविति वचनं पश्वङ्गभूतायामिष्टावातिदेशिकस्य मार्जनस्य प्रवृत्त्यर्थम् ।

**तीर्थेन निष्क्रम्याऽऽसीतामापुरोळाशश्रपणात् ।**

अस्मिन्नवसरे नियमेनैतत्कर्तव्यम् ।

---

१ ङ. झ. ज्यस्य । २ ख. ग. यद्याऽसं° । ३ ख. ग. °वादनु° । ४ ङ. झ. °नैव त° ।

**तेन चरित्वा स्विष्टकृता चरेयुः ।**

चरित्वेति प्रकृते चरेयुरितिवचनं प्रधानस्विष्टकृतोर्भेदप्रतिपत्त्यर्थम् । अतोऽन्वायात्यानां प्रवेशे सति तयोरेव मध्ये प्रवेशः सिद्धो भवति ।

**यदि त्वन्वायात्यानि तैरग्रे चरेयुः ।**

यद्यस्मिन्नवसर आगन्तवो यागा उत्पद्यन्ते तैः पशुपुरोडाशस्विष्टकृतोऽग्रे चरेयुः । तेषामन्वायात्यानीति संज्ञा । एतदुक्तं भवति—यदि पुरोडाशस्विष्टकृतोऽग्रे यैः कैश्चन यागैश्चरेयुस्तान्यन्वायात्यानीति तेषामियं संज्ञा विधीयते । चरेयुरिति पुनर्वचनं चरणमेवैषां कर्तव्यं नान्यन्निगमनादीति सूचनार्थम् ।

तदेवोत्तरेण सूत्रेण विस्पष्टयति—

**न तु तेषां निगमेष्वनुवृत्तिः ।**

अन्वायात्यदेवतानां हविषां चाऽऽवाहनादिषु निगमेष्वनुवृत्तिर्नास्तीत्यर्थः ।

**नान्येषामूर्ध्वमावाहनादुत्पन्नानाम् ।**

अन्वायात्येभ्योऽन्येषामप्यावाहनकालादूर्ध्वं हविरादि सर्वमुत्पद्यते येषां तेषामपि निगमेष्वनुवृत्तिर्नास्तीत्यर्थः ।

**इळामग्ने पुरुदंसं सनिं गोर्होता यक्षदग्निं पुरोळाशस्य स्वदस्व हव्या समिषो दिदीहीति पुरोळाशस्विष्टकृतः ।**

पुरोळाशयोः पुरोडाशाना[1]मिति हविर्दैभे प्रैष ऊह्यः ।

**ऊर्ध्वमिळायाः ॥ ५ ॥**

**मनोतायै संप्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह ।**

अत्रेळामुपहूय मनोतामन्वाह । प्रेषितवचनमुक्तप्रयोजनम् ।

**हविषा चरन्ति ।**

तेषां सलिङ्गाः प्रैषा इति प्रैष उक्तः ।

**तत्र प्रैषे करत एवाग्नीषोमावेवमित्यैतरेयिणः ।**

तत्र हविःप्रैषे करत[2] एवाग्नीषोमावित्याम्नातं तस्यैवशब्दस्य स्थान एवमित्यैतरेयिण आचार्या वक्तव्यमित्याहुः ।

किमविशेषेण, नेत्युच्यते—

**अन्यत्र द्विदेवतान्मैत्रावरुणदेवते च ।**

अन्यत्र द्विदेवतात्पशोरेकदेवते बहुदेवते च पशावित्यर्थः । द्विदेवते च मैत्रावरुणदेवते एवमिति वदन्ति । मित्रावरुणौ देवता यस्य पशोः स मैत्रावरुणः पशुः[3] । मैत्रावरुणो

१ क. व. ङ. च. °ळाशाना° । २ च. करत ए° । ३ क. ख. ग. घ. च. °शुः । अ° ।

देवता यस्य स मैत्रावरुणदेवतः पशुः । अत्र मैत्रावरुणशब्दस्य मुख्यया वृत्त्या देवताप्रतिपादनासंभवाल्लक्षणया प्रतिपादयति । अतस्तेन शब्देन *व्यञ्जनौ[1]द्विदेवत्यः पशुर्लक्ष्यते तस्मिंश्चेत्यर्थः । एतल्लक्षणग्रहणं शाखान्तरदर्शनाल्लभ्यत इत्युक्तं भाष्यकारेण ।

अत्र कारणमाह—

**तथा दृष्टत्वात् ।**

प्रैषेष्वेकदेवतेषु बहुदेवतेषु च व्यञ्जनादि द्विदेवते च तथा दर्शनात्ते मन्यन्त इत्यर्थः ।

**प्रकृत्या गाणगारिः ।**

तत्र हेतुमाह—

**उत्पन्नानां स्मृत आम्नायेऽनर्थभेदे* निरर्थो विकारः ।**

संप्रदायाविच्छेदेनाभ्यस्यमान आम्नाये दृश्यमानानां पदानामर्थवशेनानूह्यानां सतां विकार इत्येतन्निष्प्रयोजनमित्यर्थः । उपन्यासप्रयोजनमेवंविधानां सामान्यतो दृष्ट्या भ्रान्तिः क्वचिदपि न कर्तव्येति ।

**याज्याया अन्तरार्धर्चौ वसाहोम आरभेत् ।**

वसाहोमार्थं तत्रावसाय नोत्तरमाददीत । अवसानस्य तदर्थत्वात्तस्मिन्कृते समापयेत् ।

**वनस्पतिना चरन्ति प्रैषमभितो याज्यानुवाक्ये ।**

प्रैषसमाम्नाये यो वनस्पतिप्रैषस्तमभितो ये ऋचावाम्नायेते ते वनस्पतेर्याज्यानुवाक्ये भवतः । प्रैषसमाम्नाये पठिताऽपि याज्येतिसमाख्यातत्वाद्धोत्रैव वक्तव्या ।

**यत्राग्नेराज्यस्य हविष इत्यत्राऽऽज्यभागौ ।**

यद्याज्यभागौ क्रियेते तदा तस्मिन्प्रैषे प्रधानदेवतावदेतौ निगमयेदित्यर्थः । एतम्, एतौ, एतान् । एताम्, एते एताः । रभीयांसं रभीयांसौ रभीयसः । रभीयसीं रभीयस्यौ रभीयसीः ।

**अयाळग्निरग्नेराज्यस्य हविष इति स्विष्टकृतीळामुपहूयानुयाजैश्चरन्ति ।**

इळामुपहूयेतिवचनमानन्तर्यार्थम् । तेन प्रकृतिप्राप्तं दक्षिणाप्रतिग्रहाद्यत्र नास्तीति गम्यते ।

---

* क. प्रकाशनात् । + ब.—अर्थान्यत्वे शब्दान्यत्वं भवति । अर्थान्यत्वेऽविद्यमाने शब्दस्य यो विकारः क्रियते स निरर्थकः स्मृतः ।

---

1 ङ. झ. नादि द्विदे° ।

**तेषां प्रैषास्तृतीयं प्रैषसूक्तमेकादशेह ।**

इहैकादशानुयाजा न त्रयः ।

**प्रागुत्तमा द्वावावपेत । देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु । देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेत्विति ।**

एकादशानुयाजा इत्युक्त्वा द्वयोरेव याज्ययोः । पाठात्प्राकृतीभ्योऽन्या वैश्वदेव्या आहर्तव्याः ।

**अनवानं प्रेष्यति । अनवानं यजति ।**

पुनरनवानग्रहणमुत्तरसूत्रे प्रैषाधिकारनिवृत्त्यर्थम् ।

**उक्तमुत्तमे ।**

यदुक्तम् ' अनवानं यजति प्रकृत्या वा ' इति तद्याज्याया एव न प्रैषस्येत्येवमर्थं पूर्वसूत्रे पुनरनवानग्रहणमिति व्याख्यातम् ।

**सूक्तवाकप्रैषे पूर्वस्मिन्निगमे गृह्णन्नित्यत्राऽऽज्यभागौ ।**

निगमद्वित्वात्पूर्वस्मिन्निति विशेषणम् । अत्रेतिवचनं प्रधानदेवतावदाज्यभागयोरपि निगमनार्थम् । गृह्णन्निति बध्नन्शब्दस्य प्रत्याम्नायः ।

**बध्नन्नमुष्मा अमुं बध्नन्नमुष्मा अमुमिति पशूंश्च देवताश्च ।**

नानादैवतनानाजातीयपशुके पशुतन्त्रे पदत्रयस्याभ्यासलाभार्थं पठितस्यापि पुनरभ्यास-पाठः ।

**देवताश्चैवैकपशुकाः ।**

एकपशुका एकजातीयपशुका इत्यर्थः । एकव्यक्तिपशुत्वे देवता इतिबहुवचनं नोपपद्यते । देवता देवता देवतेति । तत्रैकशेषः । न ह्येकः पशुर्बह्वीभिर्देवताभिः संबध्यते । ननु वैश्व-देवाग्निमारुत इत्यादिः पशुरस्ति । सत्यम् । अस्त्याश्रयभेदो न तु देवताभेदः । एवं तत्र विग्रहः—विश्वेदेवा देवता यस्य स वैश्वदेव इति । अतो जात्यभिप्राय एवैकशब्दः । यत्रैकजातीयपशुका अनेका देवतास्तत्र देवताशब्दमेवाभ्यसेन्न बध्नन्पशुशब्दौ । पशुशब्दस्य यावद्द्रव्यं विभक्त्यूहः कर्तव्यः । बध्नन्नग्नय इन्द्राग्निभ्यां छागाविति ।

**पशूंश्चैवैकदेवतान् ।**

अत्र पशुशब्दानेवाऽऽवर्तयेन्नान्यौ । यथा ' बध्नन्प्रजापतयेऽश्वमजं तूपरं गोमृगम् ' इति भवति, उभयोरेकजातित्वे ' बध्नन्प्रजापतये छागौ ' इति । न किंचिदभ्यसित-व्यम् ।

---

१ क. घ. च. न त्वेकः ।

**उत्तर आज्येनेत्याज्यमागावमुष्मा अमुनेति पूर्वेणोक्तम् ।**

पुरोळाशं पुरोळाशौ पुरोळाशान् । तं तौ तान् । तां ते ताः । पुरोळाशेन पुरोळाशाभ्यां पुरोळाशैः ।

**समाप्य प्रैषमग्नौ दण्डमनुप्रहरेदनवभृथे ।**

अवभृथरहिते कर्मणि सूक्तवाकप्रैषं समाप्यानन्तरमेवाऽऽहनीये दण्डमनुप्रहरेत् ।

**अवभृथेऽन्यत्र ।**

अन्यत्रेति । सावभृथे कर्मणीत्यर्थः । तत्रावभृथेऽनुप्रहरेदित्यर्थः ।

**कृताकृतं वेदस्तरणं तीर्थेन निष्क्रम्याग्निपशुकेतनान्यव्यवयन्तो हृदयशूलमुपोयमानमनुमन्त्रयेरञ्छुगसि योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमभिशोचेति ।**

संस्थाजपात्प्राक्तीर्थेन निष्क्रम्याग्निपशुके*तनान्यव्यवयन्तो हृदयशूलमुदस्यमानं 'शुगसि' इत्यनेन मन्त्रेणानुमन्त्रयेरन्सर्वे कर्तारः ।

**तस्योपरिष्टादप उपस्पृशन्ति द्रुपे राज्ञो वरुणस्य गृहो मितो हिरण्ययः स नो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु । धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च । यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च । मयि वाऽऽपो मोषधीर्हिंसीरतो विश्वव्यचाऽभूस्त्वेतो वरुण नो मुञ्च । सुमित्र्या न आप ओषधयः सन्त्विवति च ।**

चशब्दः सुमित्र्या न इत्यस्य कृत्स्नस्य ग्रहणार्थः । तस्योदस्यमानस्योपरिष्टादप उपस्पृशन्ति 'द्रुपे राज्ञः' इत्यादिभिर्मन्त्रैः ।

**अस्पृष्ट्वाऽनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः कुर्वते तिस्रस्तिस्र एकैकः ।**

अस्पृष्ट्वा हृदयशूलमनवेक्षमाणास्तमेवासंस्पृशन्तः परस्परं प्रत्या[1]व्रजन्ति । प्रत्याव्रजन्तः सर्वे तिस्रस्तिस्रः समिधो गृह्णीयुः । एकैक इति क्रमेण ग्रहणार्थम् । तेन सर्वे न युगपद्गृह्णीयुः ।

**अग्नेः समिदसि तेजोसि तेजो मे देहीति प्रथमाम् । एधोऽस्येधिषीमहीति द्वितीयाम् । समिदसि समेधिषीमहीति तृतीयाम् ।**

प्रथमद्वितीयतृतीयग्रहणान्यभ्याधाने प्रथमगृहीतां प्रथमभ्यादध्यात्, एवं द्वितीयां तृतीयामित्येवमर्थानि ।

---

* कं.—आयतनानि ।

---

१ च. °त्यायन्तः प्र° ।

एत्योपतिष्ठन्त आपो अद्यान्वचारिषमिति । ततः समिधोऽभ्यादधति यथागृहीतमग्नेः समिदसि तेजोऽसि तेजो मेऽदाः स्वाहा सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहा । पितॄणां समिदसि मृत्योर्मा पाहि स्वाहेति ।

तत इति सर्वेषामुपस्थाने परिसमाप्ते पश्चादभ्याधानारम्भार्थं यथागृहीतामिति ग्रहणम् । यो यः पूर्वं गृह्णीयात्स स पूर्वमभ्यादध्यान्न सर्वे युगपदभ्यादध्युरिति ।

ततः संस्थाजप इति पशुतन्त्रम् ॥ ६ ॥

पशुमात्रस्यैतत्तन्त्रं न पशुविशेषस्येत्यर्थः ॥ ६ ॥

प्रदानानामुक्ताः प्रैषाः ।

सर्वत्र प्रदानानामुक्ता एव प्रैषा भवन्ति नान्य इति । अतिदेशप्राप्तानां पुनर्वचनं क्वचित्क्वचित्पशुविशेषे तदर्थतया प्रैषाम्नानं याज्यानुवाक्याम्नानं चास्ति तत्रापि प्रदानप्रैषा एत एव ग्रहीतव्या इत्येवमर्थम् ।

तेषां याज्यानुवाक्याः ।

याज्यानुवाक्या इत्येतावतैव प्रदानानामेवेति सिद्धे तेषामिति वचनम् । ' इति पशवः ' इत्यस्मिन्सूत्रे पशून्विधास्यति तेषां[3] पशूनां यानि प्रदानानि तेषां पशूनां याज्यानुवाक्या वक्ष्यन्त इत्येवमर्थम् ।

सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्याः ।

ततो याज्या इत्यनेन विनाऽपि शिष्टा याज्या एव भवन्ति । वचनप्रयोजनं सर्वत्र पूर्वं प्रोक्ता अनुवाक्या उत्तरा याज्या इति ज्ञापनार्थम् । तत्र याज्यायाः पूर्वनिपातोऽल्पाच्तरत्वादित्यवगन्तव्यम् ।

दैवतेन पशुनानात्वम् ।

याज्यानुवाक्यालिङ्गितदैवतेन वक्ष्यमाणानां पशूनां नानात्वमित्यवगन्तव्यम् ।

अग्ने नय सुपथा राये अस्मानिति द्वे पाहि नो अग्ने पायुभिरजस्रैः प्र वः शुक्राय मानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः प्र कारवो मनना वच्यमानाः ।

अग्नेरेताः ।

अथ सरस्वत्याः—

एका चेतत्सरस्वती नदीनामुत स्या नः सरस्वती जुषाणा

---

१ ङ. छ. °दधाति। २ ख. ग. घ. च. ततः संस्थाजप इ° । ३ च. येषां ।

सरस्वत्यभि नो नेषिवस्यः प्रक्षोदसा धायसा सस्र एषा
पावी रवी कन्या चित्रायुर्यस्ते स्तनः शशयो यो मयोभूः ।

अथ सौम्याः[१]—

त्वं सोम प्रचिकितो मनीषेति द्वे त्वं नः सोम विश्वतो
वयोधा या ते धामानि दिवि या पृथिव्यामषाह्ळं
युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजन्ति ।

अथ पूष्णः—

यास्ते पूषन्नावो अन्तः समुद्र इति द्वे पूषेमा आशा
अनुवेद सर्वाः शुक्रं ते अन्यद्यजतं ते अन्यत्प्र पथे
पथामजनिष्ट पूषा पथस्पथः परि पतिं वचस्या ।

अथ बृहस्पतेः—

बृहस्पते या परमा परावदिति द्वे बृहस्पते
अतियदर्यो अर्हात्तमृत्विया उप वाचः सचन्ते
संयंस्तुभोऽवनयो नयन्त्येवापित्रे विश्वदेवाय वृष्णे ।

अथ विश्वेषां देवानाम्—

विश्वे अद्य मरुतो विश्व ऊत्यानो देवाना मुपवेतु शंस आ
नो विश्व आस्क्रागमन्तु देवा विश्वे देवाः शृणुतेमं हवं मे ये
के च ज्मा महिनो अहिमाया अग्ने याहि दूत्यं मारिषण्यः ।

अथेन्द्रस्य—

इन्द्रं नरो नेमधिता हवन्त इति तिस्र उरुं नो लोकमनुनेषि
विद्वान्प्रससाहिषे पुरुहूत शत्रून्स्वस्तये वाजिभिश्च प्रणेतः ।

अथ मरुताम्—

शुची वो हव्या मरुतः शुचीनां नूष्ठिरं मरुतो वीरवन्तमा
वो होता जोहवीति सत्तः प्र चित्रमर्कं गृणते तुराया-
राइवेदचरमा अहेव या वः शर्म शशमानाय सन्ति ।

अथेन्द्राग्न्योः—

आ वृत्रहणा वृत्रहाभिः शुष्मैरामरतं शिक्षतं वज्रबाहू

---

[१] ख. ग. ङ. झ. °थ सोमस्य—

उभा वामिन्द्राग्नी आहुवध्यै शुचिं नु स्तोमं नवजातमद्य गीर्भिर्विप्रः प्रमतिमिच्छमानः प्रचर्षणिभ्यः पृतना हवेषु ।

अथ सवितुः—

आ देवो यातु सविता सुरत्नः सघानो देवः सविता सहावेति द्वे उदीरय कवितमं कवीनां मगं धियं वाजयन्तः पुरन्धिमिति द्वे ।

अथ वरुणस्य—

अव सिन्धुं वरुणो द्यौरिव स्थादयं सु तुभ्यं वरुण स्वधा व एवावन्दस्व वरुणं बृहन्तं तत्त्वा यामि ब्रह्मणा वन्दमान इति द्वे अस्तम्नाद्द्यामसुरो विश्ववेदा इत्यैकादशिनाः ॥ ७ ॥

‘ अग्ने नय ’ इत्यादयः ‘अस्तभ्नाद्द्यामसुरः’ इत्येवमन्ता अग्न्यादिदैवत्या एकादश षळृच[1] आम्नाताः । तैश्चैकादश पशवो विहिता भवन्ति । तेषां समाहार एकादशिनीत्युच्यते । तस्यां भवा ऐकादशिना इत्युक्ताः ॥ ७ ॥

अग्नीषोमाविमं सु मे युवमेतानि दिवि रोचनानीति तृचावाऽऽवां मित्रावरुणा हव्यजुष्टिमाधातं मित्रावरुणा सुशस्त्या नो मित्रावरुणा हव्यजुष्टिं युवं वस्त्राणि पीवसा वसाथे प्र बाहवा सिसृतं जीवसेनो यद्बंहिष्ठं नातिविधे सुदानू हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याश्चित्रं देवानामुदगादनीकमिति पञ्च शं नो भव चक्षसा शं नो अह्नावायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छानो नियुद्भिः शतिनीभिरध्वरं पीवो अन्नां रयिवृधः सुमेधा राये नु यं जज्ञतू रोदसी मे प्र वायुमच्छा बृहती मनीषा तव वायवृतस्पते त्वां हि सुप्सरस्तमामिति द्वे कुविदङ्ग नमसा ये वृधास ईशानाय प्र हुतिं यस्त आनट्प वो वायुं रथयुजं कृणुध्वमुत त्वामदिते मह्यनेहो न उरुव्रजेऽदितिर्ह्यजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसं महीमूषु मातरं सुव्रतानामदितिर्द्यौरदितिरन्तरिक्षं न ते विष्णो जायमानो न जातस्त्वं विष्णो सुमतिं विश्वजन्यां विचक्रमे पृथिवीमेष एतां त्रिर्देवः पृथिवीमेष एतां परो मात्रया तन्वा वृधानेरावती धेनुमती हि भूतं विश्वकर्मन्हविषा वावृधान इति द्वे विश्वकर्मा विमना आद्विहायाः किंस्विदासीदधिष्ठानं यो नः पिता जनिता यो विधाता या ते धामानि परमाणि याऽवमा य इमे द्यावापृथिवी जनित्री तन्नस्तुरीपमधपोषयित्नु देवस्त्वष्टा

---

[1] क. षळर्च ।

सविता विश्वरूपो देव त्वष्टर्यद्ध चारुत्वमानट्पिशङ्गरूपः सुभरो वयोधाः प्रथममाजं यशसं वयोधां सोमापूषणा जनना रयीणामिति-सूक्तमादित्यानामवसा नूतनेनेमा गिर आदित्येभ्यो घृतस्नूस्त आदि-त्यास उरवो गभीरा इमं स्तोमं सक्रतवो मे अद्य तिस्रो भूमीर्धारयन्त्रीं रुत द्यून्न दक्षिणा विचिकितेन सव्या मही द्यावापृथिवी इह ज्येष्ठे ऋतं दिवे तदवोचं पृथिव्या इति द्वे प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्वे प्र द्यावायज्ञैः पृथिवी ऋतावृधा मृळानो रुद्रोत नो मयस्कृधीति द्वे आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीच इति तिस्र आ पश्चातान्नासत्या पुरस्तादा गोमता नासत्या रथेनेति चतस्रो हिरण्यत्व-ङ्मधुवर्णो घृतस्नुरभि क्रत्वेन्द्र भूरध ज्मस्त्वं महां इन्द्र तुभ्यं ह्क्षाः सत्राहणं दाधृषिं तुम्रमिन्द्रं सहदानुं पुरुहूत क्षियन्तं स्तुत इन्द्रो मघवा यद्ध वृत्रैवावस्व इन्द्रः सत्यः सम्राड्यद्वाग्वदन्त्यविचेतनानि पतङ्गो वाचं मनसा बिभर्ति चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन्निति द्वे देवीं वाचमजनयन्त देवा जनीयन्तोऽन्वग्रव इति तिस्रो दिव्यं सुपर्णं वायसं बृहन्तं स वावृधे नर्यो योषणासु यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । यस्य व्रते पुष्टिपतिर्नि-विष्टस्तं सरस्वन्तमवसे हुवेम ।

अत्राष्टादश षळृच आम्नाताः । तैरष्टादश पशवो विहिता भवन्ति । तत्रान्यलिङ्गत्वा-त्प्राजापत्या इत्युक्तम् ।

## इति पशवः ।

इत्येतद्याज्यानुवाक्यालिङ्गकल्पितदेवत्याः[1] पशवोऽस्मिन्सूत्रे विधीयन्ते । एत एकोनत्रिं-शत्पशवः । 'निर्मित ऐन्द्राग्नः' इत्यस्मिंश्चैको विधास्यते । तेन च सह त्रिंशत्पशवोऽस्मि-न्नध्याये विहिताः । तत्रैकादशिनानां गणात्मकत्वाद्गण[2] एवाऽऽम्नातो नैकैकः[3] पशुस्तेषाम् । एतदुक्तं भवति—एकादशिनी गणरूपेणाऽऽम्नाता[4] । अग्नीषोमीयादयश्चैकैकश आम्नाताः । निरूढश्चाऽऽम्नातः । अन्ये च केचनास्मिञ्शास्त्रे पशव आम्नाताः । तेषु सर्वेषु पशुषु पौर्णमासमेव तन्त्रम् । असमाम्नातेष्वर्थात्कल्पनीयं तन्त्रम् ।

---

१ च. °त्येते या° । २ ख. ग. °त्वात्तद्ग° । ३ ङ. झ. °कैकशः प° । ४ क. ख. ग. घ. °म्नाताः । अ° ।

**सौम्यश्च निर्मिताश्च ।**

सौम्याः सोमाङ्गभूता इत्यर्थः । निर्मिताः स्वतन्त्रा इत्यर्थः । अस्मिन्खण्डद्वये पशव आम्नातास्तेषां केचित्सोमाङ्गभूताः केचित्स्वतन्त्रा इत्यर्थः ।

**निर्मित ऐन्द्राग्नः ।**

ऐन्द्राग्नो निरूढो नाम पशुः कर्तव्यः । अयमपि पशुः पशूनां प्रकृतिः । तेनाङ्गभूता-[1]नामग्नीषोमीयः प्रकृतिः स्वतन्त्राणां निरूढः प्रकृतिरिति तेष्वेव पश्विष्टिर्नाङ्गभूतेष्वित्येवमर्थं निरूढप्रकृतित्वाम्नानम् ।

**षाण्मास्यः सांवत्सरो वा ।**

सोऽयं निरूढः पशुः षट्सु षट्सु मासेषु कर्तव्यः संवत्सरे संवत्सरे वा । अतोऽयं वीप्सावचनान्नित्योऽयं पशुरिति गम्यते ।

**प्राजापत्य उपांशु सावित्रसौर्यवैष्णववैश्वकर्मणाश्चैतेषां तन्त्रोपांशुयाजविकारान्वक्ष्यामः ।**

ऐष्टिकेषूक्तो विकारः । पाशुकेषु तन्त्रेष्विदानीं विकार उच्यते ।

**प्रैषादिरागुरस्थाने ।**

आगुरो यत्स्वरस्थानमुच्चैष्ट्वं नाम तत्प्रैषादेरपि[3] भवति । उच्चैरिति वक्तव्य आगुरस्थान इति वचनमागूः परिमाणो द्विपद एव प्रैषादिशब्दवाच्य इति ज्ञापनार्थम् ।

**आददघसत्करदिति चैतानि यथास्थानमुपांशु ॥ ८ ॥**

एतानीतिवचनमाददादीनां सप्तानां ग्रहणार्थम् । यथास्थानवचनं सर्वप्रैषपरिग्रहार्थम् । चशब्दो विकारसमुच्चयार्थः । कस्याचिदुच्चैष्ट्वविधानात्कस्यचिदुपांशुत्वविधानादन्यस्य तन्त्रस्वारस्वं भवति तेन प्रधानोपांशुष्वाददादिरन्यदुच्चैर्भवति । तन्त्रोपांशुषु प्रैषादेरन्यदुपांशु भवतीति सिद्धम् ॥ ८ ॥

**सौत्रामण्याम् ।**

सौत्रामणीति कर्मनाम तस्यां विधिर्वक्ष्यत इति संबन्धः ।

**आश्विनसारस्वतैन्द्राः पशवो बार्हस्पत्यो वा चतुर्थः । ऐन्द्रसावित्रवारुणाः पशुपुरोळाशाः ।**

आश्विनसारस्वतैन्द्राणामेत ऐन्द्रादयः पशुपुरोळाशा यथासंख्येन भवन्ति । बार्हस्पत्यस्य तु स्वदैवत एव, अन्यस्याविधानात् ।

---

१ ख. ग. तेषामङ्ग° । २ क. °व नि° । ३ ख. ग. °षादिर° ।

**मार्जयित्वा युवं सुराममश्विनेति ग्रहाणां पुरोनुवाक्या होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं सोमानां सुराम्णां जुषन्तां व्यन्तु पिबन्तु मदन्तु सोमान्सुराम्णो होतर्यजेति प्रैषः पुत्रमिव पितरावश्विनोभेति याज्या ।**

मार्जनं[1] चात्वालमार्जनं तत्कृत्वा ग्रहैः प्रचरेयुः । ते चाऽऽश्विनसारस्वतैन्द्रास्तेषामेषाऽनु[2]वाक्या । प्रैषयाज्ये[3] उक्ते । याज्यादीनां त्रिदेवतालिङ्गत्वात्तैः सह प्रचारः ।

**अग्ने वीहीत्यनुवषट्कारः सुरासुतस्याग्ने वीहीति वा । नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमनि । सुरा त्वमसि शुष्मिणीति सुरामवेक्ष्याधो बाहू सोम एष इति सोमम् ।**

अवेक्षेतेति शेषः । नाना हि वामिति कुम्भीस्थां सुरामवेक्ष्य ततो बाहू अधोमुखौ कृत्वा ग्रहपात्रस्थां सुरामवेक्षेत 'सोम एषः' इत्यनेन मन्त्रेण । क्रयणत्रिरात्रवासनद्रवीकरणपावनश्रयणोर्ध्वपात्रसंबन्धात्सुरैवं सोमशब्देनोक्ता ।

**यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति भक्षजपः ।**

भक्षयेदिति वक्तव्ये भक्षजप इति वचनं पयोग्रहेष्वप्यस्य मन्त्रस्य प्रापणार्थम् ।

**प्राणभक्षोऽत्र ॥ ९ ॥**

अत्रेतिवचनं सुराग्रहेष्वेव प्राणभक्षो भवति पयोग्रहेषु प्रत्यक्षभक्ष एवेति प्रदर्शनार्थम् । अस्मिन्कर्मणि केषांचित्पशुपुरोडाशा न सन्ति ग्रहा एव तेषां पशुपुरोडाशकार्यं भवन्तीति । अस्मिन्कर्मणि केषांचित्प्रैषा न सन्ति । तत्रापि मैत्रावरुण एवानुवाक्यां ब्रूयात् । यावद्वचनमपोद्यत इतरत्प्रकृतिप्राप्तमेवावतिष्ठते । (* सिद्धान्तभाष्ये—ग्रहाणामिति बहुवचनात्सोमग्रहाश्च विद्यन्ते । उत्तरत्र भक्षविधानाच्च न सुराया भक्षो विद्यते । प्रैष इति वचनं प्रैषपाठेऽनाम्नातत्वात् । अथ वा स्विष्टकृत्प्रचारेऽपि स्विष्टकृतोऽप्ययमेव प्रैषः कथं स्यादिति केचिदध्वर्यवो ग्रहाणां स्विष्टकृता पृथक्प्रचरन्ति । तत्रापि समाम्नाते ग्राह्ये संयाज्ये । तत्र 'होता यक्षदग्निं सोमानां सुराम्णां जुषतां वेतु पिबतु सोमान्सुराम्णो

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थो घ. ङ. च. पुस्तकेषु नास्ति ।

---

१ घ. °नं चत्वा° । २ ख. ग. ङ. झ. °मेता अ° । ३ ङ. प्रैषायाज्या उक्ताः । या° । ख. ग. झ. प्रैषयाज्या उक्ताः । या° । ४ ख. ग. घ. °नां दे° । ५ ख. ग. घ. च. इति तत्प्र° ।

होतर्यजेति प्रैषः कर्तव्यः । अस्मिंस्तु पक्षे ग्रहाणामनुवषट्कारो न भवति । अनुवषट्कारस्य स्विष्टकृत्स्थानापन्नत्वात् ) आदेशस्तु कर्तव्य एव । प्रैषे सति तत्रैवाऽऽदेशस्य कृतत्वाद्याज्यायामादेशप्रतिषेधः कृतः । असति तस्मिन्याज्यायामादेशः कर्तव्य एव । कौकिल्यां तु सौत्रामण्यां प्रयाजादीनां प्रैषादयः केचन तदर्थतयैवाऽऽम्नाताः । तत्रापि यावदाम्नातं तत एव ग्रहीतव्यम् । इतरत्सर्वं प्रकृतिप्राप्तमेवेति सिद्धम् ॥ ९ ॥

## विध्यपराधे प्रायश्चित्तिः ।

प्रायश्चित्तिरित्यधिकारोऽयमाऽध्यायपरिसमाप्तेः । विधिशब्देन विहितमुच्यते । अपराधोऽन्यथाभावः, अभावो वा । विहितस्याकरणेऽन्यथाकरणे च प्रायश्चित्तिः कर्तव्या । प्रायो विनाशः । चित्तिः संधानम् । विनष्टसंधानं प्रायश्चित्तिरित्युक्तं भवति । विध्यपराधे प्रायश्चित्तिरिति वचनादपराधे सति तदर्थतया विहितमस्ति चेत्तदेव कर्तव्यम् । तन्नास्ति चेद्व्याहृतिहोमः कर्तव्यः । 'तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या' इतिवचनात् । विध्यपराध इति वचनाद्विधिसंपादने प्रायश्चित्तिर्नास्ति । यथा यदि वाऽस्याग्निहोत्र उपसन्न इत्यादावन्तरागमननिषेधावसरे यजमानस्यान्तरागमनं विहितं तस्मिन्गमन इत्यर्थः । कालश्च प्रायश्चित्तानां नैमित्तिकत्वान्निमित्तानन्तरं कर्तव्यानीत्युत्सर्गः ।

## शिष्टाभावे प्रतिनिधिः ।

शिष्टं विहितमित्यर्थः । तस्याभावे प्रतिनिधिरुपादातव्यः । अभाव इत्येतावतैव सिद्धे शिष्टग्रहणं यत्कार्यार्थतया * यच्छिष्टं तस्य +स्वरूपसत्तायामपि तत्कार्याशक्तौ प्रतिनिधिरुपादातव्य एवेत्येवमर्थम् । अर्थद्रव्ययोर्विरोधेऽर्थो× बलीयानित्ययमपि न्यायोऽर्थादत्र व्युत्पादितो भवति । इदं चापरम् । कार्यसामर्थ्ये सति न गुणसंपादनार्थमुपादातव्य इति व्यतिरेकाल्लभ्यते । अत्रापि न्यायान्तरं व्युत्पादितं भवति, ÷ द्रव्यगुणविरोधे द्रव्यं बलीय इति । प्रतिनिधीयत इति प्रतिनिधिः । एतदुक्तं भवति—यत्कार्यार्थतया यद्विहितं तस्य तत्कार्याशक्तौ तस्य यत्प्रतिरूपं तत्तत्कार्यकरणायोपादातव्यमिति । अनेन प्रकारेण सदृशप्रतिनिधिरुक्तो भवति । न्यायादेवायमर्थो लभ्यते । शिष्टाभावे प्रतिनिधिरिति वचनस्येदं प्रयोजनं प्रतिनिधिप्रयोगेऽपि विहितस्वरूपापचाराद्विध्यपराधशङ्कानिवृत्त्यर्थम् । अतस्तत्र प्रायश्चित्तिर्न कर्तव्या । विधिशक्तिरेव तत्रैवंरूपा विपरिणमते नात्र विध्यपराधोऽस्तीत्येवमर्थं सूत्रप्रणयनम् ।

---

* क. उपदिष्टम् । + क. प्रत्यक्षतया विद्यमानत्वेऽपि । × घ. सुवग्रहणसमर्थोऽर्थः । ÷ घ. दधि ।

---

१ ग. ङ. झ. °त्यादावन्त° । २ ख. ग. ङ. झ. °व्य इत्ये° ।

**अन्वाहिताग्नेः प्रयाणोपपत्तौ पृथगग्नीन्नयेयुः ।**

अन्वाहिता अग्नयो यस्य सोऽयमन्वाहिताग्निः । इष्टिमध्ये इत्यर्थः । तस्य प्रयाणोपपत्तावग्नीन्पृथङ्नयेयुः प्रत्यक्षं च । पृथग्ग्रहणमसंसर्गार्थम् । उपपत्तिवचनमनात्माधीनगमनसूचनार्थम् । चोरव्याघ्रा*दिभयात्क्षणमप्यत्र वस्तुमशक्यमिति यदि गमनमापद्येत तदेष्टिमध्येऽप्यनेन प्रकारेणाग्नीन्गृहीत्वा गन्तव्यम् । अन्यथा कर्ममध्ये न गन्तव्यमित्येवमर्थमुपपत्तिवचनम् ।

**तुभ्यं ता अङ्गिरस्तमेति वाऽऽज्याहुतिं हुत्वा समारोपयेत् ।**

एतामाहुतिं हुत्वा समारोप्य गन्तव्यमित्यर्थः । प्रत्यक्षनयन आहुतिहोमो नास्ति ।

समारोपणस्वरूपमाह—

**अयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत् ।**

पूर्वे एव द्वे[3] अरणी गार्हपत्ये प्रतितपेन्नाग्न्यन्तरे । यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरे तेनैव मन्त्रेण समारोपणं भवति ।

**पाणी वा या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छावसूनि कृण्वन्नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति ।**

द्वौ पाणी गार्हपत्ये सकृदेव प्रतितपेत् । द्वयोरपि समारोपणं यजमान एव कुर्यात् । पूर्वमन्त्रस्य प्रत्यगाशीष्ट्वात्, उत्तरस्य चाऽऽत्मानमिति लिङ्गात्, कर्त्रन्तरविधानाभावाच्च ।

**एवमनन्वाहिताग्निरहुत्वा ।**

समारोप्य गमनप्राप्तौ गच्छेदितिशेषः[4] । अतोऽनन्वाहिताग्नेः प्रत्यक्षनयनं नास्ति । प्रयाणकाले विहारदेशेऽपि यत्र क्वापि संचारयितव्येऽनुच्छ्वसता संचारयितव्यः । अविहृतस्य गार्हपत्यस्यैष नियमो विहृतानामपि सर्वेषां युगपन्नयनेऽपि भवति नैकैकस्य नयने । अनसा नयने क्वचिदप्यनुच्छ्वासनियमो नास्ति । अनेनैव प्रकारेणाग्नीन्सर्वदा नयेत् । अन्यथानयनेऽग्नीनां लौकिकत्वाशङ्का स्यात् ।

**यदि पाण्योररणी संस्पृश्य मन्थयेत्प्रत्यवरोह जात-**

---

* घ. आदिपदेन राज्यकान्त्यादि । अन्यत्र दर्शनात् ।

---

१ ख. ग. ङ. झ. °ध्यगत इ° । २ ख. ग. यदा । ३ ख. ग. ङ. झ. °रेऽनेनै° । ४ ख. ग. दित्यर्थः । अ° ।

**वेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शंयोरिति ।**

अरण्योर्हस्तयोर्वा समारोपणमुक्तम् । तत्रावरोहणकाले यजमानः 'प्रत्यवरोह जातवेदः' इत्येतं मन्त्रमुक्त्वा मन्त्रान्ते तयोररण्योरग्निं मन्थयेत्, स्वयं वा मन्थेत् । एवमरणीसमारोपणे । यदि हस्तयोः समारोपणं स्यात्तदैतेन मन्त्रेणारणी संस्पृश्य मन्थयेत्[१] । यजमानो मन्थनकाले यावदग्नेर्जन्म तावदरणी संस्पृशन्नेवाऽऽस्ते । मथ्यमानेऽग्नौ यद्युत्पादनसमर्थः प्रयत्नो निष्फलः स्यात्तदा पुनरारम्भावसरे मन्त्र आवर्तयितव्यः । एवं व्यर्थे व्यर्थे पुनः पुनरावर्तयेत् । अग्न्यवरोहणार्थमरणी मन्थयेदित्येकोऽर्थः । यदि पाण्योः समारोपणं तदैवं[२]मवरोहयेत् । 'पाणिभ्यामरणी ' अनेन मन्त्रेण संस्पृश्य मन्थयेदित्यपरोऽर्थः ।

**आहवनीयमवदीप्यमानमर्वाक्शम्यापरासा- दिदं त एकं पर ऊत एकमिति संवपेत् ।**

आहवनीयस्यैकदेशः समस्तो वा यद्यायतनादुत्सृप्यार्वाक्शम्यापरासाद्वेदेर्बहिर्गच्छेत्तदा तम् ' इदं त एकम् ' इत्यायतने संवपेत् । ततः समस्ताभिर्व्याहृतिभिर्होमः कर्तव्यः । अग्नीनां सर्ववेदसंबन्धित्वात्[३] । सर्वत्र विनष्टसंधानं द्विविधम् । आयातनादपगतस्य[४] पुनः प्रक्षेपात्सेन्द्रियं संधानं तत्रैव व्याहृतिभिर्होमादतीन्द्रियम्[५] । अतो यत्र यागो[६] होमो जपो दानं दक्षिणारूपं[७] ब्राह्मणभोजनं चास्ति तत्र तैरेवातीन्द्रियसंधानांशः सिध्यति । यत्र त्वेषामन्यतमं[८] नास्ति तत्र व्याहृतिहोमेनातीन्द्रियांशसंधानं कर्तव्यम् । आहवनीयग्रहणादन्यन्तरे नैतत्प्रायश्चित्तम् । तत्र तूष्णीं प्रक्षिप्य व्याहृतिहोमः कर्तव्यः । तस्य च विध्यपराधत्वात् । दीप्यमानवचनं यावत्प्रायश्चित्तकालं जीवत एवैतत्प्रायश्चित्तं भवति न विस्फुलिङ्गमात्रस्येत्येवमर्थम् ।

**यदि त्वतीयाद्यमावास्यां पौर्णमासीं वाऽऽतीयाद्यदि वाऽन्यस्याऽग्निषु यजेत यदि वाऽस्यान्योऽग्निषु यजेत यदि वाऽस्यान्योऽग्निरग्नीन्व्यवेयाद्यदि वाऽस्याग्निहोत्र उपसन्ने हविषि वा निरुप्ते चक्रीवच्छ्वा पुरुषो वा विहारमन्तरियाद्यदि वाऽध्वे प्रमीयेतेष्टिः ।**

उक्तं शम्यापरासदेशमनतिक्रान्तस्य । अतिक्रान्तस्येदमुच्यते । यदि त्वतीयाच्छम्यापरासदेशमित्यर्थः । यद्यमावास्यां पौर्णमासीं वा स्वकालेऽकृत्वाऽतीयात् । अन्यस्याग्निषु

---

१ क. मन्थयेत् । २ ख. ग. °वमेवाव° । ३ ख. ग. °त् । तत्र । ४ घ. °नात्पराग° इति पाठान्तरम् । ५ ख. ग. ङ. झ. °माद्यती° । ६ ख. ग. यागे । ७ क. ख. ग. ङ. च. झ. °पं चा° । ८ ख. ग. झ. तमो ना° ।

यागं कुर्यात् । अस्याग्निष्वन्यो वा यजेत । अस्याग्नीनन्यो वाऽग्निर्व्यवेयात् । यद्यग्निहोत्रद्रव्ये कुशेषूपसादिते दर्शपूर्णमासादिषु वा हविषि निरुप्ते चक्रीवद्रथशकटादि श्वा पुरुषो मनुष्यजातिः सर्वाऽग्नीनां मध्ये नातिक्रामेत् । यदि वा यजमानोऽध्वनि प्रमीयेत, यस्मिन्ग्रामेऽग्नय आसते तस्माद्ग्रामाद्ग्रामान्तरे प्रम्रियेतेत्यर्थः । एतेषु निमित्तेष्विष्टिं कुर्यात् ।

**अग्निः पथिकृत् ।**

तस्यामियं देवता । अग्निः पथिकृद्गुणकः ।

**वेत्था हि वेधो अध्वन आ देवानामपि**
**पन्थामगन्मेति । अनड्वान्दक्षिणा ।**

शकटवहनसमर्थो बलीवर्दोऽनड्वान्दक्षिणा ।

**व्यवाये त्वनाग्निना प्रागिष्टेर्गामन्तरेणातिक्रमयेत् ।**

अग्निचक्रीवच्छ्वपुरुषैर्व्यवाय इष्टिरुक्ता । तत्राग्निवर्जितैरन्यैर्व्यवाये गवातिक्रमणं भस्मराज्युदकराजिभ्यां संतानमनुगमयित्वा प्रणयनमुपस्थानमिति विशेषः । श्वव्यवाये त्वयमप्यपरो विशेषः 'भस्मना शुनः पदं प्रतिवपेत्' इति एते पदार्था निमित्तानन्तरमेव कर्तव्याः । ततो वर्तमानं कर्म समाप्येष्टिः कर्तव्या । दर्विहोममध्य एष विधिः, इष्टिमध्ये तु तदेव तन्त्रमुपजीव्य तत्रैव पाथिकृती कर्तव्या । प्रागिष्टेरिति वचनं पूर्वोक्ताया अपीष्टेः प्रागेवैते पदार्थाः कार्या इत्येवमर्थम् ।

**भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्विचक्रम इति ।**

शुनो यानि पदानि तानि भस्मना प्रतिवपेत्पूरयेदित्यर्थः । प्रतिपदं मन्त्रावृत्तिः ।

**गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या**
**च संतनुयात्तन्तुं तन्वन्नजसो भानुमन्विहीति ।**

प्रतिराजि मन्त्रावृत्तिः ।

**अनुगमयित्वा चाऽऽहवनीयं पुनः प्रणीयोपतिष्ठेत । यदग्ने पूर्वं प्रहितं पदं हिते सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनुसंभवैतां सं नः सृज सुमत्या वाजवत्या । त्वमग्ने सप्रथा असीति च ।**

राजिभ्यां संतानं[1] कृत्वाऽऽहवनीयमनुगमयेत् । ततः प्रणीयोपतिष्ठेत 'यदग्ने पूर्वं' 'त्वमग्ने सप्रथा असि' इति च द्वाभ्याम् । चशब्दः पूर्वान्त इतिकाराभावात् 'त्वमग्ने सप्रथा असि' इत्यस्य पूर्वमन्त्रशेषाशङ्कानिवृत्त्यर्थः । इष्टेरपि स एव विहारः । प्रायश्चित्त

---

१ क. °भ्यां सांतनं ।

उत्पन्ने पूर्वप्रवृत्ता अग्नयो नापवृज्यन्त इत्यस्यार्थस्य साधनार्थमुत्तरत्र वक्ष्यति—' अनुगमयित्वा चाऽऽहवनीयं पुनः प्रणयेत् ' इति ।

**अध्वे प्रमीतस्याभिवान्यवत्साया: पयसाऽग्निहोत्रं तूष्णीं सर्वहुतं जुहुयुरासमवायात् ।**

पथिकृतं कृत्वा तस्मिन्नेव विहारे तूष्णींधर्मकमग्निहोत्रं नाम कर्मान्तरमनेन विधीयते । तत्सर्वमग्निहोत्रवत्कर्तव्यम् । सर्वहुतत्वं तु विशेषः । अतो नात्र भक्षोऽस्ति । कालश्च सायं प्रातरेव । साङ्गं प्रधानम् । तूष्णीं प्रधाने प्रजापतिध्यानं कर्तव्यम् । अभिवान्यवत्सा नामान्यवत्सेन दोहनीया । अभिवान्यो वत्सो यस्याः साऽभिवान्यवत्सा । अभिवान्योऽभियाचनीय[1] इत्यर्थः । आसमवायादिति । आ शरीरस्याग्निसंबन्धादित्यर्थः ।

**यद्याहिताग्निरपरपक्षे प्रमीयेताऽऽहुतिभिरेनं पूर्वपक्षं हरेयुः ।**

यद्याहिताग्नेरपरपक्षे मरणाशङ्का स्यात्तदा तस्य पक्षस्यावशिष्टा आहुतीः पक्षहोमन्यायेन[3] हुत्वाऽमावास्यां च कृत्वा कर्मभिरेवमेनं पूर्वपक्षं नयेयुः । आहिताग्निग्रहणमन्या अप्यनाहिताग्नेरपरपक्षाश्रिता या नित्याहुतयस्ताः सर्वा होतव्या इत्येवमर्थम् । एष पूर्वाधिकृतानां कालापकर्षो विधीयते । तेन जीवत एव मरणशङ्कायामेतदिति गम्यते । मृतस्यानधिकारात् । अत एव पूर्वसूत्रेऽग्निहोत्रनामकं कर्मान्तरमित्युक्तम् ।

**हविषां व्यापत्तावोह्ळासु देवतास्वाज्येनेष्टिं समाप्य पुनरिज्या ।**

आवाहानादूर्ध्वं प्रधानयागादर्वाग्यदि हविर्व्यापद्येत तस्य प्रधानयागादि सर्वमाज्येन समापयेत् । अव्यापन्नानि च यथापूर्वं समापयेत् । एवं समाप्य ततो व्यापन्नहविर्मात्रस्यैवाग्न्यन्वाधानादिः पुनर्यागः कर्तव्यः । एवं द्वयोर्बहूनां व्यापत्तौ कर्तव्यम् । हविषामिति बहुवचनमविवक्षितम् । ब्राह्मणे च सर्वशब्दोऽस्य प्रायश्चित्तस्य सर्वहविष्षु प्रापणार्थः । नैकस्मिन्द्वयोर्वा प्रतिषेधार्थः । इष्टिग्रहणं प्रधानयागे कृते शेषकार्ये चाकृते हविषि व्यापन्न आज्येन समापनं कुर्यादित्येवमर्थम् । तत्र पुनर्यागो न भवति ।

**व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैः ।**

अन्यैर्वा बीभत्सैरितिवचनात्केशादिभिरपि बीभत्सैरेवेति गम्यते । तेनाच्युतकेशनखसंसर्गो न दोषाय भवति । तथा कीटपतङ्गैरेवाप्यमेध्यनिवासिभिः[4] संसर्गः । अन्यैर्वा बीभत्सैरित्यनेन च वमनादीन्युच्यन्ते । एतैः संसर्गे हवींषि व्यापन्नानीत्यर्थः । बीभत्सैरित्येतावतैवास्मिन्नर्थे सिद्धे केशादीनां पृथग्ग्रहणं केशादिसंसर्गे स्मृत्युक्तः शुद्ध्युपायो यः स हविषि न भवतीत्येवमर्थम् ।

---

१ ब. च. °भिजननीय । २ ख. ग. ङ. छ. ज झ. °क्षे म्रिये° । ३ ङ. झ. °रेनं ।
४ ख. ग. ङ. झ. °ङ्गैरप्य° ।

**भिन्नसिक्तानि च ।**

भिन्नानि च सिक्तानि च हवींषि दुष्टानि भवन्ति । कठिनेषु भेदनं द्रवेषु क्षरणमिति ।

**अपोऽभ्यवहरेयुः ।**

दुष्टानि हवींष्यप्सु प्रक्षिपेदित्यर्थः । एषैतेषां प्रतिपत्तिः ।

**प्रजापते न त्वदेतान्यन्य इति च वल्मीकवपायां वा सांनाय्यं मध्यमेन पलाशपर्णेन जुहुयात् ।**

सांनाय्यं दुष्टं मध्यमेन पलाशपर्णेन 'प्रजापते न त्वद्' इत्यृचा स्वाहाकारान्तया वल्मीकद्वारे प्रतिषिञ्चेत् । अप्सु वा तूष्णीमिति विकल्पः । मध्यमग्रहणं द्विपर्णस्य मा भूदित्येवमर्थम् ।

**विष्यन्दमानं मही द्यौः पृथिवी च न इत्यन्तः परिधिदेशे निवपेयुः ।**

द्विविधं विष्यन्दनं सिक्तमसिक्तं च । सिक्तं दुष्टं भवति । अन्यददुष्टम् । यद्विष्यन्दमानं कुम्भीमतीत्याग्निं पृथिवीं वा प्राप्नुयात्तत्सिक्तं भवति दुष्टं च तदेव । यत्कुम्भ्यां बहिर्गमनमात्रेण विष्यन्दते तदसिक्तमदुष्टं च । यद्विष्यन्दनेन दुष्टं तदेवं प्रतिपादयेत् । 'मही द्यौः' इत्यनयर्चाऽन्तःपरिधिदेशे निषिञ्चेत् । देशग्रहणं परिध्यभावेऽपि तस्मिन्देशे निनयनार्थम् ।

**अन्यतरादोषे व्यासिच्य प्रचरेयुः ।**

अदुष्टे प्रातर्दोह एतद्भवति । तत्प्रातर्दोहं व्यासिच्य द्वयोः पात्रयोः कृत्वा तयोरन्यतरद्दधिभावायाऽऽतच्य ताभ्यां दधिपयोभ्यां प्रचरेयुरित्यर्थः । अतएवादुष्टे प्रातर्दोह इत्युक्तम् ।

**पुरोळाशं वा तत्स्थाने ।**

पयसि दुष्ट एतदेव भवति पूर्वोक्तस्यासंभवात् । तेन व्यवस्थितविभाषेयम् ।

**उभयदोष ऐन्द्राग्नं पञ्चशरावमोदनम् ।**

सांनाय्यद्वये दुष्टे पञ्चशरावपरिमितान्व्रीहीन्निर्वपेदिन्द्राग्निदेवत्यौदनसिद्ध्यर्थम् ।

**तयोः पृथक्प्रचर्या ।**

तयोरिन्द्राग्न्योर्हविरुत्पत्तौ सहोद्दिष्टयोरपि प्रचारकाले तस्मादेव हविषस्तयोः पृथगेव यागः कर्तव्य इत्यर्थः । तत्र 'अग्निं देवतानां प्रथमं यजेत्' इतिश्रुतेरग्निमिष्ट्वेन्द्रं यजेत् ।

**ऐन्द्रमेवेत्येके ।**

एके ऐन्द्रमेव पञ्चशरावमोदनमुत्पाद्य प्रचार इन्द्राग्न्योः पृथक्पृथक्प्रचारमाहुः । अत्राप्यग्निरेव प्रथममेष्टव्यः । अस्य पक्षस्येयं श्रुतिर्मूलम्—'यस्योभयꣳ हविरार्तिमार्च्छति । ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् । अग्निं देवतानां प्रथमं यजेत्' इति । अस्यां श्रुतावग्नियागस्यानुवादत्वेनापि संभवादैन्द्रमेव निरुप्[2]येन्द्रायैव यष्टव्यमिति केचित्सूत्रार्थं वर्णयन्ति ।

**वत्सानां धाने वायवे यवागूम् ।**

सांनाय्यार्थमपाकृतानां वत्सानां पाने वायुदेवत्यां यवागूं निरु[3]प्य तया यष्टव्यमित्यर्थः । सर्वपान एतत्प्रायश्चित्तम् । पीतशिष्टमेव हविषः पर्याप्तं चेद्व्याहृतिहोम एव न यवागूः । यवाग्वा यागं कृत्वा पुनर्यागः कर्तव्यः ।

**अग्निहोत्रमधिश्रितं स्रवदभिमन्त्रयेत गर्भं स्रवन्तमगदमकर्माग्निर्होता पृथिव्यन्तरिक्षम् । यतश्च्युतदग्नावेव तन्नाऽभिप्राप्नोति निर्ऋतिं परस्तादिति ॥ १० ॥**

अधिश्रितमग्निहोत्रद्रव्यं स्थालीमूलेन यदि स्रवति तदनेनाभिमन्त्रयेत गर्भमिति ॥ १० ॥

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्तामभिमन्त्रयेत यस्माद्भीषा निषीदसि ततो नो अभयं कृधि । पशून्नः सर्वान्गोपाय नमो रुद्राय मीढ्लुष इति ।**

उपावसृष्टा दुह्यमानेत्युभयं विशेषणं वत्ससंसर्गाद्यादोहनपरिसमाप्[5]तेरेतस्य प्रापणार्थम् । यस्येति ब्राह्मणानुवादः ।

**अथैनामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ।**

अथेति संबन्धार्थं योऽभिमन्त्रयते स एवोत्था[6]नमपि कुर्यात्, यजमान एवोभयं कुर्याद्धोमकर्ता वेत्येवमर्थम् ।

**अथास्या ऊधसि च मुखे चोदपात्रमुपोद्गृह्य दुग्ध्वा ब्राह्मणं पाययेद्यस्या भोक्ष्यन्स्याद्यावज्जीवं संवत्सरं वा ।**

ऊधः स्तनप्रदेशः । अग्निहोत्र्या ऊधसि च मुखे च समीप उदपात्रमुद्गृह्य ततस्तां दुग्ध्वा तत्पयो ब्राह्मणं पाययेत् । यस्यान्नं यावज्जीवं न भोक्ष्यमाणो भवेत् । य एतत्पयः

---

१ ख. ग. ङ. झ. °र्थमं यष्ट° । २ ख. ग. झ. निरूप्ये° । ३ ख. ग. झ. निरूप्य । ४ च. पय आप्तं । ५ ख. ग. झ. °प्तेस्तस्य । ६ ख. ग. ङ. °त्थापन ।

पिबति तस्यान्नं यावज्जीवं नाश्नीयादित्यर्थः । संवत्सरं वा नाश्नीयात् । अत्र कालानाम्नानाद्यावज्जीवमित्युक्तवानाचार्यः । संवत्सरं व्रतं नात्येतीति सामान्यानुवादात्संवत्सरवचनम् । अथशब्दः पूर्ववत् ।

**वाश्यमानायै यवसं प्रयच्छेत्सूयवसाद्भगवती हि भूया इति ।**

एतदप्युपावसर्गादि दोहनपर्यन्तमेव । वाश्यमानायै शब्दयन्त्यै यवसो भक्षः ।

**शोणितं दुग्धं गार्हपत्ये संक्षाप्यान्येन जुहुयात् ।**

*संक्षाप्येतियावत्तन्निरवशेषं भवति तावद्दाहयित्वाऽन्येन द्रव्येण जुहुयात् । अत्रान्यवचनात्पूर्वत्र तामन्यां वा पुनर्दुग्ध्वा पयसैव जुहुयात् । तत्रैवं ब्राह्मणम्—'अथैनां ब्राह्मणाय दद्यात्' इति । तद्दानं पूर्वोक्तेन सूत्रोक्तेन पयसः पानेन विकल्प्यते । दानपक्षेऽन्यामेव दुग्ध्वा जुहुयात् ।

**भिन्नं सिक्तं वाऽभिमन्त्रयेत समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत । अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपताविति ।**

स्थालीभेदेन विक्षिप्तं द्रव्यं भिन्नमित्युच्यते । विक्षेपात्तद्दुष्टं भवति । सिक्तमिति । स्कन्नमुच्यते । स्कन्दने च यावत्स्कन्नं तावन्मात्रं दुष्टं भवति न पात्रगतं भिन्नसिक्तानि चेतिवचनात् । तद्भिन्नं सिक्तं च समुद्रमित्यनेनाभिमन्त्रयेत । ततोऽपोऽभ्यवहरेयुः । 'अपोऽभ्यवहरेयुः' इत्यस्य वचनस्य प्रकरणविशेषाभावाद्व्यापन्नहविर्मात्रमेवास्य विषय इति भेदन इदमेवास्मिन्प्रकरणे सर्वावस्थे पयस्यन्येषु द्रव्येषु च । स्कन्ने पुनः पयसि वक्ष्यमाणत्वादिदमभिमन्त्रणं द्रव्यान्तरेष्वेवेति स्थितम् ।

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत सा यत्तत्र स्कन्दयेत्तदभि जपेद्यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः । पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति ।**

दोहनावस्थायां पयसि स्कन्दने 'यदद्य' इत्यनेनाभिमृशन्स्कन्नमभिमन्त्रयेत 'समुद्रं वः' इत्यनेनास्य तुल्यकार्यत्वात् । अत एव 'समुद्रं वः' इत्यत्राप्यभिमर्शनं कर्तव्यम् । स्कन्नमभिमन्त्रयेत । दोहनावस्थायां स्कन्न एतद्भवतीत्येतावदत्र विवक्षितम् । इतरद्ब्राह्मणानुवादः । पयोलिङ्गत्वात्पयस्येवेदं भवति ।

---

* ङ. गार्हपत्ये पात्रमध्ये दुग्धं कृत्वा दाहयित्वा क्षामं निरवशेषम् ।

---

१ ख. ग. घ. °वद्दाह° । २ क. घ. च. °न प° । ३ घ. च. स्कन्दनं ता° । ४ ख. ग. ङ. झ. स्कन्दने पु° । ५ ख. ग. ङ. स्कन्ने य° । ६ ख. ग. °मृश्य स्क° । ७ झ. °भिमृशन्स्कन्न° । ८ ख. ग. एव भव° ।

**तत्र यत्परिशिष्टं स्यात्तेन जुहुयात् ।**

अर्थप्राप्तस्य विधानं शेषकार्यस्यापर्याप्तावपि तेनैव होमः कर्तव्यः । शेषकार्यस्य भक्षादेर्लोप एव स्यात् । अप्रयोजकत्वाद्द्रव्यस्येति ।

**अन्येन वाऽभ्यानीय ।**

जुहुयादिति शेषः । होमस्यापर्याप्ताविदं भवति ।

**एतद्दोहनाद्याप्राचीनहरणात् ।**

मर्यादायामयमाकारः । उत्तरत्र तत्रेतिवचनात् । दोहनवचनं पूर्वसूत्रे स्कन्दननिमित्त-विशेषस्याविवक्षितत्वसूचनार्थम् । आदिग्रहणमधिश्रितेऽपि पयसि स्कन्न एतदेव प्रायश्चित्तं न ब्राह्मणोक्तम् ' अधिश्रितं * स्कन्दति वा वि+ष्यन्दते वा ' इति । इदं तु द्रव्यान्त-रेषु भवति । विष्यन्दने तु पयस्यपीदमेव भवति विष्यन्दनेऽधिश्रितेऽन्यस्यानाम्नानात् । तत्र यत्परिशिष्टमित्यादि द्रव्यान्तरेष्वपि साधारणमन्यस्यानाम्नानात् । उन्नीयाऽऽहवनीयं प्रतिहरणं प्राचीनहरणमित्युच्यते ।

**प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनम् ।**

इदमपि पयस्येव पूर्वेण संबन्धित्वात् । तत्रेति । प्राचीनहरण इत्यर्थः ।

**शेषेण जुहुयात् ।**

अन्तरेणापि वचनं सर्वस्य वा प्रधानमात्रस्यैव वा पर्याप्ते शेषेणैव होमो युक्तः, उक्तत्वाद्द्रव्यस्य । वचनमिदानीं किमर्थम् । अयमभिप्रायः—अस्तिचेच्छेषः स च होमद्वयस्यापर्याप्तः, तथाऽपि शेषेणैव मात्राहीनेनापि जुहुयादिति वचनम् ।

**पुनरुन्नीयाशेषे ।**

स्रुग्गतस्याशेषे पुनरुन्नीय जुहुयात् । पुनरुन्नयनेऽयं विशेषः— प्राचीनहरणे यावति गते स्कन्नं भवति तावत्येवाध्वन्युपविश्य स्थालीमन्येन प्राचीं नीत्वा तत्रैवोपविष्ट उन्नयेत् । न स्वयं स्रुग्वा प्रत्यग्गच्छेत् ।

**आज्यमशेषे ।**

स्थाल्यामपि यदा नास्ति तदाऽऽज्यं गृहीत्वा तस्य यथासंभवं संस्कारं कृत्वोन्नीय तेन जुहुयात् ।

---

* घ॰ क्षरणम् । + किंचिच्चलनम् ।

---

क्स्याद्द्र॰ । २ ख. ग. ॰त्यगागच्छे॰ ।

**एतदाहोमात् ।**

द्वयोरपि होमयोः प्रधानत्वाद्धोमद्वयपर्यन्तमेतदेव प्रायश्चित्तं *भवति ।

**वारुणीं जपित्वा वारुण्या जुहुयात् ।**

विशेषाभावाद्ये केचन वारुण्यौ भवतः । पूर्वहोमे प्राकृतस्य मन्त्रस्यापवादो वारुणी ।

**अनशनमाऽन्यस्माद्धोमकालात् ।**

यजमानस्येदं न होमकर्तुः । वारुणीजपो वारुणीहोमोऽनशनमित्येतत्त्रयं शेषेण जुहुयादित्यत्र + मात्रापचारहोमे पुनरुन्नीयहोम आज्यहोमे च भवति ।

**पुनर्होमं च गाणगारिः ।**

एतेष्वेव त्रिषु पक्षेषु गाणगारिः पुनर्होमं चेच्छति । आचार्यग्रहणं विकल्पार्थम् । पुनर्होमे पूर्वं समाप्य पुनर्विहरणादि सर्वं क्रियते निमित्त प्रयोगावृत्तिविधानात् ।

**अग्निहोत्रं शरशरायत्समोषामुमिति द्वेष्टारमुदाहरेत् ।**

अधिश्रितमग्निहोत्रद्रव्यं यदि [1]शब्दयेत्तदा तद्द्रव्यं समोषामुमित्यभिमन्त्रयेत । अमुमित्यस्य स्थाने यजमानद्वेष्टुर्नाम निर्दिशेत् । अधिश्रितविशेषणं तत्रैवास्य संभवाच्छास्त्रान्तरदर्शनाच्च ।

**विष्यन्दमानं मही द्यौः पृथिवी च न**
**इत्याहवनीयस्य भस्मान्ते निनयेत् ।**

उद्वासिते विष्यान्दित एतद्भवति । अधिश्रिते तु ब्राह्मणोक्तमेव ।

**सांनाय्यवद्वल्मीकवत्से ।**

'[2]प्रजापते' इत्यनया मध्यमेन पलाशपर्णेन वल्मीके जुहुयादित्यर्थः ।

**अभिवृष्टे मित्रो जनान्यातयति ब्रुवाण इति सामदाधानम् ।**

अधिकेयं समित्, उत्तराहुत्यर्थस्याप्यभिवर्षण[3]संभवात् । अतः पूर्वाहुत्याः प्रागप्यस्मिन्निमित्ते सति निमित्तानन्तरं समिदन्तरमाधेयमेव ।

**यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने ॥ ११ ॥**

समिदाधानमिति शेषः ॥ ११ ॥

---

* ख. ग. घ. झ. पुस्तकेषु भवतीत्यस्याग्रेऽयं ग्रन्थः—स्रुवपूर्णस्कन्दने पादोनस्रुवपूर्णस्कन्दने च प्रायश्चित्तम् । ततो न्यूनस्कन्दने न प्रायश्चित्तम् । दर्शपूर्णमासादिषु च विष्णुस्मरणमात्रम् । वा° । + घ.—अर्धस्रुवपूर्णे न भवति ततोऽधिके भवति ।

---

१ क. घ. शब्दायेत्त° । २ ख. ग. °पतये 'इ° । ३ घ. °र्षणासं° ।

**प्रदोषान्तो होमकालः ।**

प्रदोषो नाम रात्रेः पूर्वश्चतुर्थो भागः । प्रदोषस्यान्तः प्रदोषान्तः । प्रदोषान्तोऽन्तो यस्य सः प्रदोषान्तः । प्रदोषान्तान्त इत्यर्थः । स सायं होमस्य कालः । केषांचित्पञ्चमीषष्ठ्यौ नाडिके प्रदोषशब्देनोच्येते तदन्तो वाऽयं होमकालः ।

**संगवान्तः प्रातः ।**

यस्मिन्काले गावो वत्सैः सहाऽऽसते स संगवः कालः । तावत्पर्यन्तं प्रातर्होमकालः । केचिदह्नस्तृतीयो भागः संगव इत्याहुः । तदन्तः संगवान्तो दश नाडिका इत्यर्थः । अस्तमित उदिते च विहिते होम एतावति काले क्रियमाणेऽतीतकालो न भवतीति पुनः कालविधिः ।

***तमतिनीय चतुर्गृहीतमाज्यं जुहुयात् ।**

कस्मिन्काले केन मन्त्रेणेत्यत आह—

**यदि सायं दोषा वस्तर्नमः स्वाहेति यदि प्रातः प्रातर्वस्तर्नमः स्वाहेति । अग्निहोत्रमुपसाद्य भूर्भुवः स्वरिति जपित्वा वरं दत्त्वा जुहुयात् ।**

उपसादनवचनं क्रमार्थम् । उपसाद्य जपं च वरदानं च कृत्वा समिदाधानादि पूर्ववत् । +वरदानं याजमानम् । वाशब्देन गोजातिरुच्यते । तं वरं दत्त्वा जुहुयादिति । पूर्वकालतामात्रं विवक्षितं नाव्यवधानं कर्त्रैक्यं च ।

**इष्टिश्च वारुणी ।**

कर्तव्येत्यर्थः । समाप्तेऽग्निहोत्रहोमे तेष्वेवाग्निष्वियमिष्टिः कार्या, उत्तरत्रानुगमनविधानात् ।

**हुत्वा प्रातर्वरदानम् ।**

प्रातःकालातिपत्तौ विशेषो वक्ष्यते । होमोत्तरकालं वृष्ट्यन्ते वरदानं कर्तव्यम् ।

---

* घ. यद्यपीदं प्रायश्चित्तप्रकरणे पठितं तथाऽप्यध्वर्युसंज्ञकर्ममध्य एव यात्श्रोदनास्तत्राध्वर्युरेव कुर्यात् । प्रायश्चित्तमुभयसंज्ञकर्तृकम् । जुहुयादिति चोदनया ब्रह्मकर्तृकत्वं प्राप्तम् । अध्वर्युसंज्ञककर्मण्यध्वर्युरेव कर्ता । अन्यत्र ब्रह्मा कर्ता । अत एवेष्टिकर्मणि कर्ताऽध्वर्युरेव । + घ. अन्यवरदानस्यासंभवाद्यजमानस्य ।

---

१ घ. ङ. °षान्तान्तो । २ ख. ग. झ. °षान्तान्त इ° । ३ ख. ग. झ. वा सायं । ४ ° न्तो हो° । ५ ख. झ. ङ. च. झ. माणोऽती° । ६ घ. कालमिष्ट्य° ।

**अनुगमयित्वा चाऽऽहवनीयं पुनः प्रणयेदिहैव क्षेम्य एधि मा प्रहासीरमुं माऽमुं माऽऽमुष्यायणमिति ।**

समाप्तेऽग्निहोत्रहोम आहवनीयस्यानुगमनं कृत्वा पुनस्तमेवोद्धरेत् । 'इहैव क्षेम्य एधि' इति मन्त्रेण । मा प्रहासीरमुं[1] माऽऽमुष्यायणमिति पाठः कर्तव्यः । अमुमित्यस्य स्थाने यजमाननाम द्वितीयया निर्दिशेत् । आमुष्यायणशब्दस्य स्थाने गोत्रनाम, मा प्रहासीर्देवदत्तं मा भारद्वाजमिति । पित्रादौ जीवति भारद्वाजायनमिति वदेत् । दक्षिणाग्निश्चाऽऽग्निहौत्रिक एव । आहवनीयस्यैवानुगमनविधानात् । इदमनुगमनं कस्याऽऽहवनीयस्येति न विद्मः । आग्निहौत्रिकस्येति[2] चेत् । न । समाप्तेऽग्निहोत्रे तस्य लौककत्वादनाहवनीयत्वम् । होमे कृतेऽसमाप्ते च प्रयोगेऽनुगमनमिति चेत् । तथा सति पुनः प्रणयनमदृष्टार्थं स्यात् । अत्रायमभिप्रायः[3]—इष्ट्यर्थं विहृतस्येति, तदा पुनः प्रणयेत्तत इष्टिरिति समन्वयो नोपपद्यते । अत्रायमभिप्रायः[4]—समाप्तेऽग्निहोत्रे लौकिकस्य सतोऽनुगमनमेव कर्तव्यं नाऽऽयतनाद्बहिस्त्याग इति, तदाऽऽहवनीयमिति शब्दो नोपपद्यते । अत एवंवदतः सूत्रकारस्यायमभिप्राय इति वर्णनीयम् । यस्य कस्यचित्कर्मणोऽर्थाय विहृतेष्वग्निषु यत्किंचिदग्निसाध्यं नैमित्तिकमुत्पद्यते तस्य नैमित्तिकसहितस्य त एवाग्नयो भवेयुः । न पुनः पुनर्विहर्तव्या इति ।

**तत इष्टिर्मित्रः सूर्यः ।**

एते देवते ।

**अभि यो महिना दिवं प्र स मित्रवर्तो अस्तु प्रयस्वानिति संस्थितायां पत्न्या सह वाग्यतोऽग्नीञ्ज्वलतोऽहरनश्नन्नुपासीत ।**

समाप्तायामिष्टौ पत्नीयजमानौ यतवाचौ भूत्वा तानेवाग्नीञ्ज्वलयन्तावनश्नन्तावहःशेषमुपासीयाताम् । उपासीत पत्न्या सहैवं कुर्वन्नग्नीनां समीप आसीतेत्यर्थः ।

**द्वयोर्दुग्धेन वासेऽग्निहोत्रं जुहुयात् ।**

वासो रात्रेः पूर्वश्चतुर्थो भागः । द्वयोर्गवोर्दुग्धेन पयसा सायमग्निहोत्रं स्वकाले जुहुयादित्यर्थः ।

**अधिश्रितेऽन्यस्मिन्द्वितीयमवनयेत् ।**

अयमत्र विशेषः—एकस्या गोर्दुग्धं पयोऽधिश्रित्य तस्मिन्नेव पयसि द्वितीयं गोर्दुग्धमवनयेत् । तेन पयसा होमः, ततोऽन्योरपवर्गः ।

---

१ घ. ङ. च. झ. °मुं मामुष्या° । २ घ. च. °त्रिकं चे° । ३ क. ख. ग. ङ. झ. अथाय° । ४ ख. ङ. झ. अथाय° ।

प्रातरिष्टिः ।

ततः श्वोभूते पूर्वाह्ण इष्टिः कार्या । इयमपि प्रातःकालातिपत्तिनिमित्तैव । प्रातरितिकालविधानात्प्रयोगभेदः । ततो विहरणभेदोऽपराग्न्योरपि भवति ।

अग्निर्व्रतभृत् ।

व्रतभृद्गुणकोऽग्निर्देवता ।

**त्वमग्ने व्रतभृच्छुचिरग्ने देवाꣳ इहावह । उप यज्ञं हविश्च नः । व्रतानि बिभ्रद्व्रतपा अदब्धो यजानो देवां अजरः सुवीरः । दधद्रत्नानि सुमृळीको अग्ने गोपाय नो जीवसे जातवेद इति ।**

एतत्प्रायश्चित्तं स्वकाल एव प्रणीतेष्वग्निषु होमकालातिपत्तौ भवति । अप्रणीतेषूक्तकालातिपत्तावत्यन्तापद्यनुद्धृतप्रायश्चित्तं कृत्वा होमं कुर्यात् । अनापदि मनस्वतीहोमेनानुद्धृतप्रायश्चित्तेन च सहितो होमः कार्यः । विहृतेष्वेवाग्निष्वहुतेषु होमान्तरकालप्राप्तावुपक्रान्तमेव होमं कालातिपत्तिप्रायश्चित्तसहितं कृत्वा वर्तमानकालीनमनुद्धृतप्रायश्चित्तसहितं कुर्यात् । अविहृतेषु कालान्तरप्राप्तौ मनस्वतीहोमं कृत्वाऽतिपन्नस्य प्रतिहोमं च कृत्वाऽनुद्धृतप्रायश्चित्तादि पूर्ववत् । एवमनेककालातिपत्तावपि द्रष्टव्यम् । विहृतेष्वविहृतेषु वाऽनेककालातिपत्तौ मनस्वतीहोमं प्रतिहोमं चावश्यं कुर्यात् । विहृतेषु तेष्वेवाग्निषु । अविहृतेषु त्वग्नीन्विहृत्य मनस्वत्यादि कृत्वा प्राप्तकालस्य विहरणादि क्रियेत । एवमत्र विचार्य यद्युक्तं तत्कर्तव्यम् । विचारस्याऽऽस्पदमात्रमत्र लिखितमिति मन्तव्यम् ।

एषैवाऽऽर्त्याऽश्रुपाते ।

आर्त्याऽश्रुपाते दुःखेनाश्रुपाते न धूमादिनेत्यर्थः । एतद्दर्शपूर्णमासयोस्तत्प्रकृतिषु च भवति । ब्राह्मणे ' उपवसथेऽश्रु कुर्वीत' इतिदर्शनात् ।

यद्याहवनीयमप्रणीतमभ्यस्तमियाद्बहुविद्ब्राह्मणोऽग्निं प्रणयेद्दर्भैर्हिरण्येऽग्रतो ह्रियमाणे ।

अग्निहोत्रार्थं विधिनाऽनुद्धृतमाहवनीयं यद्यस्तमियात्तदा तदानीमेवाऽऽनेतुं शक्येषु ब्राह्मणेषु यो बहु वेत्ति तमानीयते नोद्धरणादि निधानान्तमाहवनीयस्य कारयेत् । अग्नेः प्रणीयमानस्याग्रतो हिरण्यं दर्भैरेव नयेत् । ब्राह्मणग्रहणं बहुविद्यत्वेऽपि जात्यन्तरनिवृत्त्यर्थम् ।

अभ्युदिते चतुर्गृहीतमाज्यं रजतं च हिरण्यवदग्रतो हरेयुः ।

अनुद्धृतमभ्युदिते सति बहुविदग्निं प्रणयेत् । तस्याग्रतश्चतुर्गृहीतमाज्यं नेतव्यं रजतं च । यदि हिरण्यवद्वचनेन रजतस्याग्रतो हरणं प्राप्येत तदा दर्भैर्हरणमपि प्राप्नुयात्,

---

१ऽनु° । घ. होममतिपन्नहो° । २ ङ. °षु चाने° ।

आज्यस्याग्रतो हरणं च न प्राप्नुयात् । अतो दर्भनिवृत्त्यर्थमाज्यस्य प्रापणार्थं चाग्रत इति वचनम् । एवं चेद्धिरण्यवद्वचनं पूर्वोक्तस्य बहुविद्ब्राह्मणाग्न्युद्धरणस्य प्रापणार्थम् ।

**अथैतदाज्यं जुहुयात्पुरस्तात्प्रत्यङ्मुख उपविश्योषाः केतुना जुषतां स्वाहेति ।**

हिरण्यरजतयोरग्रतो हरणमेव कार्यम् । आज्यस्य कार्यान्तरमुच्यते । निहितेऽग्नावाहवनीयस्य पुरस्तात्प्रत्यङ्मुख उपविश्य 'उषाः केतुना' इति तदाज्यं जुहुयात् ।

**कालात्ययेन शेषः * ।**

उभयोः कालयोरनुद्धृतप्रायश्चित्तशेषः कालात्ययप्रायश्चिताभ्यामेवोक्तः स्वेन स्वेन कालात्ययप्रायश्चित्तेनाग्निहोत्रमुपसाद्येत्यादि वारुणीष्ट्यन्तं सायंकाले भवति । प्रातःकालेऽपि तदाद्येव व्रातभृतीष्ट्यन्तं भवति ।

**न त्विहाग्निरनुगम्यः ।**

प्रातःकालेऽयं विशेषः । अनुगमयित्वा चाऽऽहवनीयमित्येतन्न भवति । तेनाग्निहोत्रार्थेष्वेवाग्निषु सायंहोमान्तं भवति ।

**आहवनीये चेद्ध्रियमाणे गार्हपत्योऽनुगच्छेत्स्वेभ्य एनमवक्षामेभ्यो मन्थेयुरनुगमयेत्त्वितरम् ।**

विद्यमान आहवनीये गार्हत्यो यद्यनुगच्छेत्तदा स्वेभ्योऽवक्षामेभ्य एनं गार्हपत्यं मन्थेयुः । तत इतरमनुगमयेत् । आहवनीयमित्यर्थः । गार्हपत्यशब्दादेव गार्हपत्यप्रत्यये सिद्धे तत्प्रत्ययार्थमेनमिति वचनं सर्वावस्थस्य गार्हपत्यस्यानुगमने मन्थनेनैवोत्पत्तिः, एवंरूपा च सेति ज्ञापनार्थम् । तुशब्दादप्ययमर्थो द्योत्यते । गार्हपत्यम+नुगतं मन्थनेनैवोत्पादयेत् । ध्रियमाण आहवनीयेऽयं विशेषस्तं चानुगमयेदिति । अवक्षामाणि मन्थनसमर्थानि काष्ठानि ।

**क्षामाभावे भस्मनाऽरणी संस्पृश्य मन्थयेदितो जज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः । स गायत्र्या त्रिष्टुभा**

---

* घ.—प्रदोषान्तो होमकाल इत्येवमादिहोमकालविधिना शेषो विधिर्व्याख्यातः । + घ.—तदाहुर्यस्याऽऽहवनीये ह्राग्निर्ध्रियेताथ गार्हपत्य उपशाम्येत्का तत्र प्रायश्चित्तिरिति स यदि प्राञ्चमुद्धरेत्स्यायतनाच्च्यवेत । यत्प्रत्यञ्चमसुरवद्यज्ञं तन्वीत । यन्मन्थेद्भ्रातृव्यं यजमानस्य जनयेद्यदनुगमयेत्प्राणो यजमानं जह्यात्सर्वमेवैनं सहभस्मानं समोप्य गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत्सा तत्र प्रायश्चित्तिः ।

---

१ ख. तेन प्रातरग्नि° ।

**जगत्याऽनुष्टुभा च देवेभ्यो हव्यं वह नः प्रजानन्निति ।**

मन्थनसमर्थक्षामाभावे भस्मनाऽरणी संस्पृश्य लेपयित्वा ततो मन्थयेत् ' इतो जज्ञे ' इति मन्त्रेण । मन्थयेदिति णिचः प्रयोगात्प्रकृते कर्मणि यः कर्ता स एव मन्त्रं ब्रूयात् । ये केचन समर्था मन्थयेयुरित्येवमवगम्यते । अरणीमन्थन एवायं मन्त्रो नावक्षाममन्थने । यद्युभयोरभिप्रेतः स्यात्पूर्वत्रैव मन्त्रं ब्रूयादनुगमयेत्त्वितरमितिवत् । तथा च न कृतम् । तेन पूर्वस्मिन्मन्थने मन्त्रो नास्तीति सिद्धम् । अवरोहणमन्त्रस्तूभयोरपि भवति, अरणीगतावरोहणस्यापि तस्मिन्नेव सूत्रे विधातुमिष्टत्वात् ।

**मथित्वा प्रणीयाऽऽहवनीयमुपतिष्ठेताग्ने सम्राळिषे राये रमस्व सहसे द्युम्नायोर्जेऽपत्याय । सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावतामन्नादं त्वान्नपत्यायाऽऽदध इति ।**

मथित्वेतिवचनम् ' इतो जज्ञे ' इत्यस्य प्रणयनमन्त्रत्वशङ्कानिवृत्त्यर्थम् ।

**अत एवैके प्रणयन्त्यन्वाहृत्य दक्षिणम् ।**

अत्रैव विषयेऽयं द्वितीयः कल्पः । ध्रियमाण आहवनीये गार्हपत्यानुगमने सत्यत एवाऽऽहवनीयाद्गार्हपत्यभूतादन्यमा*हवनीयं प्रणयन्त्येके । तथा सति दक्षिणाग्निरप्यनुहर्तव्यः ।

**स+हभस्मानं वा गार्हपत्यायतने निधायाथ प्राञ्चमावनीयमुद्धरेत् ।**

इदमपि कल्पान्तरम् । आहवनीयमुद्धरेदित्येतावतैव सिद्धे प्राञ्चमितिवचनमाहवनीयात्प्रत्यञ्चं गार्हपत्यं प्रणीयापि विहारसिद्धिरितीदमपि कल्पान्तरमिति ज्ञापनार्थम् । एते चत्वारः पक्षा× ब्राह्मणे समुद्दिष्टाः । तत्र नि÷न्दा विध्यन्तरस्तुत्यर्था । अतः सर्वेषां क्वचिच्छाखान्तरे विधानमस्तीति तान्सर्वान्कर्तव्यतया सूचितवानाचार्यः । स⊙हभस्मानमित्यस्मिन्पक्षे दक्षिणेन विहारं नीत्वा गार्हपत्यायतने निधानम् ।

---

* घ.—आहवनीयातने प्राग्देशे । + घ.—' सहभस्मानं दक्षिणेन विहारं कृत्वा गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत् ' अयमेव पाठो ब्राह्मणे दृष्ट इति देवत्रातभाष्ये × घ.—तेषु मध्ये सहभस्मानमित्यस्य प्रधानत्वं तस्यैतरेयब्राह्मणे निन्दाभावात् । ÷ घ.—स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम् । अनिबोधनद्वारा विध्यर्थप्रवर्तकवाक्यं निन्दा । उदितहोमविधावनुदितहोमनिन्दावत् । न हि निन्दा निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति न्यायात् । ⊙ घ.—अयं पक्षोऽजस्रपक्षे संभवति । कुतः । तत्रैव भस्मसंभवात् । अग्निसंभरणयोग्यं भस्मपदेन गृह्यते ।

---

१ घ. च. °यादाह° । २ ख. ग. झ. °च्छाखान्त° ।

**तत इष्टिरग्निस्तपस्वाञ्जनद्वान्पावकवान् ।**

एकाऽत्र देवता स चाग्निस्त्रिभिर्गुणैर्युक्तः ।

**आयाहि तपसा जनेष्वग्ने पावको अर्चिषा । उपेमां सुष्टुतिं मम । आ नो याहि तपसा जनेष्वग्ने पावक दीद्यत् । हव्या देवेषु नो दधदिति । प्रणीतेऽनुगते प्राग्घोमादिष्टिः ।**

अग्निहोत्रार्थं प्रणीत आहवनीये[1]ऽनुगतप्रायश्चित्तत्वेनेयमिष्टिः कर्तव्या । प्राक्पूर्वाहुतिप्रक्षेपादेषैवेष्टिः प्रायश्चित्तिर्भवति । उत्पत्तिस्तु ब्राह्मणोक्ता भवति ' तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येदित्यादि हिरण्यं पुरस्कृत्य सायमुद्धरेद्रजतमन्तर्धाय प्रातरुद्धरेत् ' इत्यत्रोक्ता । इयमेवोत्पत्तिरस्मिन्नवसरे ' प्रणीतो वा प्राग्घोमादुपशाम्येत् ' इति वचनात् । अग्नावनुगते[2]ऽन्तराहुती इति वक्ष्यति । उत्तराहुत्यां हुतायामग्न्युत्पत्तेः प्रयोजनं नास्ति । एवमग्निहोत्रे निर्वाह इत्यस्मत्सूत्रानुसारेण मन्यामहे ।

**अग्निर्ज्योतिष्मान्वरुणः ।**

द्वे देवते । ज्योतिष्मानित्यग्नेर्गुणः ।

**उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थादिति । सर्वांश्चेदनुगतानादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वाग्न्याधेयं पुनराधेयं वा ।**

यदि सर्वेष्वग्निष्वनुगतेष्वादित्योऽस्तमुदयं वा गच्छेत्तदाऽग्न्याधेयं पुनराधेयं वा प्रायश्चित्तं भवेत् । अनयोरेव कालयोः शाखान्तरे गार्हपत्याहवनीययोर्द्वयोरेवानुगतावेतत्प्रायश्चित्तमुक्तम् । तस्मिञ्शास्त्रे दक्षिणाग्निर्भिन्नयोनिः । अत एवं विनिवेशः । एकयोनित्वे सर्वानुगमने भवति भिन्नयोनित्वे द्वयोरेवानुगमन इति । अत्राग्न्याधेयपुनराधेयाभ्यां सेष्टिके ते गृह्येते अग्न्युत्पादकत्वसामान्यात् । एतदर्थमेवाधानाद्द्वादशरात्रमित्यत्र सेष्टिकेऽग्न्याधान आधानशब्दप्रयोगः संव्यवहारार्थं कृतः । तस्मिन्काले सर्वदा सर्व एवाग्नयो विहृता एव प्रायेणाऽऽसते । तत्र केवलगार्हपत्यानुगमने मन्थनेनोत्पाद्य तपस्वतीष्टिः कार्येत्युक्तम् । दक्षिणाग्न्यनुगमनेऽपि स्वयोनितो विहृत्य सैवेष्टिः कार्या । आहवनीयानुगमनेऽपि प्रायश्चित्तविशेष उक्तः । द्वयोर्द्वयोरनुगमने तान्येव यथासंभवं कर्तव्यानि । अतः सर्वानुगमन इदमवशिष्यते । अतः सर्वश[3]ब्दाविवक्षायामपि नैमित्तिकस्य स्वभावपर्यालोचनया सर्वानुगतावेवैतद्भवतीति मन्तव्यम् । एकयोनित्वे भिन्नयोनित्व उक्तो विनिवेशः । उभयोरनुगमनेऽपि विधीयमानस्याग्न्याधेयस्य सर्वोत्पादकस्वभावात्त्यागात्तद्विधानसामर्थ्यादेवानष्टोऽपि दाक्षिणाग्निर्नष्ट इति गम्यते । विहृतेष्वेवं भवति । अविहृतेष्वपि किं गार्हपत्यानुगमने सर्वानुगमोऽस्ति

---

१ ङ. °नीयानु° । २ ख. ग. घ. ङ. झ. °ते प्रा° । ३ ङ. च. °शब्दवि ।

न वा । अस्तीति ब्रूयात् । तत्र हि सर्वेऽग्नयः समवेता इति गम्यते । ततो विवहरण_ दर्शनात् । कथं तत्र समवायः । अङ्गारसमवायस्तावन्नास्ति । कर्मार्थे पृथक्कृतानां कर्म- समासौ तत्रैवानुगमनदर्शनात् । अथायमभिप्रायः—अङ्गाराश्रयो यो दक्षिणाग्न्याहवनी- *याख्यः शास्त्रगम्यः स कर्मसमासौ गार्हपत्याङ्गारानुप्रविशति । अन्यथा तत उद्धरण- विधानं नोपपद्यते । तत्संसर्गे संसर्गदोषश्च नास्ति । अङ्गारसंसर्गो हि सः । तथा च शास्त्रान्तरे वचनम् । यदि पूर्वोऽनुगतः संवर्ध्य[2] पश्चाद्धि स तर्हि गत इति एवमपि न युज्यते । अविहृतावस्थायां गार्हपत्ये ‘ गार्हपत्यं प्रज्वल्य ’ इति सूत्रप्रयोगात् । तथा च शास्त्रान्तरे सूत्रकारप्रयोगो मन्त्रवर्णश्च[3] दृश्यते । ‘ गार्हपत्यमभिमन्त्रयते सुगार्हपत्य[4] मभिमन्त्रयते सुगार्हपत्यः ’ इति । तेनावगम्यते तत्रानुप्रवेशोऽग्न्यन्तरस्य नास्तीति । ‘ यत्पुनः पश्चाद्धि स तर्हि गतः ’ इति तदप्यन्यपरम् । यदि हि सर्वदाऽनुगतस्याऽऽह- वनीयस्य गार्हपत्यात्प्रणयनेनैवोत्पत्तिः स्यात्तदैवैतल्लिङ्गमनुप्रवेशस्य । तत्र हि शास्त्रे मन्थ- नादप्युत्पत्तिरुक्ता । अतोऽस्यायमर्थः—यस्मिन्ननुगमने गार्हपत्यात्प्रणयनेनोत्पत्तिरुक्ता तदा- नुगतेऽन्तरा संचरणमविरुद्धं मन्थेनोत्पाद्येऽनुगतेऽप्यन्तरा न[6] संचरितव्यमिति । अतोऽन्य- परत्वादेवास्य वाक्यस्यानुप्रवेशे लिङ्गं न भवितुमर्हति । अतस्तत्र समवायः प्रत्यक्षेण शास्त्रेण वा लक्षयितुं न शक्यते । कथं तर्हि तत उद्धृत आहवनीयादिर्भवति । वचन- गम्यो हि सः । वचनमेवं भवति ‘ गार्हपत्यं प्रज्वल्य[5] ततो दक्षिणाग्निमुद्धृत्य गार्हपत्या- दाहवनीयं ज्वलन्तमुद्धरेत् ’ । इति । तेनाधिकृतेन पुरुषेण तन्नियुक्तेन वाऽग्निहोत्राद्यर्थं स्वकाले यथोक्तेन विधिना य उद्ध्रियते स एवाऽऽहवनीयादिर्भवति नान्यथा । अन्यथा चेदुद्ध्रियते तदा समोप्य तमग्निं विक्षेपप्रायश्चित्तं कर्तव्यं नान्यत् । अभ्युदितेष्टौ तु वचना- न्मध्योद्धृतोऽप्याहवनीयादिर्भवति । एवं तर्हि कर्मान्तरालकाले क्वासौ तिष्ठति । वयमपि न जानीमः क्वासौ तिष्ठतीति । एतावदत्रावगन्तुं शक्यते । सर्वकर्मार्थमग्नय आहिताः । तत्र गार्हपत्यो यावज्जीवं धार्यते वचनात् । इतरौ तु कर्मणि कर्मण्युध्रियेते । गताश्रियः सर्वे धार्यन्ते वचनादेव । नान्यदतोऽवगन्तुं शक्यते । एवं सति कर्मापूर्ववत्तिष्ठति । यथा यागादिजनितान्यपूर्वाणि यावत्फलभोगसंबन्धं तिष्ठन्ति तथाऽऽहवनीयादिरपि तिष्ठतीति । अतोऽनुद्धृतेषु गार्हपत्यानुगमने सर्वानुगमनं नास्तीति । तत्राग्न्याधेयं पुनराधेयं वा न कर्त- व्यमिति सिद्धम् ।

---

* क.—शब्दवाच्यः संस्कारः ।

---

१ ङ. झ. °र्गो हि । २ ख. ग. ङ. संचर्य । ३ ख. ग. ङ. °र्ण प्रयोगो दृ° । झ. °र्णं ४ ख. ग. ङ. च. झ. °पत्यः इ° । ५ ख. ग. °न्थनेनो° । ६ ख. ग. नु । दृ° ।

**समारूढश्लेषु चारणीनाशे ॥ १२ ॥**

अग्निष्वरण्योः समारूढेषु सत्स्वरण्योर्नाशेऽग्न्याधेयं पुनराधेयं वा कर्तव्यम् । अन्यतरारणीनाशेऽपि भवत्येतत्प्रायश्चित्तं तयोरकैकस्या एव कार्यविशेषे नियमाज्जायापतिसंस्तुतत्वाच्च । नन्वरणीनाश इति शब्द एकस्यामप्यनष्टायां न प्रवर्तत इति । सत्यम् । असौ शब्दो न प्रवर्तते । तथाऽपि मन्थनपदार्थो नैकया संपादयितुं शक्यत इत्यनष्टाऽपि नष्टैवेतिकृत्वोक्तम् । यदि परमनष्टामेव द्विधा कृत्वा मन्थनसिद्धिरिति । तथाऽपि नैवं वक्तुं शक्यते । उपादानकालेऽरणी आहरेदिति द्वयोरुपादानमदृष्टार्थं स्यादिति युक्तं कार्यभेददर्शनादिति । एवं सत्युर्वशीपुरूरवःसंस्तुतिरधरोत्तरयोररण्योः श्रूयमाणा चोपपन्ना भवतीति युक्तम् ॥ १२ ॥

**अथाऽऽग्नेय्य इष्टयः ।**

अथानन्तरं या वक्ष्यन्ते ता अग्निदेवत्या इष्टय इति वेदितव्यमित्यस्य सूत्रस्यार्थः । यान्यत्र चतुर्थ्यन्तानि पदानि तान्यग्नेर्गुणवाचकानीत्यर्थः । एतेनावगम्यते सर्वत्र चोदितैव देवता चोदनायां सत्याम्, असत्यां तु चोदनायां याज्यानुवाक्यादिगम्या । देवतागुणस्तु चोदनात एवावगन्तव्यः । कथं तर्हि वैश्वानरपार्जन्यायां वैश्वानरशब्दोऽग्नेर्गुणः । तयोरेव याज्यानुवाक्ययोस्तत्र प्रवेशात् । अत्र हि वैश्वानरशब्दस्याग्निगुणत्वं चोदितमेवेति ।

**व्रतातिपत्तौ व्रतपतये ।**

यस्मिन्कर्मणि यानि चोद्यन्ते व्रतशब्देन धर्मशब्देन वा तत्र तेषामतिपत्तावेषेष्टिः कार्या ।

**साग्नावग्निप्रणयनेऽग्निवते ।**

निवृत्तकर्मणाऽनिवृत्तकर्मणा वाऽग्निना सहित आहवनीयायतने यद्यन्योऽग्निराहवनीयार्थ उद्धियेत तमग्निमानधायैव स्मरति चेदायतनस्थमुंदूह्येदानीमुध्दृतं निदध्यात् । तथासतीष्टिर्न भवति । एतस्मिन्नपि पक्षे यद्यनपवृत्तकर्मोदूह्येत तदा व्याहृतिहोमः कर्तव्यः । अपवृत्तकर्मा चेन्न किंचिदपि प्रायश्चित्तं विद्यते । यद्यस्मृत्वैव तास्मिन्पूर्वप्रणीते निदध्यात्तदेयामिष्टिः कार्या ।

**क्षामायागारदाहे शुचये संसर्जनेऽग्निनाऽन्येन ।**

अन्य इति शवाग्निरुच्यते ।

---

१ ङ. झ. °रूहूश्लेषु । २ झ. °तिवत्संस्तु° । ३ घ. च. संस्कृत° । ४ ख. ग. °मन° । ५ ख. ग. घ. ङ. झ. °क्य इ° । ६ ख. ग. ङ. झ. °दिलिङ्गादवगन्तव्या । दे° । ७ झ. °योरत्र । ८ क. °त्तावेवेष्टिः । ९ च. झ. °मुद्धृत्येदा° । १० घ. च. निराद° ।

**मिथश्चेद्विविचये ।**

गार्हपत्यादयः सर्वे द्वौ[1] वा परस्परं यदि संसृज्येरंस्तदा विविचय इष्टिः कर्तव्या ।

**गार्हपत्याहवनीययोर्वीतये ।**

पूर्वस्यायमपवादः ।

**ग्राम्येण संवर्गाय ।**

ग्राम्यः पचनाग्निः ।

**वैद्युतेनाप्सुमते वैश्वानराय विमतानामन्नभोजने ।**

विमता विमनस्काः । शत्रव इत्यर्थः । द्विषदन्नं यद्याहिताग्निर्भुञ्जीत तदा वैश्वानरायेष्टिः कार्या ।

**एषैव कपाले नष्टेऽनुद्वासिते ।**

केषां चिदध्वर्यूणां पुरोडाशश्रपणानन्तरमेव कपालोद्वासनं विहितम् । केषां चित्कर्मसमाप्तौ । केषांचिदनुद्वासनमेव तत्र पूर्वयोः पक्षयोरनुद्वासिते नष्टे चैषेष्टिर्भवति । अनुद्वासनपक्षेऽपि प्रयोगमध्ये भवति प्रयोगसमाप्तौ न भवति विध्यपराधाभावात् ।

**अभ्याश्राविते वा ।**

येषां श्रवणानन्तरमुद्वासनं तेषामनुद्वासिते कपाले सत्याश्रावणे कृतेऽप्येषेष्टिः कर्तव्या ।

**सुरभय एव यस्मिञ्जीवे मृतशब्दः ।**

यस्मिन्नाहिताग्नौ जीवत्येव मृत इति यदि शब्दः संजायेत तदेयमिष्टिः कार्या । एवशब्दो गुणनियमार्थः । सुरभय एव न सुरभिमत इति । तेनान्यत्र गुणान्तरसंबन्धोऽप्यभ्युपगतो भवति यथा क्षामाय क्षामवते वेत्येवमादि ।

**त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतान्यग्निनाऽग्निः समिध्यते त्वं ह्यग्ने अग्निनाऽग्ने त्वमस्मद्युयोध्यमीवा अक्रन्ददग्निस्तनयन्निव द्यौर्वि ते विष्वग्वात जूतासो अग्ने त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये यो अग्निं देववीतये कुवित्सु नो गविष्टये मा नो अस्मिन्महाधनेऽप्स्वग्ने सधिष्टव यदग्ने दिविजा अस्यग्निर्होता न्यसीदद्यजीयान्त्साध्वीमकर्देववीतिं नो अद्येति । यस्य भार्या गौर्वा यमौ जनयेदिष्टिर्मरुतः ।**

मरुतोऽस्यामिष्टौ देवता ।

---

१ ख. गं. ङ. झ. द्वौ द्वौ वा ।

**सांनाय्ये पुरस्ताच्चन्द्रमसाभ्युदितेऽग्निर्दातेन्द्रः प्रदाता विष्णुः शिपिविष्टः ।**

सांनाय्यशब्देनाऽऽमावास्यं कर्मोच्यते तस्मिन्नारब्धे सति चन्द्रमा यदि पुरस्तादभ्युदियात्तदैतामिष्टिं कुर्यात् । अस्या अमावास्याविकारत्वात्प्रायश्चित्तेष्टीनां यो धर्म उपांशुत्वं वार्त्रघ्नाज्यभागता च न भवति । एकदेशविकृतमनन्यवद्भवतीति वृधन्वन्तावित्यादयोऽमावास्याधर्मा एव भवन्ति । एतदुक्तं भवति । अकालेऽमावास्याकर्मण्यारब्धे सत्यकालोऽयमिति ज्ञाने[1] तामेवामावास्यां[2] देवताभिर्विकृतां समापयेत् । अत्र काले प्राप्ते पुनर्यागोऽस्ति[3] नास्तीत्यत्राध्वर्युभिः सह निश्चयः कार्यः । दाताऽग्नेर्गुणः । प्रदातेन्द्रस्य । शिपिविष्टो विष्णोः ।

**अग्नेदा दाशुषे रयिं सयन्ता विप्र एषां दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी वषट्ते विष्णवास आकृणोमि प्र तत्ते अद्य शिपिविष्टनामेति । अपि वा प्रायश्चित्तेष्टीनां * स्थाने तस्यै तस्यै +देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते ।**

प्रायश्चित्तप्रकरणे या इष्टय इष्टिशब्देनैव चोद्यन्ते, याश्च ब्राह्मणोक्तास्तासामयं वैकल्पिको विधिरुच्यते । यास्तासामिष्टीनां देवतास्तासामेकैकस्यै देवताया एकैकां पूर्णाहुतिं जुहुयात् । द्वादशगृहीतेन स्रुचं पूरयित्वा यदधूयते सा पूर्णाहुतिरित्युच्यते । अयं पुनरनुपक्रान्तदर्शपूर्णमासस्य भवति दर्विहोममध्ये च नान्यत्र भवति ।

**हविषां स्कन्नमभिमृशेद्देवाञ्जनमगन्यज्ञस्तस्य माशीरवतु वर्धताम् । भूतिर्घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहसः । भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा । यज्ञस्य त्वा प्रमयोन्मयाऽभिमया प्रति मया द्रप्सश्च स्कन्देति ।**

देवाञ्जनमित्यादिना स्कन्देत्यन्तेन स्कन्नं हविरभिमृशेत् ।

**आहुतिश्चेद्बहिष्परिध्याग्नीध्र एनां जुहुयात् ।**

यदि हूयमानाहुतिर्बहिष्परिधि स्कन्देत्तदा तस्याः स्कन्नाभिमर्शने कृते तत आग्नीध्रस्तां[4]मादाय तूष्णीमेव जुहुयात् ।

---

* घ.—स्थानग्रहणात्तत्कार्यकरी पूर्णाहुतिः । पश्वलाभे पयस्या मैत्रावरुणीतिसूत्रे वृत्तिकारेणोक्तम् । + घ.—अर्थसंहिशब्द एव देवता । अचेतनत्वाद्युगपद्गमनं न संभवति । तथाऽपि संभवति योगबलात् ।

---

१ ख. ग. ङ. झ. ज्ञाते । २ घ. न्द. °वास्यायां दे° । ३ घ. °गो ना° । ४ ख. ग. °कोऽवाधि° ।

**हुतवते पूर्णपात्रं दद्यात् ।**

होमं कृतवत आग्नीध्राय तदानीमेव येन केनाचिद्धान्यरसादिना[1] पूर्णपात्रं दद्यात् ।

**देवते अनुवाक्ये याज्ये वा विपरिहृत्याऽऽज्ये अवदाने हविषी वा यद्वो देवा अतिपातयानि वाचा च प्रयुती देवहेळनम् । अरायो अस्माँ अभिदुच्छनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहेत्याज्याहुतिं हुत्वा मुख्यं धनं दद्यात् ।**

देवताविपर्यास आवाहनादिषु व्युत्क्रमः । अनुवाक्याविपर्यासोऽन्यदीयामन्यस्यानुब्रूयात्[2] । एवं याज्याविपर्यासः । आज्यविपर्यासोऽजौहवौपभृतयोरित्यादि[3] । अवदानविपर्यासः पूर्वार्धात्पूर्वमित्यादि । हविर्विपर्यासो निवर्पणादिषु[4] व्युत्क्रमः । यागे चान्यदीयस्यान्येन[5] यागः । एतेषु सर्वेषु ' यद्वो देवा अतिपातयानि ' इत्याहुतिं हुत्वा स्वगृहे यत्प्रधानभूतं द्रव्यं तद्धोमकर्त्रे ब्रह्मणे दद्याद्यजमानः । हुत्वेत्यत्र समानकर्तृकत्वमविवक्षितम् । याज्यानुवाक्ययोस्तु तस्मिन्कर्मण्यविहितयोस्तद्देवत्ययोरन्यदेवतयोर्वा विपर्यासे सति यागात्प्रागेव भ्रेषज्ञाने सति प्रायश्चित्तं कृत्वा पुनर्विहित[6] एवानूच्य यष्टव्यम् । कृते तु यागेऽनुवाक्याविपर्यासज्ञाने प्रायश्चित्तमेव न पुनर्यागाभ्यासः । याज्यायामप्यविहितायां तद्देवत्यायां विहितदेवतादेशं कृत्वा विहितामेव देवतां ध्यायन्यदि वषट्कुर्यात्तदाऽपि नाभ्यासः । अन्यदेवत्यायामप्यादेशध्याने विहितविषये स्यातां चेत्तदाऽपि नाभ्यासः । अतोऽन्यथाचेद्यागावृत्तिः कार्या । यागविषयेऽपि हविर्विपर्यासे यागावृत्तिशङ्का नैव कर्तव्या कृतत्वाद्यागस्य । एतद्धि लक्षणं यागस्य देवतोद्देशेन स्वद्रव्यत्यागो याग इति । देवता तावद्विहितैवं । अस्मिन्कर्मणि[7] द्रव्यमपि स्वमेव । अथायमभिप्रायः—अन्यस्यै संकल्पितत्वात्स्वत्वमपगच्छतीति । एवं चेत्तस्या अपि देवतायै यष्टुं न शक्यते स्वत्वाभावात् । अथ संकल्पनकाल एव यागः क्रियत इति सुतरां विपर्यासे यागो नाऽऽवर्तयितव्यो यागस्यावैगुण्यात् । तस्मादयथासंकल्पकरणमेवात्रापराधो न यागासिद्धिरिति । यदि पुनराग्नेयेनाग्नीषोमीययागे कृते भ्रेषो ज्ञायेत तदाऽग्नीषोमीयेणाग्नेययागः कर्तव्यः, संनिहितत्त्वात्तस्य द्रव्यस्य कार्यान्तरस्य[8] चाभावात् । तस्मिन्संनिहिते सति स्वद्रव्ये द्रव्यान्तरोपादानमशक्यमिति तस्मादेवं कृत्वा प्रायश्चित्तमेव कुर्यात् । अत्र व्याहृतिहोमश्च कार्यः । एतद्विपर्यासेऽन्तरित इत्यत्रैवोक्तम् ।

---

१ च. °चिद्धान्य° । २ घ. °त् । एवं याज्या ब्रूयात् । ए° । ३ घ. च. °हव औप° । ४ घ. च. निर्वाप° । ५ घ. ख. ग. झ. °दीयेनान्यस्य या° । ङ. °दीये सत्यस्य या° । ६ घ. °हिते वाऽनू° । ७ घ. च. °हिते चास्मिन्क° । ८ झ. कार्यस्य ।

**स्थानिनीमनावाह्य देवतामुपोत्थायाऽऽवाहयेत् ।**

यदि कस्मिंश्चित्कर्मणि यष्टव्यां देवतामनावाह्यैवोत्तरं कर्म कुर्यात्तदा यावति गते स्मरति तदैवोत्थायाऽऽवाहयेत्, वर्तमानावधिस्वरेण न मन्द्रेण । यदि मन्द्रेणैव स्यात्, उपोत्थानं न विदध्यात् । तस्याप्यावाहनधर्मत्वात् । तस्मादुपोत्थानविधानान्न मन्द्रत्वनियमः । अवधिस्वर एवेति सिद्धम् ।

**मनसेत्येक आज्येनास्थानिनीं यजेत् ॥ १३ ॥**

येयस्थानिनीं प्रमादादावाहयेत्तदा तस्मिन्नेव क्रमे तां यजेत् । निगमेषु च निगमयेत् । यजेदितिवचनं तद्देवत्यो याग एवायं नाऽऽहुतिहोम इत्येवमर्थम् ॥ १३ ॥

**हविषि दुःशृते चतुःशरावमोदनं ब्राह्मणान्भोजयेत् ।**

यदा हविरपक्वं भवति तदा तेनैव हविषा तत्कर्म समाप्य चतुःशरावपरिमितव्रीहिभिरोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् ।

**क्षामे शिष्टेनेष्ट्वा पुनर्यजेत ।**

एकदेशक्षामस्याशक्यपरिहारत्वात्प्रायश्चित्तं न भवति । यदा पुनरदग्धं किंचिदस्त्यवदानेभ्यो न पर्याप्तं च *तदैतत्प्रायश्चित्तं भवति ।

**अशेषे पुनरावृत्तिः ।**

हविष्यशेषे दग्धे पुनरावृत्तिः कार्या । पुनर्यागपुनरावृत्त्योरयं विशेषः । वर्तमानं प्रयोगं समाप्य पुनरप्यादित एवाऽऽरभ्यान्तात्क्रिया पुनर्यागः । पुनरावृत्तिस्तु वर्तमान एव प्रयोगे नष्टस्य हविषः पुनरुत्पादनमिति । पुनरावृत्तौ तु पुनरुत्पादितेन हविषा स एव प्रयोगः समापयितव्यः । अयमनयोर्विशेषः ।

**प्रागावाहनाच्च दोषे ।**

पुनरावृत्तिप्रसङ्गात्सूत्रभयमारब्धम् । आवाहनात्प्रागपि विदोषे सति पुनरावृत्तिरेव ।

**अप्यत्यन्तं गुणभूतानाम् ।**

+ गुणभूतानामत्यन्तमपि पुनरावृत्तिरेव । अत्यन्तमित्याकर्मपरिसमाप्तेरित्यर्थः ।

**प्राक्स्विष्टकृत उक्तं प्रधानभूतानाम् ।**

यत्पुनर्हविषां व्यापत्तावित्युक्तं तत्प्रधानहविषामेव स्विष्टकृतश्च प्रागेवेति चोभयमनेन नियम्यते । तेनात्राप्यङ्गा×नां पुनरावृत्तिरेव ।

---

* घ —चतुःशरावमोदनं ब्राह्मणान्भोजयेत् । + घ. अङ्गहविषां दोषे सति । × घ.—इन्द्रं वैमृधाग्नीनामनवायात्यानाम् ।

---

१ ख. ग. ङ. यस्मिन्कस्मिं° । २ ख. ग. तस्या उपो° । ३ ख. ग. मन्त्रनि° । ४ घ. ङ. च. °नं यद्दे° ।

अवदानदोषे पुनरायतनादवदानम् ।

प्र*सक्तानुप्रसक्तमिदम् । मध्यात्पूर्वार्धाद्गृहीतस्यावदानस्य दोषे सति तस्य हविषो मध्यपूर्वार्धाभावात्सदप्यसदेवेति मन्यमानः प्रधानहविषश्चेदाज्येनेष्टिमित्यादि कर्तव्यम् । अङ्गहविषश्चेत्पुनरावृत्तिरेव । मध्यपूर्वार्धयोरेव साधनत्वेनो+पसंहारादिति यो व्यवतिष्ठते तस्योत्तरमिदं सूत्रम् । अवदानदोषे पुनरप्यवदानायतनान्मध्यात्पूर्वार्धादेवावदातव्यम्[1] । अपेक्षितत्वात्तयोः शब्दयोरिति । चतुर्मुष्ट्यादिभिर्व्रीहिभिः संपादितं हविः सर्वं यागार्थमेव । तत्र[2] ह्यवदानेन यागसिद्धौ सत्यां तादर्थ्यं तत्रोपसंहृतं भवेन्नान्यथा । यत्का×र्यार्थं यदुपादीयते तस्य तत्कार्याकरणे तत्प्रति तादर्थ्यं नापैति । अतस्तादर्थ्यानपायात्तेनैव हविषा यष्टव्यमिति सिद्धम् ।

द्वेष्ट्रे त्विह दक्षिणां दद्यात् ।

प्रकृतमनुसृतम् । 'क्षामे शिष्टेनेष्ट्वा' इत्येतस्मिन्प्रयोगे या दक्षिणा सा द्वेष्ट्रे दातव्या नर्त्विग्भ्य इत्यर्थः ।

दक्षिणादान उर्वरां दद्यात् ।

सर्वार्थमिदं सूत्रम् । सर्वेषु कर्मसु विहितदक्षिणादान उर्वरां दद्यात् । सस्यसंपन्ना भूमिरुर्वरेत्युच्यते ।

**कपालं भिन्नमन÷पवृत्तकर्म गायत्र्या त्वा शताक्षरया संदधामीति संधायापोऽभ्यवहरेयुरभिन्नो घर्मो जीरदानुर्यत आर्तस्तदगन्पुनः । इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयुरनुसंतरन्तु । त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये यजन्ते । तेऽभिश्छिद्रं प्रतिदध्मो यजत्र स्वाहा यज्ञो अप्येतु देवानिति ।**

अनपवृत्तकर्मवचनात्पुरोडाशश्रपणादूर्ध्वं न प्रायश्चित्तमिति गम्यते ।

एवमवलीढाभिः[4] क्षिप्तेषु ।

अवलीढानि श्वादिभिरभिक्षिप्तानि तद्दशनादिभिः, अन्यथा वाऽशुचिसंबन्धीनि कपालान्यभिन्नान्यप्येवं कुर्यात् । भेदाभावात्संधानमर्थलुप्तम् । तेनाभिन्न इत्यादिनाऽपोऽभ्यवहरेयुः ।

---

* क. प्राप्तेऽनुप्राप्तम् । + क.—सामान्येन प्राप्तस्य विशेषे संकोचनमुपसंहारः । × घ.—स्वशाखाप्रवर्तकऋष्युक्ताविरुद्धस्यैव परकीयस्य ग्राह्यत्वं भवति । यः स्वशाखां परित्यज्य परशाखां समाचरेत् । अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति । इति । ÷ घ.—उद्वासितं कर्मापवृत्तं भवति ।

---

१ ख. ग. °वात्तद° । २ ख. ग. ङ. च. झ. °म् । आपेक्षिकत्वा° । ३ घ. तदत्र । ४ ख. ग. छ. झ. °लीढाभिः ।

**अप एवान्यानि मृन्मयानि । भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ।**

कपालेभ्योऽन्यानि मृन्मयानि भिन्नान्यभिन्नानि च । 'भूमिर्भूमिम्' इति मन्त्रेणाप एवाभ्यवहरेन्न संदध्यादित्यर्थः ।

**यदि पुरोळाशः स्फुटेद्वोत्पतेत वा बर्हिष्येनं निधायाभिमन्त्रयेत किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहाऽऽगहि । अघोरो यज्ञियो भूत्वाऽऽसीद सदनं स्वमासीद सदनं स्वमिति मा हिंसीर्देवप्रेरित आज्येन तेजसाऽऽज्यस्व मा नः किंचन रीरिषः । योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषीति ।**

स्फुटेद्भिन्द्यादित्यर्थः । उत्पतेतोद्गच्छेदित्यर्थः । पूर्वो निधानमन्त्रः, उत्तरोऽभिमन्त्रणार्थः, आनन्तर्ययोगात् ।

**अग्निहोत्राय कालेऽग्नावजायमानेऽप्यन्यमानीय जुहुयुः ।**

अग्निहोत्रहोमार्थं प्रणयनकाले समारूढोऽग्निर्मथ्यमानो यदि न जायेत तदाऽन्यं लौकिकमग्निमानीय प्रणीय तत्रैव होमः कार्यः । एतदनुगते न भवति । अनुगते तु मन्थनादि तपस्वतीष्टयन्तं तत्र प्रायश्चित्तम् । तत्राग्निसंधानमेव मन्थनप्रवृत्तौ निमित्तं नाग्निहोत्रहोमः । समारूढे तु नैमित्तिकस्याभावादग्निहोत्रायैव मन्थनस्य निमित्तं नान्यत् । अतः समारूढ एवेति युक्तमुक्तम् । तेनानुगतावजायमानेऽपि यावज्जन्म तावन्मथितव्यमेवेति । ततस्तपस्वतीष्टिः । तत्राग्निहोत्रहोमोऽनुद्धृतप्रायश्चित्तेन सह यदि होमकालोऽतिपन्नस्तदा मनस्वतीहोमश्च कार्यः । अप्यन्यमित्यन्यशब्दाल्लौकिकमग्निमानीय जुहुयुः । अपिशब्दाद्ब्राह्मणपाण्यादि वक्ष्यमाणमपि गम्यते ।

**पूर्वालाभ उत्तरोत्तरम् ।**

अग्न्यादीनां पृथिव्यन्तानां पूर्वपूर्वालाभ उत्तरोत्तरं गृह्णीयुः । पूर्वालाभ इत्यलाभवच[१]नादलाभे वचनान्तरविधिरयं न प्रतिनिधिनियम इत्यध्यवसीयते । तेन दृष्टार्थानामङ्गानां मध्ये यस्य कार्यमस्ति तदेव कार्यं नान्यत् ।

**ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु काष्ठेषु पृथिव्याम् ।**

अग्नौ सर्वधर्मसंभवात्तस्य पृथग्योगभावः । पाण्यादीनां चतुर्णामिन्धनादि श्रपणादि वर्जयित्वाऽन्यत्सर्वं संभवतीति पृथग्भावः । काष्ठानामब्भावे विधानादुदककार्याण्यपि

१ घ. झ. °भे द्रव्यान्तर° । २ घ. ङ. झ. °नाधिश्रयणा° ।

काष्ठेषु न स्युरिति तेषां पृथग्भावः। पाण्यादिषु पञ्चस्वाहुतिधारणार्था समिद्भवति, इन्धनार्थास्तु न भवन्त्येव समिधः। पृथिव्यां तु धारणार्थाऽपि समिन्न भवति काष्ठाभावे तस्या विधानात्। एवमन्यदपि विचार्य कर्तव्यम्।

हुत्वा त्वपि मन्थनम्।

होमं कृत्वाऽनन्तरमेव मन्थनमपि भवति। अपिशब्दात्कालान्तरेऽपि मन्थनं भवति। अत्र विनिवेशः। यदा प्रयाणकाले प्रयाणं परिसमाप्तं तदा होमानन्तरमेव मन्थनं भवति। यदा त्वपरिसमाप्तं प्रयाणं तदा पुनरपि होमकाल एव मन्थनमिति। तुशब्दोऽवधारणार्थः। हुत्वा मन्थनमेव भवति न पुनर्होम इति।

पाणौ चेद्वासेऽनवरोधः।

यदि पाणौ जुहुयात्तदा ब्राह्मणस्य वासार्थिनो नावरोधः कार्यः।

कर्णे चेन्मांसवर्जनम्।

अत्राजमांसवर्जनं भवति।

स्तम्बे चेन्नाधिशयीत।

अत्र दर्भाणामनधिशयनम्।

अप्सु चेदविवेकः।

अत्राविवेकोऽपामिमा भोजनीया इमा अभोजनीया इत्येवंरूपः।

एतत्सांवत्सरं व्रतं यावज्जीविकं वा।

पूर्ववद्विकल्पप्रतिभासहेतुर्द्रष्टव्यः।

अग्नावनुगतेऽन्तराहुती हिरण्य उत्तरां जुहुयाद्धिरण्य उत्तरां जुहुयात्॥१४॥

इत्याश्वलायनश्रौतसूत्रे पूर्वषट्के तृतीयोऽध्यायः॥ ३॥

आहुत्योरन्तराऽग्नावनुगते सति हिरण्यं निधाय तस्मिन्द्वितीयामाहुतिं जुहुयात्। हिरण्य एव यथासंभवं शेषकार्याणि कुर्यान्न पुनरग्निरुद्धर्तव्यः। अभ्यासोऽध्यायपरिसमाप्त्यर्थः॥ १४॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां तृतीयोऽध्यायः॥ ३॥

---

१ घ. ष. वक्तव्यम्।

अथ चतुर्थोऽध्यायः ।

---

**दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन ।**

उक्ता हविर्यज्ञास्तेषु च प्रायश्चित्तमुक्तम् । इदानीं सर्वसोमानां प्रकृतिभूतं ज्योतिष्टोमं वक्तुकामस्तदधिकारिविशेषणार्थं केषांचित्कर्मणामनुष्ठानक्रममुक्तवानाचार्यः । इष्टिराग्रयणेष्टिः पशुर्निरूढः । आधानानन्तरं दर्शपूर्णमासयोरारम्भ उक्तः । तदारम्भोत्तरकाल इष्टिपशुचातुर्मास्यैरिष्ट्वा सोमेन यष्टव्यम् । अथशब्दः सोमेन संबध्यते । स चाधिकारार्थः । सोमगुणकं कर्म सोम इत्युच्यते । तच्च ज्योतिष्टोमाख्यम् । एतदुक्तं भवति—अग्न्याधेयानन्तरमनेन क्रमेण दर्शपूर्णमासादिभिरिष्ट्वा ज्योतिष्टोमाख्येन सोमेन यष्टव्यम् । इत उत्तरमा षष्ठाध्यायपरिसमाप्तेस्तमेवाधिकृत्य सर्वमुच्यत इति ।

**ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके प्रागपि सोमेनैके ।**

'सोमेन यक्ष्यमाणः' इत्यस्मिन्सूत्रे वसन्तादिकालेभ्यः कालान्तरविशिष्टाधानविधिपरे वाक्ये सोमाधानयोरानन्तर्यमप्युक्तं भवति । अतस्तस्यार्थस्यावक्तव्यत्वादिदमन्यदानन्तर्यमित्यवगम्यते । तत्राऽऽधानं[1] कृत्वाऽग्निहोत्रहोमं कुर्वतः प्रागेव दर्शपूर्णमासयोरारम्भात्सोमेन यष्टुं यद्युपपद्यते तदा[2] तस्मिन्नपि काले यष्टव्यमिति सूत्रार्थः ।

**तस्यर्त्विजः ।**

वक्ष्यन्त इति शेषः । ऋत्विजः कर्तार इत्यर्थः ।

त एवंरूपा इत्याह—

**चत्वारस्त्रिपुरुषाः ।**

त्रयः पुरुषा येषां ते त्रिपुरुषाः । तेष्वृत्विक्षु वक्ष्यमाणेषु चत्वारः पुरुषवन्तः । तेभ्यश्चतुर्भ्योऽन्ये[3] तेषां चतुर्णामेव पुरुषा इति वेदितव्याः । अनेन प्रकारेण चतुर्णां मुख्यत्वम्, इतरेषाममुख्यत्वमित्यवगतं भवति । एते मुख्या एतेषां पुरुषा इत्याह—

**तस्य तस्योत्तरे त्रयः ।**

अस्मिन्नृत्विजामनुक्रमणे[4] यस्य यस्योत्तरे त्रयस्त्रयः संभवन्ति स मुख्यः । उत्तरे च ये त्रयस्त्रयस्ते तस्य तस्य पुरुषा इति प्रतिपत्तव्याः ।

**होता मैत्रावरुणोऽच्छावाको ग्रावस्तुदध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्य इति ।**

परकर्तृनिर्देशः सर्वपुरुषव्यापिपदार्थानुष्ठानेऽयमेव क्रम इति ज्ञापनार्थम् ।( र्थः )

---

१ घ. ङ. झ. तत्राऽऽधा° । २ ङ. झ. तदा । ३ क. °न्येषां । ४ ख. ग. °क्रमेण य° ।

**एतेऽहीनैकाहैर्याजयन्ति ।**

एते याजयन्तीति वचनादहीनैकाहैः षोडशैव पुरुषा याजयन्ति न सदस्यशामितृचमसाध्वर्यव इति ज्ञापितं भवति । अतः सत्यपि वरणे तेषामृत्विक्त्वं न भवति । अहीनैकाहैरितिवचनं सत्रेष्वेतेषामपि वरणनिवृत्त्यर्थम् । याजयन्तीतिवचनं स्वद्रव्यत्यागात्मकत्वाद्यागपदार्थस्यर्त्विग्भिः सैकर्तुं न शक्यत इति ज्ञापनार्थम् । अतः स्वामिकर्तृक एव यागपदार्थो भवतीति सिद्धम् ।

**एत एवाऽऽहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्याग्नींस्तन्मुखाः सत्राण्यासते ।**

एत एवेत्यवधारणात्सदस्यादिवर्जिताः पूर्वोक्ता एव षोडशपदार्थसंबन्धिनः पुरुषा अग्नीनाधाय प्रथमयज्ञेनेष्ट्वा गृहपतिसंज्ञकेन केवलयजमानपदार्थकारिणा सप्तदशेन पुरुषेण सहिताः सन्तः स्वान्स्वानग्नीन्सर्वान्मिश्रयित्वा सर्वे च दीक्षित्वा गृहपतिमुखाः सत्राण्यासते सत्रैर्यजन्त इत्यर्थः । इष्टप्रथमयज्ञा इत्याहिताग्निविशेषणम् । यद्याहिताग्नयस्तदेष्टप्रथमयज्ञा भवेयुरिति । तेनानाहिताग्नीनामपि सत्रासनमस्तीति गम्यते । तन्मुखा गृहपतिप्रधानाः गृहपत्यभिप्रेतवैकल्पिकपदार्थकारिणस्तथा विरुद्धधर्मसमवाये च गृहपतेरविरोधेन कर्तव्यमित्यर्थः ।

**तेषां समावापादि यथार्थमभिधानमैष्टिके तन्त्रे ।**

तेषामिति सत्रिणः पुरुषा उच्यन्ते । समावाप इति । यस्मिन्कर्मण्यग्नयः समोप्यन्ते तत्कर्म समावापशब्देनोच्यते । साग्नीनामनग्नीनां च सत्रासनमुक्तम् । तत्र साग्नीनां सत्रिणां समावापादि यथार्थमूहः कर्तव्य ऐष्टिके तन्त्रे । नानैष्टिके न वनस्पतियागे सूक्तवाकादौ च पाशुक इत्यर्थः । तन्त्रग्रहणमैष्टिकेसंबन्धेऽपि तन्त्रशब्दवाच्य एव भवति नान्यत्रेत्येवमर्थम् । तेन प्रथमाध्यायविहिते प्रायश्चित्तेऽपि भवति तस्मिन्नध्याये तन्त्राधिकारान्न तृतीयाध्यायविहित इति तन्त्रवचनम् ।

**दीक्षणाद्यनग्नीनाम् ।**

साग्नीनां समावापप्रभृति यथार्थमभिधानमुक्तम् । इदानीमनग्नीनां दीक्षणीयाप्रभृत्येव यथार्थमभिधानमैष्टिके तन्त्र इत्युच्यते । सत्राणामग्निसाध्यत्वादनग्नीनां साग्निभिः सहैव सत्रासनं भवति । तत्र दीक्षणात्प्राक्तनेष्वेकश्चेत्साग्निरेकवचनेन द्वौ चेद्द्विवचनेन बहवश्चेद्बहुवचनेनेत्येवं भवति । सत्रेष्वग्निबहुत्वे यजमानबहुत्वे च सति सर्वेषु यजुर्निगदेष्विति यथार्थमूहे प्राप्ते तेषां ' समावापादि ' इत्यनेन सूत्रेण यजमानाभिधायिनामेवेति नियम्यते ।

---

१°। २ ख. ग. सह क°। ३ क. °धे क°। ४ ख. ग. घ. ङ. च. ऽपि। ६ ख. ग. °श्चित्तमपि।

ऐष्टिके तन्त्र इत्यपि च । तत उत्तरसूत्रेण तावेव नियमावनग्नीनां दीक्षणीयाद्येव न प्राग्भाविन्युखासंभरण्यादाविति विधीयते ।

अग्निर्मुखमिति च याज्यानुवाक्ययोः ।

ऋक्त्वादप्राप्त ऊहो विधीयते ।

दण्डप्रदाने ।

अनैष्टिकत्वादस्य मन्त्रस्योहविधानम् । अस्मिन्मन्त्रे यजमानविषयस्य पदस्याभावेऽप्यूह विधानसामर्थ्याद्दण्डविषयस्यैवायमूहविधिरिति कल्पनीयम् । अत्र बहवो दण्डाः सन्तीति[3] दीक्षितबहुत्वाद्दीक्षितदण्डस्य च प्रकृतौ मैत्रावरुणदण्डत्वमवगतम् । अत्र च ते बहवः संनिहिताः सन्ति । तेषां च सर्वेषां[4] सहप्रदानं प्राप्तम् । एवं प्राप्त ऊहो विधीयते । मैत्रावरुणश्च सर्वान्दण्डान्गृहीत्वैकेन दण्डेन दाण्डित्वसिद्धेः । तेषामेकेनाभिमतेन सहितः स्वपदार्थान्कुर्यादित्येवमत्र कल्पयितव्यम् ।

प्रैषेषु निवित्सु ।

अप्राप्तो[5] विधीयते ।

घृतयाज्यायाम् ।

अनैष्टिकत्वादृक्त्वाच्चाप्राप्तविधिः ।

कुह्वां च ।

ऋक्त्वादप्राप्तिः ।

अच्छावाकनिगदोपहवप्रत्युपहवे च ।

निगदश्चोपहवश्च प्रत्युपहवश्च निगदोपहवप्रत्युपहवमिति द्वंद्वैकवद्भावः । पुनश्चाच्छावाकशब्देन षष्ठीसमासः । अच्छावाकस्य निगदे यजमानहोतरध्वर्यवित्यत्र, उपहवप्रत्युपहवे प्रत्येता सुन्वन्नित्यत्र ।

आर्षेयाणि गृहपतेः प्रवरित्वाऽऽत्मादीनां मुख्यानाम् ।

आर्षेयवरणे गृहपतेः प्रथमं वरित्वाऽऽत्मादीनां मुख्यानां प्रवृ*णीते । गृहपतेः पृथगन-

---

* क.—संस्कर्ता होता संस्कार्यो आहवनीयः । आहवनीयस्य यजमानेनोत्पादितत्वाद्यजमानस्य पुत्रवदुपचर्यते । तस्माद्यजमानस्य गोत्रमाहवनीयस्यापि भवति न तस्मात्संस्कार्यभेदात्संस्कार्यभूतस्य प्रवरणस्याप्यावृत्तिर्भवति । अग्नीनां तु गृहपतेराहवनीय एवाऽऽहवनीयो भवति । तस्मादनग्नीनामपि प्रवरणं कर्तव्यमेव । अनेनैव प्रकारेण सूक्तवाके नामादेशश्च कर्तव्य इति सिद्धान्तभाष्ये ।

---

१ ख. ग. °रणीयादा° । ङ. झ. °रणादा° । २ ख. ग. °वत्वादिप्रा° । ३ ङ. झ. सन्ति दी° । ४ ङ. झ. °षां प्र° । ५ ख. ग. °न हि° । ६ ङ. °प्राप्ते वि° ।

प्रयुञ्जीत । एवं स्वरसंक्रमणेनानभ्याहतं भवति । उत्सर्पणं च पूर्वत्रोत्तमायाः समासिक्षण उत्तरत्रोपोत्तमायाः समासिक्षण इत्यर्थः ।

पुनरुत्सृप्योत्तमयोत्तमस्थानेन परिदध्यादन्तरेण द्वार्ये स्थूणे अनभ्याहतमाश्रावयन्निवाऽऽश्रावयन्निव ॥ १५ ॥

इत्याश्वलायनश्रौतसूत्रे पूर्वषट्के चतुर्थोऽध्यायः ॥ ४ ॥

---

उत्सर्पणस्वरूपमत्रैवं भवति बद्धासन एव पूर्वस्थानात्स्थानान्तर उत्पतनम् । युगधुरावन्तरेणोपविष्टः सन्प्रथममुत्सृप्य पूर्वासनात्पुरतः सन्प्रतिप्रियतममित्यष्टावन्वाह । ततः पुनरुत्सर्पणे द्वार्ये स्थूणे अन्तरेण सन्नुत्तमया परिदध्यात् । आश्रावणस्य सिद्धवदुपदेशात्तस्यैवं स्वरो भवतीति निश्चीयते । एतदुक्तं भवति—मन्द्रादीनां मध्ये यस्मिन्नाश्रावणं प्रयुज्यते तस्य स्वरस्य सर्वे यमा आश्रावणे प्रयोक्तव्याः । प्रत्याश्रावणेऽप्येवं प्रयोगसिध्यर्थमाश्रावणदृष्टान्तः कृतः । इदमनुवचनं प्रधानकर्म शंसतिवत् । ननु सर्वाण्यनुवचनान्यभिमन्थनादीनि[1] संस्कारकर्माणीति प्रसिद्धम् । सत्यं प्रसिद्धम् । तत्र संस्कार्यस्य समन्वयोऽ[2]स्त्वग्न्यादेः । नन्वत्रापि प्रातर्याव्णामग्न्युषोऽश्विनां समन्वयो दृश्यते संप्रैषतो[3] मन्त्रलिङ्गाच्चेति । सत्यं समन्वयोऽस्ति । तस्य संस्कार्यत्वे प्रमाणं नास्ति स्तौति शंसत्यादावप्य*भिधेयतया समन्वयस्य दृष्टत्वात् । यत्तु संप्रैषत[4] इति तच्च प्रातर्यावदेवतासंबन्धिगुणसंकीर्तनार्थमनुब्रूहीत्येवमपि भविष्यति । एषां कार्यान्तरार्थानामत्राभिधानामित्यनवगमात्[5] । उषःसंबन्धि तु कर्म ज्योतिष्टोमे क्वचिदपि न दृश्यते । अग्न्यश्विसंबन्धि त्वस्त्येव । तथाऽपि तत्कर्मसंबान्धितारूपमत्र चिकीर्षितमित्यनवगमात्प्रधानकर्मैवैतदिति निश्चिनुमः । यदि पुनः कर्मान्तरसंबन्धिद्रव्यसंबन्धमात्रादेव संस्कारत्वमभ्युपगतं स्यात्तत्र सर्वेषां स्तौतिशंसतीनां संस्कारकर्मत्वमेव स्यात् । अत्र चानुवचनवैधर्म्ये लिङ्गमस्ति । 'मनसा ते वाचं प्रतिगृह्णामि' इति प्रातरनुवाकमनुब्रुवन्तं होतारमध्वर्युराहेत्यत्र प्रतिगरः संस्तुतिलिङ्गम् । तथा चास्य[11] संनिधौ[12] विश्वरूपा नाम स्तुतिर्वाग्देवत्यायामृचि क्रियते । तस्याश्च प्रधानकर्मत्वमवगतम् । तत्साहचर्याच्च प्रधानकर्मेति सिद्धम् । चिन्ताप्रयोजनं[13] स्वावसरे तदुक्ति[14]-

---

* क.— वाच्यतया ।

---

१ ङ. च. °नातपर° । २ ख. ग. ङ. च. °योऽस्त्यग्न्या° । ३ क. संप्रेषितो । ख. ग. घ. संप्रेषतो । ४ ख. ग. घ. झ. संप्रेषत । ५ च. °र्यार्थान्तराणाम° । ६ झ. °धामि° । ७ च. °त्यव° । ८ ख. म. °न्तरासं° । ९ ङ. झ. °बन्धिमा° । १० झ. °त्तच स° । ११ ख. ग. तस्य चा° । १२ घ. संबन्धिनी वि° । १३ ख. ग. °जनमस्याव° । १४ ख. ग. च. °दृतिक्कि° ।

यौयामा सोमप्रयोगपरिसमाप्तेर्विपर्यासप्रायश्चित्तं कृत्वा पुनस्तदपि कर्तव्यमेव प्रधानकर्मत्वे । संस्कारकर्मत्वे सति संस्कार्ये प्रायश्चित्तमेवं न पुनः प्रयोग इति ॥ १९ ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां चतुर्थोऽध्यायः ॥ ४ ॥

---

अथ पञ्चमोऽध्यायः ।

---

**परिहितेऽप इष्य होतरित्युक्तोऽनभिहिंकृत्यापोनप्त्रीया अन्वाहेषच्छनैस्तरां परिधानीयायाः ।**

परिधानविध्युत्तरकालमेवास्यानुवचमस्य विधानात्परिहिते इत्यस्मिन्नर्थे सिद्धे यत्परिहितवचनं तत्परिधानीयापोनप्त्रीययोः संबन्धकरणार्थम् । तेनानयोः कर्तृस्थानोपवेशनानामैक्यं साधितं भवति । अवधित्वं च शनैर्भावस्य परिधानीयाया एवेति साधितं भवति । संप्रैषपाठोऽनुवचनादिकालपरिज्ञानसाधनयोः संप्रैषस्वशास्त्रचोदनयोर्विप्रतिपत्तौ तयोरन्यतरेणापि तदनुवचनादि सिध्यतीत्येवमर्थः । ईषदल्पमित्यर्थः । शनैस्तरां नीचैस्तरामित्यर्थः । परिहितवचनादेव परिधानीयाया अवधित्वे सिद्धे पुनः परिधानीयावचनं परिधानीयाया अन्त्यावस्थासंग्रहार्थं परिधानीयायाँमपि परिधानीयायां इत्येवमर्थम् । तत्र परिधानीयाया मुत्तमस्वरोऽयमारोहक्रमेण कृत्स्नः प्रयुक्तः । तत्रान्त्याद्यमाच्छनैस्तरां भवतीत्यर्थः । तत्रानन्तरैकान्तरयोर्यमयोरुच्चनीचत्वोपलम्भनाशक्तेर्द्व्यन्तरादिषु सर्वेषु यमेषु प्राप्तेष्वपीषच्छब्देन द्व्यन्तरयम एव नियमोऽस्तीति नियम्यते । तेनोत्तमस्य चतुर्थेन यमेनानुवक्तव्यमिति सिद्धम् ।

**तासां निगदादि शनैस्तरां ताभ्यश्चाऽऽप्रसर्पणात् ।**

प्रसर्पणशब्देनेहोत्तमयाऽनुप्रपद्येतेत्येतत्प्रपदनं गृह्यते । एतच्च तासामित्यस्य प्रसर्पणविशेषणत्वाल्लभ्यते । ताभ्य इति निगदात्प्राग्भाविन्य ऋचो गृह्यन्ते । एतदुक्तं भवति—अपोनप्त्रीयाणां यत्प्रसर्पणमा तस्मान्निगदादि शनैस्तरां भवतीति । अत्रेषच्छब्दाभावेत्र्यन्तरादि ये यमास्ते गृह्यन्ते । तेनात्र मध्यमस्वरो वेदितव्यः ।

**परं मन्द्रेण ।**

प्रपदनाद्यत्परमपोनप्त्रीयं तन्मन्द्रेण प्रयोक्तव्यम् । एतदपोनप्त्रीयाधिकाराल्लभ्यते ।

---

१ ख. ग. °यामा° । २ ङ. °त्वेऽस° । ३ झ. °व पु° । ४ ङ. झ. °तव° । ५ झ. °नानुसि° । ६ ङ. झ. °स्थापरिग्र° । ७ ख. ग. घ. ङ. च. झ. °या अपि । ८ ख. ग. °यामित्ये° । ९ ख. ग. °रोहितक्र° । ङ. च. रोहक्र° । १० च. °म्भनोक्ते° । ११ ख. ग. °न्तरा य° । १२ च. °बात्स्वरान्तरादयो ये । १३ ङ. च. झ. प्त्रीयाणां त° ।

**प्रातःसवनं च ।**

प्रातःसवनं च मन्द्रस्वरेण प्रयोक्तव्यमिति । तच्चोपांशुग्रहाद्यच्छावाकशस्त्रपर्यन्तम् । तत्र सर्वत्र मन्द्रस्वरो भवतीत्यर्थः ।

**अध्यर्धकारं प्रथमामृगावानमुत्तराः ।**

अध्यर्धकारस्योत्तरया संतानाविरोधादृगावानतायाश्च पूर्वया संतानाविरोधादत्र द्वितीयादाने पञ्चार्धर्चा अनुच्छ्वसता वक्तव्याः ।

**वृष्टिकामस्य प्रकृत्या वा ।**

उत्तरा इत्यनुवर्तते । सामिधेनीन्यायेनेत्यर्थः ।

**प्रकृतिभावे पूर्वेष्वासामर्धर्चेषु लिङ्गानि काङ्क्षेत् ।**

'प्रकृत्या वा' इत्यस्मिन्पक्षे लिङ्गाकाङ्क्षैवं भवति—यस्या ऋचो यदपेक्षणीयं लिङ्गं तस्याः पूर्वस्या ऋचोऽर्धर्चे स्थित्वा तल्लिङ्गमाकाङ्क्षेत् ।

**प्र देवत्रा ब्रह्मणे गातुरेत्विति नव हिनोतानो अध्वरं देवयज्येति दशमीम् ।**

दशमीग्रहणं ब्राह्मणानुवादः ।

**आववृततीरधनुद्विधारा इत्यावृत्तास्वेकधनासु ।**

अत्र द्विविधा आपः, वसतीवर्य एकधनाश्च । तत्र पूर्वेद्युरेव वसतीवर्यो गृहीताः । एकधना इदानीं गृह्यन्ते । ता गृहीता ग्रहणदेशाद्देवयजनदेशं यदाऽऽवर्तन्ते तदेयमृगनुवक्तव्या ।

**प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु ।**

अत्रैवाऽऽसीनस्य दृष्टिपथमागतासु ।

**आ धेनवः पयसा तूर्ण्यर्थाः ।**

इत्युपायतीष्विति ब्राह्मणोक्तशेषः । समीपमागतास्वित्यर्थः ।

**समन्या यन्त्युपयन्त्यन्या इति ।**

समायतीष्वित्यत्रापि शेषः । वसतीवरीभिः समागतास्वित्यर्थः । इतिशब्दो ब्राह्मणोक्तकार्थसूचनार्थः ।

**तीर्थदेशे होतृचमसेऽपां पूर्यमाण आपो न देवीरुपयन्ति होत्रियमिति समाप्य प्रणवेनोपरमेत् ।**

प्रकृतिभावपक्षेऽप्यत्रोपरमो नित्यो विधानसामर्थ्यात् ।

---

१ ख. ग. अतो । २ ख. म. पत्युत्तिष्ठति ।

**आगतमध्वर्युमध्वेरपोऽध्वर्या३ उ इति पृच्छति ।**
**उतेमनन्नमुरिति प्रत्युक्तो निगदं ब्रुवन्प्रतिनिष्क्रामेत् ॥**

प्रतिवचनपाठः प्रतिवचनार्थप्रतिपादनेऽविस्पष्टार्थत्वादयमसौ निगद इत्थं वक्तव्य इत्याह ॥

**तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिं तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्या-वत इत्यन्तमनवानमुक्त्वोदगासां पथोऽवतिष्ठेत ।**

इत्यन्तवचनाद्यस्येन्द्र इत्यादिरप्यस्यैव निगदस्यैकदेश इति गम्यते । आसामेकधनाना-मागच्छन्तीनां मुखतो गत्वा ता अपरेणातीत्योत्तरतास्तिष्ठेदित्यर्थः ।

**उपातीतास्वन्वावर्तेत ।**

तास्वदूरेणाऽऽत्मनोऽतीतास्वन्वावर्तेत ।

**यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत्प्र सज-न्यानि तारिषोऽइमम्बयो यन्त्यध्वभिरिति तिस्रः ।**

अन्वावृत्य ततो यस्येन्द्र इत्यादि ब्रुवन्ननुव्रजेत् । ऋगावानपक्षे[3] चानेन प्रणवेन संतानः कर्तव्यः । पाठसामर्थ्यात् ।

**उत्तमयाऽनुप्रपद्येत ।**

तिसृणामुत्तमयेत्यर्थः ।

**एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सन्ना-सूत्तरया परिधायोत्तरां द्वार्यामासाद्य राजान-मभिमुख उपविशेदनिरस्य तृणम् ॥ १ ॥**

सन्नास्वेकधनास्वित्यर्थः । तासामेवाधिकारात् । आग्मन्नाप इत्यनया परिधाय ततो निष्क्रम्य पुनः पूर्वया द्वारा हविर्धानं प्रविश्य तस्यामेव द्वारि योत्तरा स्थूणा तस्याः पार्श्वसमीपे राजानमभिमुख उपविशेदकृत्वैव निरसनं निरसनमन्त्रमुपवेशनमन्त्रमनुक्त्वैव ॥ १ ॥

**उपांशुं हूयमानं प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय प्राण प्राणं मे यच्छेत्यनुमन्त्र्य उं[6] इत्यनुप्राण्यात् ।**

उपांशुर्नाम ग्रहः । तं हूयमानमभिमुखो भूत्वाऽनेन मन्त्रेणानुमन्त्र्याऽऽनुलोम्येन प्राणनं कुर्यात् । अन्तःशरीरस्थं वायुं नासिकाद्वारेण बहिर्निर्गमयेदित्यर्थः ।

---

१ क. झ. °नार्थः । प्र° । २ ख. ग. °चनस्ये° । ३ ख. ग. °क्षे वाने° । ४ क. पाठः सा° । ५ ङ. झ. °सनेऽम° । ६ ख. ग. उं ।

**अन्तर्याममपानं यच्छ स्वाहा त्वा सुहव सूर्यायापा-
नापानं मे यच्छेत्यनुमन्त्र्य ॐ इति चाभ्यपान्यात् ।**

आभिमुख्येनान्तःशरीरं बहिष्ठं वायुं नासिकया प्रवेशयेत् । प्राणापानयोः स्वरूपेण निदर्शनं पदार्थसंशयनिवृत्त्यर्थम् । चकारो ब्राह्मणोक्तविध्यनुकर्षणार्थः । सोऽयं विधिः प्राणं यच्छ स्वाहा त्वा सुहव सूर्यायेत्युपांशुमनुमन्त्र्य तमेवाभिप्राणेदुत्तरेण भागेन । एवमन्तर्याममुत्तरस्य मन्त्रस्य पूर्वेण भागेनानुमन्त्र्योत्तरेण भागेनाप्यपानेदित्येवं वा प्रयोक्तव्यमिति चशब्दः ।

**उपांशुसवनं ग्रावाणं व्यानाय
त्वेत्यभिमृश्य वाचं विसृजेत ।**

उपांशुग्रहार्थः सोम उपांशुरित्युच्यते । सोऽभिषूयते येन ग्राव्णा स उपांशुसवनः । तं व्यानाय त्वेत्यभिमृश्यापोनप्त्रीयारम्भस्थान उपविश्य भूर्भुवः स्वरिति वाचं विसृजेत् । प्रातरनुवाकामन्त्रणकाल एव नियता वाक्, तत्संबन्धादेवापोनप्त्रीयास्वपि तद्वस्थैवावस्थिता । तासु चानुब्रुवंदनुव्रजनमस्तीति तदन्ते विसृज्यमाना मन्त्रवत्येव विसृष्टा भवेन्नामन्त्रवदेव विसृज्यते । सैवात्रं तस्मान्नाहुतयोरुपांश्वन्तर्यामयोरित्युत्कृष्टा विसृज्यत इत्यवगन्तव्यम् । नात्र विचारणीयमन्यदस्ति ।

**पवमानाय सर्पणेऽन्वक्छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्यौ ।**

पवमानायेतिवचनं पवमानार्थमुद्गात्रादयो यत आरभ्य प्रसर्पन्ति तत एवाऽऽरभ्यैतावपि प्रसर्पेतां न विप्रुड्ढोमोत्तरकालमेवेत्येवमर्थम् । अन्वक्पृष्ठत इत्यर्थः । नित्यवचनं शतातिरात्रादौ मुख्यकर्म द्वितीयः कुर्याद्द्वितीयकर्म तृतीयः कुर्यादित्यत्रापि सर्पणे तयोर्नित्ययोरेव प्रापणार्थम् । न तत्कार्यं कुर्वतोस्तद्वर्ग्यपुरुषयोः प्राप्तिरित्येवमर्थम् ।

**तावन्तरेणेतरे दीक्षिताश्चेत् ।**

ताविति । ब्रह्ममैत्रावरुणावित्यर्थः । इतर इति । ताभ्यामन्ये ब्रह्महोतृवर्ग्याः पुरुषा इत्यर्थः । दीक्षिताश्चेदितिवचनाददीक्षितानामेतेषां सर्पणं नास्तीति गम्यते । दीक्षितानां यजमानत्वादेव सर्पणे सिद्धे पुनर्वचनमेतेषामस्मच्छास्त्रोक्तविधिप्रापणार्थम् । अन्तरेणेति मध्यं इत्यर्थः ।

---

१ क. ख. ग. °ख्येन बं° । २ क. °हिर्वायुं । ३ क. ख. ग. °मन्त्रयेत । त° । ४ ख. ग. °पान्यादि° । ५ घ. °यतवा° । ६ क. ख. ग. घ. °वस्थ एव स्थितः ता° । ७ ख. ग. घ. °वन्नु° । ८ ङ. च. झ. °सृज्या भ° । ९ ङ. च. °वेत्सैवाम्नानाहु° । १० झ. °त्र नाहु° । ११ ख. ग. °चाहूयेत° । १२ क. °नं सत्रा° । १३ क. ख. ग. °वर्गीयोः पु° । १४ घ. ङ. च. झ. °ध्यत इ° ।

**द्रप्सश्चस्कन्देति द्वाभ्यां विप्रुड्ढोमौ हुत्वाऽध्वर्युमुखाः समन्वारब्धाः सर्पन्त्या तीर्थदेशात् ।**

विप्रुड्ढोम इति कर्मनाम[1] । हुत्वा सर्पन्तीति वचनात्सर्पणाङ्गो[2] होम इति गम्यते । तेन ये ये प्रसर्पन्ति ते ते जुह्वतीति गम्यते । अध्वर्युमुखा अध्वर्यूक्तकारिणः । समन्वारब्धा अविच्छेदेन परस्परं स्पृशन्त इत्यर्थः । आतीर्थदेशादितिवचनात्तावदेवाध्वर्युप्रधानत्वं[3] तीर्थदेशं प्राप्योपवेशनादिस्वाधीना[4] एवेत्येवमर्थम् ।

**तत्स्तोत्रायोपविशन्त्युद्गातारमभिमुखाः ।**

तस्य बहिष्पवमानस्य स्तोत्रं तत्स्तोत्रं स्तुतिरित्यर्थः । बहिष्पवमानस्तुत्यर्थमुद्गातारमभिमुखा उपविशेयुः, दक्षिणतो ब्रह्मोदङ्मुखः पश्चान्मैत्रावरुणः प्राङ्मुखः । बहुवचनं सत्रापेक्षम् ।

**तान्होताऽनुमन्त्रयतेऽत्रैवाऽऽसीनो यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्याम् । तस्यापि भक्षयामसि मुखमसि मुखं भूयासमिति ।**

तान्बहिष्पवमानार्थमुपविष्टानित्यर्थः । अत्रैवाऽऽसीन इति । यत्रैवोपविश्य वाग्विसर्गं करोति तत्रैवेत्यर्थः । होतृग्रहणं होतैवात्राऽऽसीनोऽनुमन्त्रयते न यजमान[5] इत्येवमर्थम् । यदि यजमान एव हौत्रं करोति तदा यजमानतया सर्पणं कृत्वा तत्रस्थ एवानुमन्त्रणं कुर्यात् । तथाच वचनमस्ति—'यद्यु वै स्वयं यजमानो होता स्यात्सर्पेदेव[6]' इति ।

**दीक्षितश्चेद्व्रजेत्स्तोत्रोपस्वाराय ।**

यदि होता दीक्षितस्तदाऽनुमन्त्रणं कृत्वा पुनस्तत्र गच्छेद्याजमानं कर्तुम् । पूर्वसूत्रे होतृग्रहणाद्यजमानस्य होतृत्वे गत्वाऽनुमन्त्रणमुक्तम् । अत्र होतुर्यजमानत्वेऽनुमन्त्रणं कृत्वा पश्चाद्याजमानं कर्तुं व्रजेदित्युक्तम् । तेनेदमुक्तं भवति—एकाहाहीनेषु यजमानस्य होतृत्वे सत्रेषु गृहपतेर्होतृत्वे च गत्वाऽनुमन्त्रणं भवति[7] । सत्रेषु होतैवानुमन्त्रणं कृत्वा गच्छेद्याजमानकरणाय, अन्यत्रानुमन्त्रणं कृत्वाऽपि न गन्तव्यमित्यर्थः ।

**सर्पेच्चोत्तरयोः सवनयोः ।**

यदि होता दीक्षितस्तदोत्तरयोः सवनयोः सर्पणमपि कुर्यात् । बहिष्पवमानेऽत्रैवाऽऽसीनोऽनुमन्त्र्य पुनर्गच्छेत् । उत्तरयोः सवनयोः सर्पणादि सर्वं याजमानं कुर्यादित्यर्थः ।

---

१ ङ. च. झ. °ति ना° । २ क. °नामानौ हु° । ३ ख. ग. °नत्वात्तीर्थ° । ४ झ. °नादिः स्वा° । ५ झ. °मीन ए° । ६ ख. ग. °र्पेत वा ' इ° । ७ ख. ग. °पि ग° ।

**ब्रह्मन्स्तोष्यामः प्रशास्तरिति स्तोत्रायातिसर्जितावतिसृजतः ।**

ब्रह्ममैत्रावरुणयोरयं विधिः, तयोरेवात्र प्रत्यतिसर्जनविधिदर्शनात् । अतिसर्जनवाक्यपाठोऽतिसर्जनवाक्ये परस्मैपदप्रयोगे सत्यपि प्रत्यतिसर्जनवाक्य आत्मनेपदप्रयोगलाभार्थम् ( र्थः ) ।

**भूरिन्द्रवन्तः सवितृप्रसूता इति जपित्वों स्तुध्वमिति ब्रह्मा प्रातःसवने ।**

प्रातःसवनग्रहणं माध्यंदिनसवनादिस्तोत्रनिवृत्त्यर्थम् ।

**भुव इति माध्यंदिने स्वरिति तृतीयसवने भूर्भुवः स्वरिन्द्रवन्तः सवितृप्रसूता इत्यूर्ध्वमाग्निमारुतात् ।**

इन्द्रवन्त इत्यादौ पूर्ववदधिकारे सिद्धेऽपि पुनर्वचनं व्याहृतित्रयविशिष्टश्चतुर्थोऽयं मन्त्र ऊर्ध्वमाग्निमारुताद्भवति न पूर्वे त्रयो मन्त्राः संहत्य भवन्तीत्येवमर्थम् । उक्थ्यादिष्विति वक्तव्य ऊर्ध्वमाग्निमारुतादितिवचनं मानसात्यग्निष्टोमस्तोत्रसंग्रहार्थम्[1] ।

**स्तुत देवेन सवित्रा प्रसूता ऋतं च सत्यं च वदत । आयुष्मत्य ऋचो मा गात तनूपात्साम्न ओमिति जपित्वा मैत्रावरुण स्तुध्वमित्युच्चैः ॥२॥**

जपित्वोच्चैरित्युभयवचनमस्यैवेदं[4] भवतीत्येवमर्थम् । तेन ब्रह्मणोऽत्राप्यूर्ध्वं वा प्रणवादित्ययमपि विधिर्भवतीति गम्यते ॥ २ ॥

**अथ सवनीयेन पशुना चरन्ति ।**

सवनेषु भवः सवनीयः । वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिनेऽङ्गैस्तृतीयसवन इत्येवं यष्टव्य इत्यर्थः । परिव्ययणाद्युक्तमित्येवमादिभिर्लिङ्गैः पशुत्वे सिद्धेऽपि पशुनेतिवचनं पुरोडाशानामपि सवनीयसंज्ञाप्रापणार्थम् ।

**यद्देवतो भवति ।**

तस्य पशोर्या या देवता शास्त्रान्तरेष्वपि विहिता तद्देवत्योऽपि पशुः कर्तव्यः । एतदुक्तं भवति सवनीये पशौ देवतान्तरप्राप्तावप्यसमाम्नातत्वं नास्तीत्यर्थः ।

**आग्नेयोऽग्निष्टोम ऐन्द्राग्न उक्थ्ये द्वितीय ऐन्द्रो वृष्णिः षोळशिनि तृतीयः सारस्वती मेष्यतिरात्रे चतुर्थी ।**

अत्र च शब्दप्रयोगादेव समुच्चये संपाद्ये सत्यपि यद्द्वितीयादिभिः शब्दैः समुच्चयं विदधाति तज्ज्ञापयति प्रायिकोऽयं समुच्चय इति । वृष्णिर्मेषजातौ पुमान् ।

---

१ ङ. च. झ. मानसादिस्तो° । २ घ. ङ. झ. पूर्वं त्र° । ३ ख. ग. ओ३मि° । ४ घ. ङ. झ. स्यैवे भ° । ५ ख. ग. °णोऽप्यत्रा° ।

**इति क्रतुपशवः ।**

इतिशब्द एते चत्वारः क्रतुपशुसंज्ञा भवन्ति ।

**परिव्ययणाद्युक्तमग्नीषोमीयेणाऽऽचात्वालमार्जनाद्दण्डप्रदानवर्जम् ।**

परिव्ययणादि यच्चात्वालमार्जनपर्यन्तमग्नीषोमीये पशौ विहितं तदत्रापि भवति। अयमेवार्थोऽत्र विधातुमिष्टः[1]। एवं व्याख्यायमानेन तूभयत्र चात्वालमार्जनस्य नेदमादिषु मार्जनमिति[3] प्रतिषिद्धस्य प्रतिप्रसवः कृतो भवति । अग्नीषोमीयसंबन्धितया सिद्धवदुपदिश्य तस्य[4] सवनीयसंबन्धितया पुनर्विधानात्तदवध्यन्तर्भावाद्दण्डप्रदानमत्र[6] प्रतिषिध्यते। तेनाँप्रत्तमेवामन्त्रकमादाय पूर्ववद्धोतारं न परिहृत्य तस्याग्रतो गमनादि पूर्ववत्कुर्यात्।

**उपविश्याभिहिंकृत्य परिव्ययणीयां त्रिः ।**

उपविश्येतिवचनमुपविश्य परिव्ययणीयामेव ब्रूयान्न पूर्वस्या उत्तरार्धर्चमपीत्येवमर्थम् ।

**आवह देवान्त्सुन्वते यजमानायेत्यावाहनादि-**
**सुन्वच्छब्दोऽग्रे यजमानशब्दादैष्टिकेषु निगमेषु ।**

आवाहनादिषु सुन्वच्छब्दोऽग्रे यजमानशब्दादित्येवंलक्षणसिद्धस्य सुन्वच्छब्दस्य सुन्वते यजमानायेतिपाठो यजमानशब्दादेवाग्रे सुन्वच्छब्दः कर्तव्यः, न तत्पर्यायाच्च यज्ञपतिशब्दादेरित्येवमर्थं यजमानशब्दसमानविभक्तिप्रापणाय चेति । आवाहनादिग्रहणमस्मिन्नहनि यदा यदैष्टिकं तन्त्रं प्रवर्तते तदा तदाऽस्य विधिः प्रापणार्थम् । ऐष्टिकग्रहणमनैष्टिकनिवृत्त्यर्थम् ।

**नान्त्याद्धारियोजनादूर्ध्वम् ।**

अहर्गणेऽन्त्यमनन्त्यं चास्तीति विशेषणम् । एकाहेष्वेकत्वादहस्तदेवाऽऽद्यन्तवद्भवति । अन्त्येऽहनि यद्धारियोजनं तस्मादूर्ध्वमयं विधिर्न भवतीत्यर्थः ।

**न प्रावित्रं साधु ते यजमान देवता**
**ओमन्वतीतेऽस्मिन्यज्ञे यजमानेति च ।**

अनयोरपि विषययोरयं विधिर्न भवति ।

**प्रागाज्यपेभ्यः सवनदेवता आवाहयेदिन्द्रं वसुमन्तमा-**
**वहेन्द्रं रुद्रवन्तमावहेन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं**
**वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमावहेति ।**

सवनदेवता अनिर्दिष्टदेवतानां सोमानां सवने सवने देवताः । ते च सवनमुखे सवनमुखे होतुर्वषट्कारे हूयन्त इत्यर्थः । अपूर्वत्वात्सोमस्याऽऽवाहनप्रैकारपाठोऽयमप्राप्तत्वात्कृतः ।

---

१ ङ. च. झ. °वः । ए° । २ ख. ग. °ष्टः । य ए° । ३ ख. ग. °नस्य प्रसिद्धः प्रतिप्र° । ४ ङ. ञ. °स्य तस्य स° । ५ ख. ग. °वाद्दा प्र° । ६ ख. ग. घ. °मन्त्रः प्र° । ७ ख. घ. °नात्र तमे° । ८ क. ङ. झ. °द्धार्योज° । ९ ख. ग. विशेषयो° । १० ख. ग. °प्रकरणे पा° ।

**ताः सूक्तवाक एवानुवर्तयेत् ।**

अयमप्यप्राप्तविधिरपूर्वत्वादेव । एवकारो विस्पष्टार्थः ।

**प्रवृताहुतीर्जुह्वति वषट्कर्तारोऽन्येऽच्छावाकात् ।**

येऽस्मिन्नहनि वषट्कारसंबन्धिनस्तेऽस्मिन्काले[1] प्रवृताहुतीर्जुह्वत्यच्छावाकं वर्जयित्वा । अस्मादेवाच्छावाकप्रतिषेधादवगम्यते—प्रवृताहुतयो न वरणनिमित्ता इति । अच्छावाकस्य वरणाभावात् । तेनाग्नीषोमीयेऽहनि वरणे कृतेऽपि होतुरन्ये तस्मिन्नहनि न जुह्वति । होतुस्तु पाशुको वैकल्पिकः सिद्ध एव ।

**चात्वाले मार्जयित्वाऽध्वर्युपथ उपतिष्ठन्त आदित्यप्रभृतीन्धिष्ण्यान् ।**

चात्वालमार्जनान्तं पाशुकं कर्मोपदिष्टम् । तत्र चात्वालमार्जने[2] कृते सौमिकमुपस्थानादि कर्म कुर्युरित्यर्थः । तेन पाशुककर्तार एव मार्जनं कुर्युः । *अध्वर्युपथ इति । अध्वर्युपथे तिष्ठन्त इत्यर्थः । आदित्यप्रभृतीन्वक्ष्यमाणान्धिष्ण्यानुपतिष्ठन्ते । आदित्यप्रभृतिवचनमादित्यस्यापि धिष्ण्यत्वप्रतिपादनार्थम् । तेनोपस्थितांश्चे[3]त्यादावादित्यस्यापि ग्रहणं भवति ।

**आदित्यमग्रेऽध्वनामध्वपते श्रेष्ठः स्वस्त्यस्याध्वनः पारमशीयेति ।**

उपतिष्ठन्त इति वर्तते । अग्रवचनमादित्यप्रभृतीन्धिष्ण्यानुपतिष्ठन्त इतिवचनात्प्रत्युपस्थानमादित्यप्रभृतित्वे प्राप्ते तन्निवृत्त्यर्थम् । तेन सकृदेवाग्र उपस्थातव्यो न यावदुपस्थानमिति ।

**यूपादित्याहवनीयनिर्मन्थ्यानग्नयः सगराः सगरा अग्नयः सगरास्थ[4] सगरेण नाम्ना पात माऽग्नयः पिपृत माऽग्नयो नमो वो अस्तु मा मा हिंसिष्टेति ।**

अत्राप्यादित्य उपस्थेयो यूपादिभिः सह तस्यापि निर्देशात् । निर्मन्थ्यो नाम यत्राग्निर्मथ्यते स देशः ।

**सव्यावृतः शामित्रोवध्यगोहचात्वालोत्करास्तावान्[5] ।**

शामित्रः पशुश्रपणार्थोऽग्निः । ऊवध्यगोह आन्त्रप्रच्छादनस्थानम् । आस्तावो यत्र बहिष्पवमानः स्तूयते स देशः ।

---

* घ.—अध्वर्युपथो नाम हविर्धानाग्नीध्रीययोर्मध्यमित्यविवाक्येऽध्वर्युपथेनेत्येक इति सूत्रे वृत्तौ ।

---

१ ख. ग. °नस्तस्मिन्का° । २ ख. ग. °त्वाले मा° । ३ ख. ग. च. °स्थिताश्चै° । ४ च. °राः स्थ । ५ घ. ङ. च. झ. °न् । एवमेव शा° ।

**एवमेव दक्षिणावृत आग्नीध्रीयमच्छावाकस्य वादं दक्षिणं मार्जालीयं खरमिति ।**

एव मेवेत्युभयत्रापि संबध्यते । तेनाग्नयः सगरा इत्ययमेवोभयत्र भवति[1] । आग्नीध्रीयोऽग्निविशेषो[2]य उत्तरतो निहितः । अच्छावाकस्य वादः, यस्मिन्देश आसीनोऽच्छावाकः 'अच्छावाक वदस्व' इत्युक्तो वदति स देशः । दक्षिणं मार्जालीयमिति । दक्षिणो मार्जालीय एष[3] उच्यते । तेनोत्तरेऽपि मार्जालीयोऽस्तीति गम्यते । खरो नाम यस्मिन्देशे ग्रहचमसाः साद्यन्ते स देशः । विशेषणविशेष्यभावभ्रान्तिनिवृत्त्यर्थं समासाकरणं नोपस्थानभेदसिद्ध्यर्थम् । तेनैतांश्चतुरः सकृदेवोपतिष्ठेरन् ।

**उत्तरेणाऽऽग्नीध्रीयं परिव्रज्य प्राप्य सदोऽभिमृशन्त्युर्वन्तरिक्षं वीहीति ।**

आग्नीध्रीयमुत्तरेण परिव्रज्य सदसो द्वारदेशं प्राप्य सदोऽभिमृशन्ति मन्त्रेण । प्राप्येतिवचनं प्राक्चेष्टतानिवृत्त्यर्थम् । प्राप्याभिमृशन्ति नान्यत्संपादनीयमित्यर्थः ।

**द्वार्ये संमृश्यैवमपरानुपतिष्ठन्ते ।**

द्वार्ये इति । पूर्वद्वारस्थूणे इत्यर्थः । प्राप्य सद इति प्रकृतत्वादाहवनीयप्रदेशादागच्छतां सदःप्राप्तिः पूर्वभाग इति गम्यते । तत्र च प्राप्त्यनन्तरं द्वार्याभिमर्शनविधानात्प्राप्तिश्च सदसो द्वारप्रदेशस्यैवेति गम्यते । अभिमृशन्तीतिवर्तमाने संमृश्येतिवचनं वैलक्षण्यज्ञापनार्थम् । तच्च वैलक्षण्यमसंनिहितेन मन्त्रेण 'देवीर्द्वारो' इत्यनेनाभिमर्शनम् । एवमिति । अग्नयः सगरा इत्यनेनेत्यर्थः । अपरानिति । सदःपूर्वद्वारप्राप्तानां विधानात्सदसोऽपराञ्शालामुखीयादीनित्यर्थः । शालामुखीयादीनित्यनुक्त्वाऽपरानितिवचनात्तत्रस्था एवोपतिष्ठेरन् ।

**उपस्थितांश्चानुपस्थितांश्चाप्यपश्यन्तोऽव्यनीक्षमाणाः ।**

उपतिष्ठन्त इति वर्तते । उपस्थिता आदित्यादयः । अनुपस्थिताः सदस्था[4] होत्रीयादयः । चशब्द एवंशब्दानुकर्षणार्थः । अप्यपश्यन्त इतिवचनात्सर्वत्र शक्तिविषयेऽभिमुख एव कर्माणि कुर्यादित्यवगम्यते । नेक्षमाणा अनीक्षमाणा विविधमनीक्षमाणा व्यनीक्षमाणाः । न व्यनीक्षमाणा अव्यनीक्षमाणाः । द्विःप्रतिषेधात्प्रकृत्यर्थप्राप्तिः । विविधमीक्षमाणा इत्यर्थः । एतदुक्तं भवति उपस्थिताननुपस्थितांश्च सर्वानपश्यन्तोऽपीतस्ततः[5] ईक्षमाणाः 'अग्नयः सगराः' इत्यनेन मन्त्रेण सकृदेव सदसः पूर्वद्वारप्रदेशस्था एवोपतिष्ठेरन्निति ।

---

१ ख. ग. °ति । दक्षिणामिति । आ° । २ ख. ग. षोऽयमुत्त° । ३ च. एवोच्य° । ४ ख. ग. घ. ङ. च. झ. °दस्या हो° । ५ ख. ग. °श्यतोऽपी° ।

**होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टेति पूर्वया द्वारा सदः प्रसर्पन्त्युरुं नो लोकमनुनेषि विद्वानिति जपन्तः ।**

पूर्वद्वारदेशं[1] गत्वा तथैव प्रसर्पणे सिद्धे यत्पूर्वग्रहणं करोति तज्ज्ञापयति सदःप्रवेशनद्वारा[2] निर्देशे सति पूर्वयैव प्रवेशो भवतीति । 'उरुं नो लोकम्' इत्येतामृचं सर्वे सह जपन्तः पूर्वया द्वारा प्रसर्पयेयुरित्यर्थः[3] ।

**उत्तरेण सर्वान्धिष्ण्यान्सन्नान्सन्नानपरेण यथास्वं धिष्ण्यानां पश्चादुपविश्य जपन्ति यो अद्य सौम्यो वधोऽघायूनामुदीरति । विषूकुहमिव धन्वना व्यस्याः परिपन्थिनं सदसस्पतये नम इति ।**

सूत्रोक्तक्रमेण[4] होतृप्रथमाः प्रविश्य ततो नेष्टृपोतृब्राह्मणाच्छंसिहोतृमैत्रावरुणा इत्यनेन क्रमेणोत्तरेण सर्वान्धिष्ण्यान्गत्वा सन्नान्सन्नानपरेण गत्वा यो यो यस्य स्वो धिष्ण्यस्तस्य तस्य पश्चादुपविशेयुः । उपविश्य 'यो अद्य' इति जपेयुः । नेष्टुः सन्नानपरेण गमनं नास्त्यसंभवात् ।

**एवमपरया ब्रह्मा प्रसृप्य दक्षिणपुरस्तान्मैत्रावरुणस्योपविशेत् ।**

एवमित्युपस्थानादि जपान्तमतिदिश्यते ।

**तमन्वञ्च ऋत्विजः प्रसर्पकाः ।**

ऋत्विग्ग्रहणं प्रसर्पकविशेषणम् । ये प्रसर्पका ऋत्विजश्च ते ब्रह्माणं प्रसर्पन्तमनु तेनैव द्वारेण प्रसर्पयेयुः[5] । ये दशपेये वक्ष्यन्ते त एवेत्यर्थः । तेनार्थितया दिदृक्षया च प्रसृप्तानामत्र प्रसङ्गो नास्तीति तेषामयं नियमो न भवति ।

**पूर्वेणौदुम्बरीमपरेण धिष्ण्यान्यथान्तरमनूपविशन्ति ।**

इदमपि तेषां स्थानविधानम् । यथान्तरं यथासंनिकृष्टमित्यर्थः । यो यस्य चमसभक्षसंबन्धितया संनिकृष्टः स तस्य समीपमुपविशतीत्यर्थः ।

**एतयाऽऽवृताऽऽग्नीध्र आग्नीध्रीयमप्याकाशम् ।**

आग्नीध्रोऽप्यनेन प्रकारेणोपस्थानादि जपान्तं कुर्यात् । आग्नीध्रीयमनुप्रविशेत्[6] । संछादितमसंछादितमपीत्येवमर्थमप्याकाशमिति वचनम् ।

---

१ घ. ङ. च. झ. देशगतत्वात्तथैव । २ च. °राऽभिमर्शे स° । ङ. °रा निर्वेशे । ३ ङ. °सर्पेयु° । ४ ख. ग. °त्रोक्ताश्वात्रोक्त° । ५ ङ. च. °सर्पेयुः । ६ ख. ग. घ. ङ. च. झ. °ध्रीयं तु म° ।

**दक्षिणादयो धिष्ण्या उदक्संस्थाः प्रसर्पिणाम् ।**

स्वस्य धिष्ण्यस्य पश्चादुपवेशनमुक्तं तत्र को धिष्ण्यः कस्येत्येतन्निर्णयार्थमिदमुच्यते । प्रसर्पिणो होत्रादयस्तेष्वधिकृतेषु तदधिकारार्थं पुनः प्रसर्पिग्रहणमनधिकृतस्यापि प्रसर्पिणोऽच्छावाकस्य ग्रहणार्थम् । दक्षिणादय इत्येतावतैवोदक्संस्थत्वे सिद्धे यदुदक्संस्थवचनं तज्ज्ञापयति[1] सर्वत्र दक्षिणोत्तररूपेण व्यवस्थितेषूदक्संस्थैव क्रिया कर्तव्या नान्यथेत्येवमर्थम् ।

**आद्यौ तु विपरीतौ ।**

मैत्रावरुणस्य दक्षिणतस्तस्योत्तरतो होतुरिति ।

**तेषां विसंस्थितसंचरा यथास्वं धिष्ण्यानुत्तरेण ।**

तेषां धिष्ण्यवतां स्वस्य धिष्ण्यस्योत्तरतो यो देशः स विसंस्थितसंचरो वेदितव्यः । विसंस्थितेऽसमाप्ते सवने संचर्यतेऽनेनेति विसंस्थितसंचरः ।

**दक्षिणमधिष्ण्यानाम् ॥ ३ ॥**

अधिष्ण्यानामृत्विजां दक्षिणधिष्ण्यमुत्तरेण विसंस्थितसंचरो भवतीत्यर्थः ॥ ३ ॥

**अथैन्द्रैः पुरोळाशैरनुसवनं चरन्ति ।**

याज्यानुवाक्यालिङ्गादेवैन्द्रत्वे सिद्धे सत्यैन्द्रैरितिवचनं धानादीनां निर्वापकाले या देवताः संबध्यन्ते तासामपनयनार्थम् । पुरोळाशैर्न सोमैरित्यर्थः । किंच धानादीनां पुरोळाशशब्देनैव संव्यवहारार्थम् । अनुसवनं सवने सवन इत्यर्थः । पुरोळाशाद्युक्तमित्यतिदेशादेवानुसवनत्वे सिद्धे यदनुसवनवचनं तज्ज्ञापयत्यनुसवनं चरन्त्येव नान्यदावाहनाद्यपीति ।

**धानावन्तं करम्भिणमिति प्रातःसवनेऽनुवाक्या ।**

प्रातःसवनवचनं मध्याह्नसमये प्राप्तेऽप्यस्मिन्सवन इयमेवानुवाक्या स्यान्नान्या कल्प्येत्येवमर्थम् ।

**माध्यंदिनस्य सवनस्य धाना इति माध्यंदिने तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने । होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्त्विति प्रैषो लिङ्गैरनुसवनम् ।**

प्रैष इत्येकवचनं जात्यभिप्रायं त्रयाणां पाठसिद्धत्वात् ।

**उद्धृत्याऽऽदेशपदं तेनैवेज्या ।**

अत्राप्येकवचनं पूर्ववत् । देवतादेशस्वरूपत्वादिन्द्रमितिशब्द आदेशपदमित्युच्यते । तदुद्धृत्य तैरेव प्रैषैर्यष्टव्यमित्यर्थः ।

---

१ क. °ति यद्दक्षि° । ख. ग. °ति यो द° । २ ख. ग. °क्षिणा तस्यो° । ३ ख. ग. °मित्युपदे° । ४ ख. ग. °नुवादत्वे ।

**होता यक्षदसौ यजयोस्तु स्थान आगूर्व-
षट्कारौ यत्र क्व च प्रैषेण यजेत् ।**

यत्र क्व चेतिवचनात्सार्वत्रिकोऽयं बिधिः । यत्र क्वचित्कर्मणि प्रैषेण यागे कर्तव्य एतावुद्धृत्य तयोः स्थान एतौ च कृत्वा यष्टव्यमित्यर्थः ।

**अथ स्विष्टकृतोऽग्ने जुषस्व नो हविर्मा-
ध्यंदिने सवने जातवेदोऽग्ने तृतीये सवने
हि कानिष इत्यनुसवनमनुवाक्याः ।**

अनुसवनाधिकारे पुनरनुसवनवचनं माध्यंदिने सवने पशुपुरोळाशेन सह स्विष्टकृति क्रियमाणे तस्य मुख्यत्वे सत्यप्येता एव याज्यानुवाक्या भवेयुरित्येवमर्थम् ।

**होता यक्षदग्निं पुरोळाशानामिति प्रैषो हविरग्ने वीहीति
याज्या । एतास्वनुवाक्यासु पुरोळाशशब्दं बहुवदेके ।**

एतास्वनुवाक्यासु ये पुरोळाशशब्दास्ते बहुवचनान्ताः कर्तव्या इत्येक आचार्या मन्यन्त इत्यर्थः । तत्सामानाधिकरण्यादेवं[1] चरुशब्दादयोऽपीति । पुरोडाशशब्दस्यात्र च्छत्रिन्यायेन धानादिलक्षणार्थत्वाच्च[2] बहुत्वसंबन्धः[3] ।

**विज्ञायते पूयति वा एतदृचोऽक्षरं
यदेनदूहति तस्मादृचं नोहेत ॥ ४ ॥**

पूयति स्रवतीत्यर्थः । स्रवणं तावच्छन्दोवृत्तभङ्गादक्त्वनाशः । एतन्नाश ऋचा यष्टव्यमितिसाधनत्वनाशः । अनूहे तु पुनरनष्टे साधनत्वे कस्यचित्पदस्य लक्षणया गौण्या वाऽभिधानं संभवतीति नातीव दोषः । तस्मादिमौ विधिप्रतिषेधौ ब्राह्मणे संकीर्तितावपि न्यायमूलावेवेति मन्तव्यौ । तेनायमृक्षूहप्रतिषेधः सार्वत्रिक इति मत्वा सर्वेषु यजुर्निगदेष्विति यजुःष्वेवोहमुक्तवान्भगवानाश्वलायन आचार्यः ॥ ४ ॥

**द्विदेवत्यैश्चरन्ति ।**

वक्ष्यमाणा ग्रहा द्विदेवत्यसंज्ञा भवन्ति । तेन वाय्विन्द्रवायुदेवत्योऽपि द्विदेवत्यसंज्ञो भवति । तैश्चरन्ति । तेषां याज्याप्रैषानुवाक्या वक्ष्यन्त इति संबन्धः[4] ।

**वायव इन्द्रवायुभ्यां वायवायाहि दर्शतेन्द्रवायू
इमे सुता इत्यनुवाक्ये अनवानं पृथक्प्रणवे ।**

एते द्वे ऋचौ द्वे अनुवाक्ये भवतः । ते च सहानवानं वक्तव्ये पृथक्प्रणवे च ।

---

१ ङ. च. झ. तौ । २ झ. °व चारु° । ३ झ. °त्वाद्बहु° । ४ झ. °न्धः । पू° । ५ ङ. च. झ. °शः । त° ।

पृथक्प्रणववचनमनुवाक्याद्वित्वादेव प्रणवद्वित्वे सिद्धेऽपि धिष्ण्यायामृग्द्वित्वेऽप्यनुवाक्याद्वित्वाभावात्प्रणवद्वित्वं नास्तीत्येवमर्थम् ।

**होता यक्षद्वायुमग्रेगां होता यक्षदिन्द्रवायू अर्हन्तेति प्रैषावनवानम् ।**

अत्राप्यनवानवचनं परस्परसंतानार्थम् ।

**अग्नं पिबा मधूनामिति याज्ये अनवानमेकागुरे पृथग्वषट्कारे ।**

अस्मिन्नेव प्रतीके द्वे ऋचौ द्वे याज्ये भवतः । ते च सहानवानं भवतः । तत्र याज्याद्वित्वादागुरणद्वित्वे प्राप्त एकागुरे[1] एवेति नियम्यते । पृथग्वषट्कारवचनं धर्माश्विनयाज्यासु[2][3] ऋग्द्वित्वेऽपि याज्याद्वित्वाभावात्साधनद्वारेणैकवषट्कारतां[4] वक्तुम् । यत्र पुनर्द्वाभ्यामृग्भ्यामेकमेव[5] याज्याकार्यमनुवाक्याकार्यं[6] वा साध्यते तत्र पूर्वस्या अन्ते प्रणवो न कर्तव्यो वषट्कारश्च कार्यभेदाभावात् । सामिधेनीष्वपि प्रत्यृचं प्रणवसंबन्धः कार्यभेदनिमित्त एवेति मन्तव्यः ।

**इदमाद्यनवानं प्रातःसवन इज्यानुवाक्ये ।**

अयं विधिः प्रातःसवने प्रयुज्यमानानामपि भवति नोत्पन्नानामेव । तेन वाजिनामनुवाक्याऽप्यनवानं[7] वक्तव्या । ' प्रैषौ चोत्तरयोः ' इत्यस्मादेव चशब्दादुत्तरयोरपि ग्रहयोरनुवाक्ययोरप्यनवाने सिद्धेऽन्याऽनुवाक्योत्पन्नाऽत्र नास्तीति कृत्वा प्रयुज्यमानविषयत्वमस्य सूत्रस्यावगम्यते ।

**प्रैषौ चोत्तरयोर्ग्रहयोः ।**

प्रैषौ च याज्यानुवाक्याश्चोत्तरयोर्ग्रहयोरनवानं भवन्तीत्यर्थः[8] ।

**हुत्वैतद्ग्रहपात्रमाहरत्यध्वर्युः ।**

एतद्ग्रहपात्रमाहरतीति । प्रकृतं वाय्विन्द्रवायुसंबन्धि यत्पात्रं तदित्यर्थः । गृह्यत इति ग्रहः सोमस्तस्य पात्रम् । एतदुक्तं भवति—यदेतद्वाय्विन्द्रवायुसंबन्धि ग्रहपात्रं हुत्वा तदेवाऽऽहरत्यध्वर्युरेवेति । तेनान्योऽप्यत्र ग्रहो हूयते पात्रमप्यन्यदस्तीति ज्ञायते । अध्वर्युराहरतीतिवचनात्प्रतिप्रस्थाताऽप्यत्र जुहोतीति गम्यते । तेनास्मिन्भक्ष्यमाणे प्रतिप्रस्थातर्युपह्वयाचनं कर्तव्यमित्यवगन्तव्यम् ।

**तद्गृह्णीयादेतुवसुः पुरूवसुरिति ।**

तदितिवचनमाहृतं[9] गृह्णीयान्नाऽऽह्रियमाणमित्येवमर्थम् ।

---

१ ख. ग. °गुरिति । २ ख. ग. क. °नं धर्मा° । ३ ख. ग. °ज्यानुवाक्यासु । ४ ख. ग. °रेण पृथग्वष° । ५ ख. ग. °कसवनया° । ६ ख. ग. °कार्यं च सा° । च. °कार्येण सा° । ७ ख. ग. °नंकर्तव्या । ८ ख. ग. घ. च. °वतीत्य° । ९ घ. ङ. च. झ. °तदिति ।

**प्रतिगृह्य दक्षिणमूरुमपोच्छाद्य तस्मिन्सादयित्वाऽऽकाशवतीभिरङ्गुलीभिरपिदध्यात् ।**

प्रतिगृह्येतिवचनं ग्रहस्य हस्तान्तरसंक्रमणनिवृत्त्यर्थम् । दक्षिणवचनमपोच्छादने सव्यस्य प्रापणार्थम् । तेन सव्येनापोच्छादनं भवति । तस्मिन्नितिवचनमूरोरपोच्छादितप्रदेशे सादनार्थम् । आकाशवतीभिरङ्गुलीभिरित्थंभूतेन पाणिनाऽपिदध्यात् । अङ्गुलीभिरेवाऽऽकाशवतीभिरपिधातुमशक्यत्वात् ।

**एवमुत्तरे ।**

एवमुत्तरे अपि पात्रे प्रतिगृह्य सादनापिधाने कुर्यादित्यर्थः ।

**सव्येन त्वपिधाय तयोः प्रतिग्रहो भक्षणं च ।**

प्रतिग्रहभक्षणकाले तु सव्येनापिधानं भवतीत्यर्थः ।

**मैत्रावरुणस्यायं वां मित्रावरुणा होता यक्षन्मित्रावरुणा गृणाना जमदग्निनेति । एतु वसुर्विदद्वसुरिति प्रतिगृह्य दक्षिणेनैन्द्रवायवं हृत्वाऽभ्यात्मं सादनम् । आश्विनस्य प्रातर्युजा विबोधय होता यक्षदश्विना नासत्या वावृधाना शुभस्पती इत्यैतु वसुः संयद्वसुरिति प्रतिगृह्यैवमेव हृत्वोत्तरेण शिरः परिहृत्याभ्यात्मतरं सादनम् ।**

एवमेवेति । यथा मैत्रावरुणः पूर्वमासादितमैन्द्रवायवं दक्षिणेन हृत्वाऽभ्यात्ममासादितः, एवमाश्विनः पूर्वसादितावैन्द्रवायवमैत्रावरुणौ दक्षिणेन हर्तव्य इत्यर्थः । ततस्तमुत्तरेण शिरः पश्चान्नीत्वा पुनर्दक्षिणेन शिरः पुरस्तान्नीत्वा मैत्रावरुणादप्यभ्यात्मतरं सादयेत् ।

**अनुवचनप्रैषयाज्यासु नित्योऽध्वर्युतः संप्रैषः ।**

अनुवचनादिष्वध्वर्युसंप्रैष आकाङ्क्षणीयः । अध्वर्युग्रहणमध्वर्युपुरुषाणामपि प्रदर्शनार्थम् । अत एवाध्वर्युत इत्युक्तवान्नाध्वर्योरिति । नित्यवचनं नित्य एव प्रैष आकाङ्क्षणीयो नानित्य इत्येवमर्थम् । तेन पशुसूक्तवाकप्रैषादौ न नियमेन प्रैष आकाङ्क्षणीयः ।

**उन्नीयमानेभ्योऽन्वाहाऽऽत्वा वहन्त्वसाविदेवमिहोपयातेत्यनुसवनम् ।**

उन्नीयमानेभ्य इतिवचनं चमसेषून्नीयमानेभ्यः सोमेभ्य इत्यर्थः । अनुसवनं सवने सवन एतेषामेकैकं सूक्तमनुब्रूयादित्यर्थः ।

---

१ ख. ग. °शे छाद° । २ क. ङ. ञ. °त्यवचन ए° ।

**होता यक्षदिन्द्रं प्रातः प्रातः सावस्य होता यक्षदिन्द्रं माध्यंदिनस्य सवनस्य होता यक्षदिन्द्रं तृतीयस्य सवनस्येति प्रेषितः प्रेषितो होताऽनुसवनं प्रस्थितयाज्याभिर्यजति ।**

एतैस्त्रिभिः प्रैषैर्यथालिङ्गमेव प्रेषितो होताऽनुसवनं स्वाभिः प्रस्थितयाज्याभिर्यजति । होतृग्रहणं होतुरेव प्रैषेण[1] प्रैषणं नान्येषामित्येवमर्थम् । अनुसवनं सवने सवने प्रैषेण प्रेषितो होतैव यजेदित्यर्थः ।

**नामादेशमितरे ।**

इतरे प्रशास्त्रादयो नामादेशं प्रेषिता यजेयुर्न होता । तेन यद्यप्यध्वर्यवो होतर्यजेति प्रेष्यन्ति तथाऽप्यत्र प्रशास्तैव प्रेषितो यजेत् । नामादेशमिति । नामाऽऽदिश्याऽऽदिश्येत्यर्थः ।

इतरेषां क्रमस्वरूपे आह—

**प्रशास्ता ब्राह्मणाच्छंसी पोता**
**नेष्टाऽग्नीध्रः । अच्छावाकश्च ।**

सूत्रभेदकरणं तस्यैवोत्तरसूत्रे विशेषविध्यर्थम् ।

**उत्तरयोः सवनयोः पुराऽऽग्नीध्रादिदं ते सोम्यं मधु मित्रं वयं हवामह इन्द्र त्वा वृषभं वयं मरुतो यस्यहि क्षयेऽग्ने पत्नीरिहाऽऽवहोक्षान्नाय वशान्नायेति प्रातःसवनिक्यः प्रस्थितयाज्याः ।**

पुनः प्रस्थितयाज्यावचनं प्रशास्त्रादिसंबन्धिनीनामपि तत्संज्ञाप्रापणार्थम् । अच्छावाकस्यात्र नोच्यते ‘ प्रातर्यावभिरागतमिति यजति ’ इति स्वावसरे वक्ष्यते ।

**पिबा सोममभियमुग्रतर्द इति तिस्रोऽर्वाङेहि सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङिन्द्राय सोमाः प्रदिवो विदाना आपूर्णो अस्य कलशः स्वाहेति माध्यंदिन्यः । इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिन्द्रावरुणा सुतपाविमं सुतमिन्द्रश्च सोमं पिबतं बृहस्पत आ वो वहन्तु सप्तयो रघुष्यदोऽमेव नः सुहवा आहिगन्तनेन्द्राविष्णू पिबतं मध्वो अस्येमं स्तोममर्हते जातवेदस इति तार्तीयसवनिक्यः सोमस्याग्ने वीहीत्यनुवषट्कारः ।**

अयमनुवषट्कारः कर्तव्यः ।

अनुवषट्कारस्य प्रवृत्तिविषयमाह—

---

१ ङ. च॰ °ण प्रेष° ।

**प्रस्थितयाज्यासु शस्त्रयाज्यासु मरुत्वतीये हारियोजने महिम्नि । आश्विने चतुरो अह्नये ।**

सूत्रभेदकरणं वैषम्यख्यापनार्थम् । वैषम्यं च शस्त्रान्ते क्रियमाणाऽपि शस्त्रयाज्या न भवतीत्येवमर्थम् । तेनायाज्यमाश्विनमित्यवगतं भवति ।

**तदेषाऽभि यज्ञगाथा गीयते । ऋतुयाजान्द्विदेवत्यान्यश्च पात्नीवतो ग्रहः । आदित्यग्रहसावित्रौ तान्स्म माऽनुवषट्कृथा इति ।**

एतद्यज्ञगाथात्मको वेदो यष्टारं शास्ति । गाथाशब्देन ब्राह्मणगता ऋच उच्यन्ते । यज्ञार्था गाथा यज्ञगाथा सैषा तदनुवषट्कारविधानं प्रत्युच्यत इत्यर्थः । कोटिद्वयसंकीर्तनं सानुवषट्कारा अननुवषट्काराश्चैतावन्त एवेति ज्ञापनार्थम् ।

**प्रतिवषट्कारं भक्षणम् ।**

प्रतिवषट्कारं भक्षणे प्रयत्नं कुर्यात् । नात्र भक्षो विधीयतेऽन्यत्र विहितत्वात् । तेन वचनान्तरेण विहिते भक्षे तस्याऽऽवृत्तिमात्रमत्र गुणो विधीयते । यत्र द्विर्वषट्कारोऽस्ति तत्र भक्षोऽपि द्विरावर्तते । यत्र तु सकृदेव वषट्करोति तत्र तु सकृदेवेति सिद्धम् ।

**तूष्णीमुत्तरम् ।**

उत्तरं प्राशनं तूष्णीमेव कर्तव्यम् । वषट्कारद्वयप्रसङ्गादत्रैवेदमुक्तम् ।

**एत्यध्वर्युः ।**

आहवनीयप्रदेशात्सद आगच्छतीत्यर्थः ।

**अयाळग्नीदिति पृच्छति ।**

आगच्छन्तमध्वर्युं होता पृच्छतीत्यर्थः ।

**अयाळिति प्रत्याह ।**

प्रत्याहाध्वर्युरित्यर्थः ।

**स भद्रमकर्यो नः सोमस्य पाययिष्यतीति होता जपति ॥ ५ ॥**

होतृग्रहणमध्वर्य्वधिकारात् ॥ ५ ॥

**ऐन्द्रवायवमुत्तरेऽर्धे गृहीत्वाऽध्वर्यवे प्रणामयेदेष वसुः पुरूवसुरिह वसुः पुरूवसुर्मयि वसुः पुरूवसुर्वाक्पा वाचं मे पाह्युपहूता वाक्सह प्राणेनोप मां वाक्सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ।**

इतरे पात्रे सव्येनापिधायैन्द्रवायवं दक्षिणेन हस्तेनोत्तरे भागे गृहीत्वाऽध्वर्योरपि ग्रहणाय प्रणामयेदेष वसुरिति मन्त्रेण ।

**अध्वर्य उपह्वयस्वेत्युक्त्वाऽवघ्राय नासिकाभ्यां वाग्देवी सोमस्य तृप्यत्विति भक्षयेत्सर्वत्र ।**

अत्रोपह्वविधानं क्रमार्थमुत्तरत्र विहितत्वात् । नासिकाभ्यामितिवचनं नासिकाद्वये-नावघ्राणं नियमेन कर्तव्यं तेनान्यत्रेन्द्रियकार्यमनियमेन कर्तव्यमेकेन द्वाभ्यां वेति[2] सिद्धम् । सर्वत्रेतिवचनमन्यत्राप्ययमेव सोमभक्षणमन्त्रः स्यादित्येवमर्थम् ।

**प्रतिभक्षितं होतृचमसे किंचिदवनीयानाचम्योपह्वा-नादि पुनः संभक्षयित्वा न सोमेनोच्छिष्टा भवन्ती-त्युदाहरन्ति शेषं होतृचमस आनीयोत्सृजेत् ।**

होत्रा भक्षितमध्वर्युणा च[3] भक्षितं होतृचमसे किंचिदासिच्यानाचम्यैवोपह्वानादि पुनैः[4] सह भक्षयित्वा शेषं होतृचमस आनीय तत्पात्रमुत्सृजेत् । न प्रागुत्सृजेदित्यर्थः । पुनर्भक्षे प्रतिप्रस्थातर्युपह्वयाचनं कर्तव्यम् । अस्य सूत्रस्य मध्ये भक्षणनिमित्ताशुचित्वनिर्बर्हणाय[5] प्रसक्तमाचमनमकृत्वोपह्वादि कर्तव्यमित्युक्तम् । अनाचम्योपह्वानादीति । सोऽयमाचमन-प्रतिषेधः सोमभक्षणेऽशुचित्वाभावादुक्त इति तदुपपादनार्थं[6] तत्सूत्रमध्य एव ' न सोमेनो-च्छिष्टा भवन्तीत्युदाहरन्ति ' इत्युक्तवानाचार्यः । उदाहरन्तीतिवचनादिदमपि स्मृतिवचन-मिति * दर्शयति । सोमेनेति । सोमभक्षणेनेत्यर्थः । तेनान्यद्रव्यभक्षणेनाशुचित्वमेवेति गम्यते । सोमाधिकारे पुनः सोमग्रहणं सर्वसोमभक्षणे प्रापणार्थम् ।

**एवमुत्तरे ।**

एवमुत्तरे अपि ग्रहपात्रे भक्षयेत् ।

तत्र विशेषमाह—

**न त्वेनयोः पुनर्भक्षः ।**

अनयोरपि प्रतिप्रस्थातर्युपह्वयाचनमस्ति ।

**न कंचन द्विदेवत्यानामनवनीतमवसृजेत् ।**

द्विदेवत्यानां मध्ये कंचन ग्रहं होतृचमसेऽनवनीतं नोत्सृजेदित्यर्थः ।

**मैत्रावरुणमेषवसुर्विदद्वसुरिहवसुर्विदद्वसुर्मयिवसु-र्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाह्युपहूतं चक्षुः सह मन-**

---

* घ.—उशना—न सोमेनोच्छिष्टा भवन्तीति श्रुतिः ।

---

१ ख. ग. घ. °व्यं ना° । २ ङ. झ. चेति । ३ च. °च प्रति भ° । ४ ख. ग. °नः संभ° । ५ ख. ग. घ. ङ. च. झ. °निर्हरणा° । ६ ख. ग. घ. °दुपपादना° ।

**सोप मां चक्षुः सह मनसा ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ।**

अध्वर्यवे प्रणामयेदिति शेषः ।

**अक्षीभ्यां त्विहावेक्षणं दक्षिणेनाग्रे ।**

पश्चात्सव्येनेत्यर्थः ।

**सव्येन पाणिना होतृचमसमाददीतैतु वसूनां पतिर्विश्वेषां देवानां समिदिति ।**

मैत्रावरुणपात्रोत्सर्गान्तं कर्म कृत्वा दक्षिणेनाऽऽश्विनमपिधाय सव्येन पाणिना होतृचमसमाददीत मन्त्रेण । पाणिग्रहणमपिधानमपि पाणिनैवाऽऽकाशवत्यङ्गुलियुक्तेन कुर्यान्नाङ्गुलीभिरेवेत्येवमर्थम् ।

**तस्यारत्निना तस्योरोर्वसनमपोच्छाद्य तस्मिन्सादयित्वाऽऽकाशवतीभिरङ्गुलीभिरपिदध्यात् ।**

तस्येति । सव्यस्येत्यर्थः । ऊरोरितिवचनमूरोरेकदेशस्य यावत्प्रयोजनमपोच्छादनं न सर्वस्येत्येवमर्थम् । अपिधानमपि सव्येनाधिकृतत्वादन्यस्यान्यत्र व्यापृतत्वात् ।

**आश्विनं यथाहृतं परिहृत्य पुनः सादयित्वाऽध्वर्यवे प्रणामयेदेषवसुः संयद्वसुरिहवसुः संयद्वसुर्मयिवसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाह्युपहूतं श्रोत्रं सहाऽऽत्मनोप मां श्रोत्रं सहाऽऽत्मना ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ।**

होतृचमसं सव्येनापिधाय ततो दक्षिणेनाऽऽश्विनं गृहीत्वा शिरसो दक्षिणतः पश्चान्नीत्वा तस्यैवोत्तरतः पुरस्तादानीय स्वस्थान एवैनं सादयित्वा ततः प्रणामादि कुर्यात् ।

**कर्णाभ्यां त्विहोपोद्यच्छेद्दक्षिणायाग्रे निधाय होतृचमसं स्पृष्ट्वोदकमिळामुपह्वयते ।**

आश्विनमुत्सृज्य ततो दक्षिणेनैव पाणिना होतृचमसं निधाय स्पृष्ट्वोदकमिळामुपह्वयते ।

**उपोद्यच्छन्ति चमसान् ।**

इळोपह्वानकाले चमसिनः स्वं स्वं चमसमिळासमीप उद्यच्छन्ति चमसाध्वर्यवो वा ।

**अवान्तरेळां प्राश्याऽऽचम्य होतृच-
मसं भक्षयेदध्वर्य उपह्वयस्वेत्युक्त्वा ।**

अवान्तरेळाप्राशनविधानमत्र क्रमार्थम् । आचमनविधानं नियमार्थम् । इळोपह्वानानन्तरमवान्तरेळाप्राशनमेव कृत्वाऽऽचम्य चमसमेव भक्षयेदिति । तेनेदानीमिळाभक्षणं नास्तीति ज्ञायते । इदमप्यनेन ज्ञायते—प्रकृतावान्तरेळाप्राशनमिळाप्राशनं च कृत्वा पश्चाच्छौचार्थमाचमनं भवति न तयोर्मध्येऽपीति । 'अध्वर्य उपह्वयस्व' इत्युक्त्वा 'भक्षयेत्' इत्यनेन वचनेनात्र चत्वारोऽर्थाः सूचिता भगवता सूत्रकारेण । तत्रायमेकोऽर्थः— 'नानुपहूतेन सोमः पातव्यः । न वै सोमपीथेन ह वार्धुको भवति' इति श्रुतिवचनादुपहूतेनैव सोमो भक्षयितव्य इति । अयमपरोऽर्थः—उपहवयाचनं कर्मनामधेयेन संबध्यते 'नोपह्वयस्व' इत्येवंमन्तेन वाक्येनेति । अयमप्यपरोऽर्थः—यत्र क च सोमे वषट्कारेण वा समाख्यया वा भक्ष्यमाणे होमाभिषवनिमित्तेन भक्षणेनैकस्मिन्पात्रे प्रतिभक्षितया सह भक्षो नास्ति तत्राध्वर्यावेवोपहवयाचनमिति । अयं चापरः—भक्षणमपि कर्तव्यमिति । एतदुक्तं भवति—अवान्तरेळां प्राश्येळाभक्षणमकृत्वाऽऽचम्य होता स्वचमसं भक्षयेदध्वर्या उपहवमिष्ट्वा 'वाग्देवी' इत्यनेन मन्त्रेणेति ।

**दीक्षितो दीक्षिता उपह्वयध्वम् ।**

दीक्षितश्चेद्धोता तदा दीक्षिता उपह्वयध्वमित्युक्त्वा स्वचमसं भक्षयेत् ।

**यजमाना इति वा ।**

दीक्षित इत्यनुवर्तते । यजमाना उपह्वयध्वमित्युक्त्वा वा भक्षयेत् ।

**मुख्यान्वा पृथग्घोत्रका उपह्वयध्वमितीतरान् ।**

एवं वोपहवयाचनं दीक्षितस्य मुख्यानध्वर्य्वादीन् । 'अध्वर्य उपह्वयस्व, ब्रह्मन्नुपह्वयस्व, उद्गातरुपह्वयस्व' इति पृथगुक्त्वाऽमुख्यान्सर्वान्सकृदेव 'होत्रका उपह्वयध्वम्' इत्येवमर्थः ।

**एवमितरे ।**

अदीक्षितो दीक्षितश्च होता यथोक्तमुपहवयाचनं कृत्वा स्वं चमसं भक्षयेदित्युक्तम् । एवं दीक्षिता अदीक्षिताश्च मैत्रावरुणादयः स्वं स्वं चमसं भक्षयेयुः । तेनैवोपहवयाचनप्रकारेण दीक्षितानामयमेवोपहवयाचनप्रकारः ।

---

१ ख. ग. °व्यः । तेन । २ ख. ग. हव्यवार्धु° । ३ ख. ग. °पह्वयते नैवं सो° । ४ ङ. च. झ. °र्थः । क° । ५ घ. झ. संबुध्यन्ते नो° । ६ ख. ग. घ. ङ. च. झ. °वमेतेन । ७ घ. °तयोः स° । ८ झ. °ध्वर्योरेवो° । ९ ख. ग. घ. ङ. °वंचोप° ।

सर्वत्र प्रतिभक्षिणि सत्यसति वाऽदीक्षितानां क्वचिद्विशेषोऽस्तीत्याह—

**यथासभक्षं त्वदीक्षिताः ।**

यो यस्य सभक्षः स यथासभक्षः । सभक्षो नाम समानभक्षः । एतदुक्तं भवति—एकस्मिन्काल एकस्मिन्पात्रे ययोर्भक्ष उत्पद्यते तयोरन्यतरोऽन्यतरं प्रति सभक्ष इत्युच्यते । स एव होमाभिषवकर्ता वषट्कर्तारं[1] प्रति सभक्ष इत्यर्थः[2] । यत्रैवं भवति तत्र तमेवोपहूय भक्षयेत्त्वाध्वर्युमिति[3] । अदीक्षितानामेवायमपवादः । दीक्षितानां तु ग्रहेषु चमसेषु च दीक्षिता उपह्वयध्वमित्यादयस्त्रय एव प्रकाराः, नान्यैः[4] क्वचिदपीति ।

**मुख्यचमसादचमसाः ।**

होता स्वं चमसं भक्षयेदित्युक्त्वा 'एवमितरे' इत्युक्तं तेन होतुरन्येषां सर्वेषां भक्षणं विहितमिति मन्यमानाश्चमसिनश्चमसेभ्यो भक्षयन्ति । अचमसाः पुनः प्रत्यासत्त्या[5] स्ववर्ग्यस्य मुख्यस्य[6] द्वितीयस्य तृतीयस्य[7] वाऽऽत्मनोऽनन्तरतमस्य[8] चमसवतश्चमसान्भक्षयेयुः । यस्य पुनर्होमाभिषवनिमित्तं भक्षणमस्ति तस्य तदेव भवति । इतरेषां मुख्यस्य चमसादिति ये भ्रमन्ति तेषां भ्रान्तिमपनुनुत्सुरपि पूर्वपक्षेऽनुष्ठाननिर्वाहं वर्णितवानाचार्यः । एवंप्रकारेष्वेवं न्यायोऽनुसर्तव्य इति प्रदर्शयितुं मुख्यशब्दोऽप्यत्रापेक्षितो[9] गृह्यते ।

प्रत्यासत्त्यानुगुण्यादेनं पक्षं दूषयति—

**द्रोणकलशाद्वा ।**

वाशब्दः पक्षं व्यावर्तयति । नात्राचमसानां सोमभक्षणमस्ति विधानाभावात् । सोमभक्षणस्य हि निमित्तं वषट्कारो होमाभिषवौ चमसिता च । अचमसानां[10] तु तेषां निमित्तानामन्यतममपि[11] नास्ति । अतस्तेषामत्र भक्षो नास्तीति सिद्धम् । द्रोणकलशात्तु भक्षणमस्ति वचनात् । 'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्तः' इति श्रुतिवचनम् । तेन द्रोणकलशे हारियोजनशेषस्य[12] चमसिभिरचमसैश्च भक्षणं विहितम् । तदनेन प्राप्तं भक्षणमयं सूत्रकारोऽवघ्राणस्वरूपेण विधास्यति । तदेवंरूपमेवानेनोच्यते न भक्षणान्तरमित्यवगन्तव्यम् ।

**उक्तः सोमभक्षजपः सर्वत्र ।**

य उक्तः सोमभक्षणमन्त्रो वाग्देवीति स सर्वत्र सोमभक्षे भवति न द्रव्यान्तरभक्षे । पूर्वं सर्वत्रग्रहणं द्विदेवत्येष्वेव चरितार्थमिति पुनस्तद्विधीयते ।

---

१ च. °भक्षणे स° । २ ङ. च. झ. °र्थः । तत्रै° । ३ ङ. झ. भक्षयाति । ४ ख. ग. °न्यः कश्चिद्° । ५ घ. °त्त्याऽऽसन्नस्य स्व° । ६ घ. °स्य वा द्वि° । ७ क. ख. ग. °स्य चाऽऽ° । ८ ङ. च. झ. °नोऽन्त° । ख. ग. °नोरन्त° । ९ ङ. च. झ. °ब्दोऽत्राऽऽपेक्षिको गृ° । १० ख. ग. °मसिनां । ११ क. घ. ङ. च. झ. °मदपि । १२ ख. ग. °नस्य शेषे च° ।

चमसानां भक्षणमुक्त्वा तत्प्रसङ्गेन सर्वत्र सोमभक्षस्य निमित्तमुद्गात्रादिचमसभक्षयितृविचारव्याजेन दर्शयितुमाचार्यान्तरमतान्युपन्यस्यति स्म—

**होतुर्वषट्कारे चमसा हूयन्त उद्गातुर्ब्रह्मणो यजमानस्य तेषां होताऽग्रे भक्षयेदिति गौतमो भक्षस्य वषट्कारान्वयत्वात् ।**

सोमभक्षणे त्रीणि निमित्तानि श्रुतौ निर्दिष्टानि । वषट्कर्तुः प्रथमभक्ष इति प्राथम्यविशिष्टं भक्षणं वषट्कारनिमित्तं विदधाति । अभिषुत्य हुत्वा भक्षयतीति होमाभिषवनिमित्तं विदधाति । होतृचमस इत्यादिसमाख्याबलात्साऽपि समाख्या भक्षणे निमित्तमिति गम्यते । तत्र होमाभिषवावस्मदीयेषु न स्त इति तन्निमित्तस्य भक्षस्यात्र विचारो न कृतः । तत्र वषट्कारनिमित्तं समाख्यानिमित्तं च भक्षणं विहितमेवास्तीति मन्यमानो गौतमस्तेषां होताऽग्रे भक्षयेदित्युक्तवान् । अग्रवचनसामर्थ्यादुद्गात्रादयोऽपि पश्चाद्भक्षयेयुरित्यस्याभिप्रायोऽवगम्यत एव । होतृग्रहणं शस्त्रिणां चतुर्णामपि प्रदर्शनार्थम् । उद्गात्रादिचमसग्रहणं च सर्वचमसानां प्रदर्शनार्थम् । तथा हि सर्वे चमसाः शस्त्रिणां वषट्कारेषु हूयमाना दृश्यन्ते । किं त्वेषां त्रयाणां विशेषोऽस्ति—सर्वदाऽपरवषट्कारेषु हूयन्त इति । भक्षस्य वषट्कारान्वयत्वादिति । वषट्कारनिमित्तत्वादित्यर्थः ।

एवं गौतमेनोक्ते समाख्यया भक्षो न विधातुं शक्यत इति मन्यमानस्तौल्वलिराह—

**अभक्षणमितरेषामिति तौल्वलिः कृतार्थत्वात् ।**

वषट्कर्तृभक्षणेनैव शेषस्य प्रतिपत्त्यन्तरान्वेषणे नैरपेक्ष्यं भवतीति कृतार्थत्वादित्युक्तम् । यदि परं समाख्याऽपि भक्षस्य विधायिका स्यात्तदा तस्मिन्कृतेऽप्यकृतार्थमेवावतिष्ठते । सा च न विधायिका नामधेयतयाऽपि तादृशानामेव पदानां समन्वयदर्शनादिति ।

एवमुक्ते गाणगारिर्गौतमपक्षमेव समर्थयितुमाह—

**भक्षयेयुरिति गाणगारिरतः संस्कारत्वात्का च तच्चमसता स्यान्न चान्यः संबन्धः ।**

उद्गात्रादयोऽपि भक्षयेयुः । वषट्निमित्तभक्षणेन संस्कृतानामपि शेषाणामस्मात्समाख्याभक्षणादपि संस्कारत्वात् । वचने सति संस्कृतानामपि संस्कारस्य संभवोऽपीत्यर्थः । येऽतत्संस्कारत्वादिति पठन्ति तेषामयमर्थः—योऽयं समाख्याभक्षात्संस्कारः स वषट्कारभक्षसंस्कारो न भवति ततोऽन्यत्वादित्यर्थः । अन्यत्वे चाविरोधात्समुच्चय एवेत्यर्थः । ननु समाख्याभक्षणं न विदधातीत्युक्तम् । सत्यम् । स्वरूपेण न विदधाति कार्यतस्तु विदधात्येव । कथम् । ज्योतिष्टोमाधिकारनियोगः स्वप्रकरणाधीतसकलपदोद्बोधितपदार्था-

---

१ ख. ग. व. °तः । स त°। २ ख. ग. व. संबन्धोऽस्ती° । ३ ख. ग. घ. °त्वेनावि°। ४ ङ. °णादधी ।

वच्छिन्नः प्रतीयमानः कार्यात्मकत्वादात्मनः स्वावच्छेदकभूतानपि कार्यतयाऽवग+मय-न्होतृचमसपदा॑दप्यभिहितान्संबन्धविशेषान्स्वावच्छेदभूतान्प्रमाणान्तरसिद्धानलभमानः स्वय-मेव तान्संबन्धविशेषान्कार्यतयाऽवगमयतीत्येवम् । स च संबन्धविशेषो होताऽस्मिंश्चम-तीति होतृचमस इति एतं॑ मुक्त्वाऽन्य स्वस्वाम्यादिलक्षणसंबन्धोऽत्र न संभवति । एवम-प्यर्थं सूत्रकारः सूचितवान् 'का च सच्चमसता स्यान्न चान्यः संबन्धः' इति वदन् । यदा चमसिनां चमसेषु वषट्कारनिमित्तं समाख्यानिमित्तं च भक्षद्वयमागच्छति तदा पूर्वं वषट्काराद्भक्षयित्वा होमाभिषवभक्षणे च कृते ततः समाख्यातो भक्षयेत् । यत्र पुनः प्रतिभक्षयिता॑ नास्ति तत्रोभौ भक्षौ तन्त्रेण सिध्यतः॑ । समाख्यानिमित्तं वषट्कारनिमित्तं च भक्षयेयुः सानुवषट्कारेषु सर्वत्र द्विरावृत्तिरस्त्येव ।

**भक्षयित्वाऽपाम सोममसृता अभूम शं नो भव हृद आपीत इन्दाविति मुखहृदये अभिमृशेरन् ।**

भक्षणानन्तरमेताभ्यामृग्भ्यां मुखहृदये अभिमृशेरन्नद्भिर्यथासंख्येन । अनयोराप्याय-नत्वं दर्शयिष्यति 'प्रतिप्रदाय द्रोणकलशमात्मानमाप्याय्य' इति । आप्यायनत्वे चाद्भिः संमर्शनं भवत्येवेति ।

**आप्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा इति चमसानाद्योपाद्यान्पूर्वयोः सवनयोः ।**

स्वं स्वं चमसं द्वाभ्यामृग्भ्यामद्भिरमिमृशेरन्पूर्वयोः सवनयोराद्यान्द्वितीयांश्चचमसान् ।

**आद्यांस्तृतीयसवने ।**

तृतीयसवन आद्यानेव चमसानभिमृशेरन् । एतदप्याप्यायनं 'चमसमाप्याययत्याभि-रूपाभ्याम्' इति फलचमसे श्रुतौ दर्शनात् ।

**सर्वत्राऽऽत्मानमन्यत्रैकपात्रेभ्यः ।**

एकपात्राण्यूर्ध्वपात्राणि । तानि वर्जयित्वा सर्वत्राऽऽत्मानमाप्याययेयुः । आत्मशब्दे-नात्र मुखहृदये उच्येते ।

**आप्यायितांश्चमसांन्सादयन्ति ते नाराशंसा भवन्ति ॥ ६ ॥**

नाराशंससंज्ञा भवन्तीत्यर्थः । अन्वर्थसंज्ञेयम् । नाराशंसा॑ नाम त्रयः पितृगणा ऊमा

---

+ क.—ज्ञापयन् ।

---

१ ङ. च. °दाद्यभि° । २ घ. °श्चमसे चम° । ३ ख. ग. ङ. च. एतमु° । ४ क. ख. ग. घ. झ. °भाक्षिता । ५ ङ. च. झ. °तः । वषट्कारानिमित्ते भक्षे सा° । ६ घ. ङ. च. झ. °सानां त्र° ।

और्वाः काव्याश्चेति । ते चानुसवनं यथासंख्येनाऽऽप्यायितानां चमसानां देवता भवन्तीति नाराशंसाश्चमसा भवन्तीति ॥ ६ ॥

**एतस्मिन्काले प्रपद्याच्छावाक उत्तरेणाऽऽग्नीध्रीयं परिव्रज्य पूर्वेण सद आत्मनो धिष्ण्यदेश उपविशेत् ।**

अच्छावाकस्य कर्मकालत्वादेवास्मिन्कर्मकाले प्रपदने सिद्धे कालोपदेशोऽच्छावाकः[1] कर्मकाल एव प्रपद्येतेत्येवमर्थम् । तेनान्ये कर्मकालात्प्रागेव प्रातरनुवाककाले प्रपद्येरन्निति सिद्धं भवति । प्रपद्येतिवचनं यजमानत्वेनान्यथा वा प्रपन्नोऽप्यच्छावाकीयत्वायास्मिन्काले नियमेन प्रपद्येतेत्येवमर्थम् । स्वस्य धिष्ण्यस्य पुरस्ताददूरे सदसो बहिरुपविशेत् ।

**पुरोळाशशकलं प्रत्तमिळामिवोद्यम्याच्छावाक वदस्वेत्युक्तोऽच्छा वो अग्निमवस इति तृचमन्वाह ।**

शकलं शकलमित्यर्थः, प्रत्तमध्वर्युणा । इळामिवोद्यम्याऽऽस्यसंमितं प्राणसंमितं वेत्यर्थः । संप्रैषपाठः स्वशास्त्रचोदनया संप्रैषस्यासंवादे सत्यप्यनुवचनत्वसिद्ध्यर्थम् ।

**अन्त्येन प्रणवेनोपसंतनुयाद्यजमानहोतरध्वर्योऽग्नीद्ब्रह्मन्पोतर्नेष्टरुतोपवक्तरिषेषयध्वमूर्जोऽर्जयध्वं नि वो जामयो जिहतान्यजाम योनिः सपत्नायामनिबाधितासो जयता भीत्वरीं जयता भीत्वर्यो[2] श्रवद्व इन्द्रः शृणवद्वो अग्निः प्रस्थायेन्द्राग्निभ्यां सोमं वोचतोपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमिति ।**

'अन्त्येन प्रणवेन' इत्येतावतैव प्रणवेन निगदस्य संताने सिद्धे 'उपसंतनुयात्' इतिवचनं कृत्स्नस्यास्य निगदस्यानवानत्वसिद्ध्यर्थम् ।

**समाप्तेऽस्मिन्निगदेऽध्वर्युर्होतर्युपहवं काङ्क्षते ।**

एतदध्वर्योरुपहवयाचनमच्छावाकार्थम् । समाप्त इतिवचनमुपहवयाचनकालविधानार्थम् । अस्मिन्नितिवचनमुत्तरोऽपि निगद एव न कृत्स्न उपहवमन्त्र इत्येतद्दर्शयितुम् । तेन 'प्रत्येता' इत्यादिः 'उपहूताः' इत्यन्तो निगद एव । उपहूत इत्येतावानेवोपहवमन्त्र इति वेदितव्यः ।

**प्रत्येता सुन्वन्यजमानः सूक्ता वामाग्रभीत् । उत प्रतिष्ठोतोपवक्तरुत नो गाव उपहूता उपहूत इत्युपह्वयते ।**

उपहूता इत्युक्त्वोपहूत इत्युपह्वयत इति मध्येऽध्याहारः कर्तव्यः । उपहूत इत्येष प्रत्युपहवमन्त्रः । सर्वत्रायमेव प्रत्युपहवमन्त्रोऽपेक्षितत्वादन्यस्य चानाम्नानात् ।

---

१ ख. ग. °देशादच्छा° । २ छ. ज. °र्याः श्र° ।

**उपहूतः प्रत्यस्मा इत्युन्नीयमानाया-
नूच्य प्रातर्यावभिरागतमिति यजति ।**

उपहूत इतिवचनमच्छावाकस्य ग्रहणार्थम् । तेनोन्नीयमानाय चमसाय प्रत्यस्मा इत्ये-तत्सूक्तमच्छावाक एवानुब्रूयात् । ततः प्रातर्यावभिरित्यनया यजति । एषाऽस्य प्रस्थित-याज्या ।

**निधाय पुरोळाशद्दगळं स्पृष्ट्वोदकं चमसं भक्षयेत् ।**

निधायेतिवचनादेतावन्तं कालं द्दगळमुद्यम्यैवाऽऽसीत ।

**नास्पृष्ट्वोदकाः सोमेनेतराणि हवींष्यालभेरन् ।**

सोमेनेति । सोमेन संपृक्ता इत्यर्थः । तेन सोमं स्पृष्टवन्त उदकोपस्पर्शनमकृत्वेतराणि पुरोळाशादीनि हवींषि नाऽऽलभेरन् । पुरोळाशं स्पृष्टवतः[1] सोमस्पर्शन उदकोपस्पर्शनं विधाय तदुपपादनाय वक्तव्ये सति [ यत् ] विपरीतमुक्तं तस्यायमभिप्रायः—यथा स्पृष्टसोमस्य हविरन्तरालम्भन उदकोपस्पर्शनं तथा स्पृष्टपुरोडाशादिकस्य च सोमस्पर्शन इत्युभयथाऽपि भवतीति । न केवलमिदं तत्स्पर्शन एव तद्वत्पात्रस्पर्शनेऽपि[2] भवति । ' निधाय होतृच-मसं स्पृष्ट्वोदकम् ' इति चमसस्पर्शनेऽपि विधानात् ।

**आदायैनदादित्यप्रभृतीन्धिष्ण्यानुपस्थायापरया द्वारा सदः
प्रसृप्य पश्चात्स्वस्य धिष्ण्यस्योपविश्य प्राश्नीयात् ।**

एतद्दगळमादाय तद्धस्त एव धिष्ण्योपस्थानादि यो अद्येत्येवमन्तं कृत्वा तत्रस्थ एव तत्प्राश्नीयात् । उपविश्य प्राश्नीयादिति । उपविश्य जपित्वा प्राश्नीयादि-त्यर्थः । अपरया द्वारा प्रसर्पणविधानाद्द्वार्याभिमर्शनं च तस्यामेव सदःप्रसर्पणे कृते स्वस्यैव धिष्ण्यस्य पश्चादुपवेशने सिद्धे यत्पश्चात्स्वस्य धिष्ण्यस्योपवेशनं विद-धाति तत्तत्रैव द्दगळप्राशनार्थम् । तत्रैवोपविश्य द्दगळं प्राश्नीयात्, न बहिर्निष्क्रम्येति । इममेवार्थं शाखान्तरे चोद्योत्तरभङ्ग्या श्रुतिरेव साधयति—'तदाहुर्यदन्य ऋत्विजोऽन्तः-सदसि सोमं प्राश्नन्ति । अथ कस्मादच्छावाको बहिःसदसि प्राश्नातीति । यदेवैतदन्तः-सदसि पुरोळाशद्दगळं प्राश्नाति तेनास्यान्तःसदसि सोमः प्राशितो भवति ' इति ।

**उपविष्टे ब्रह्माऽऽग्नीध्रीयं प्राप्य हविरुच्छिष्टं
सर्वे प्राश्नीयुः प्रागेवेतरे गता भवन्ति ।**

यदाऽच्छावाक उपविष्टस्तदा ब्रह्मा तीर्थेन निष्क्रम्य बहिर्वेद्याग्नीध्रीयं प्राप्नोति । अच्छावाकश्च द्दगळं प्राश्य तीर्थेन निष्क्रम्याऽऽचम्य तं देशं प्राप्नुयात् । इतरे होत्रादयोऽ-

---

१ ख. ग. च. °वन्तः सो° । २ क. ख. ग. झ. तद्वृत्याऽत्र° ।

प्यनुपविष्ट एवाच्छावाके तं देशं प्राप्ता भवेयुः । एते सर्वे संहतास्तस्मिन्देशे हविःशेषं प्राश्नीयुः । सर्वग्रहणं पौर्णमासिककर्तृनिवृत्त्यर्थम् । आग्नीध्रीयं प्राप्येतिवचनं प्राशनस्य बहिर्वेदिदेशे सिद्धेऽप्याग्नीध्रीयमण्डपबहिर्वेदिदेशप्रापणार्थम् । तच्चार्धमन्तर्वेद्यर्धं बहिर्वेदि भवति । हविरुच्छिष्टशब्देन चात्र धानादीनां शेषमिळापात्रस्थमन्यदप्युच्यते ।

**प्राश्य प्रतिप्रसृप्य ॥ ७ ॥**

**ऋतुयाजैश्चरन्ति ।**

प्राशने प्रकृते प्राश्यवचनमन्यदप्यस्मिन्नेव काले क्षुन्निवृत्त्यर्थं भोजनादि कुर्यान्न प्रागित्येवमर्थम् । प्रतिप्रसृप्यवचनं सर्वेषु प्रतिप्रसृप्तेष्वृतुयाजचरणार्थम् ।

**तेषां प्रैषाः ।**

तेषामृतुयाजसंज्ञानां यागानां प्रैषा अपि भवन्ति ।

**पञ्चमं प्रैषसूक्तम् ।**

प्रैषसमाम्नाये यत्पञ्चमं प्रैषसूक्तं तदेषां प्रैषा भवन्ति ।

**तेन तेनैव प्रेषितः प्रेषितः स स यथाप्रैषं यजति ।**

प्रैषास्तावत्सर्वे मैत्रावरुणेन वक्तव्याः । अस्मिन्सूत्र ऋतुयाजानां याज्या यष्टारश्च विधीयन्ते । येन येन प्रैषेण यथाप्रैषं यो यः प्रेषितस्तेन तेनैव प्रैषेण स स एव यजति नान्यः । तेनैतत्साधितं भवति मैत्रावरुणस्य यष्टृत्वमपीति[1] ।

**होताऽध्वर्युगृहपतिभ्यां होतरेतद्यजेत्युक्तः ।**

यजेदिति शेषः । होतरेतद्यजेत्येताभ्यामुक्तो होता यजेत् ।

**स्वयं षष्ठे पृष्ठ्याहनि[2] ।**

पा[3]र्ष्ठिकपृष्ठ्येऽहनि स्वयमेवाध्वर्युगृहपती यजतः ।

**पश्चादुत्तरवेदेरुपविश्याध्वर्युः पश्चाद्गार्हपत्यस्य गृहपतिः ।**

अध्वर्युर्यजमानश्च निरसनं कृत्वा मन्त्रवदे[4]व तयोः पश्चादुपविश्य यजतः । पश्चादिति प्रकृते पुनः पश्चादितिवचनमन्येषामुपवेशनकालात्पश्चाद्यागकालः, काल एवोपवेशनं गृहपतेरित्येवमर्थम् । अध्वर्यू यजतमिति द्वित्वयुक्तेऽपि संप्रैषे मुख्य एवाध्वर्युर्यजति नान्यः ।

**अथैतदृतुपात्रमानन्तर्येण वषट्कर्तारो भक्षयन्ति ।**

अथेति । सर्वेष्वेवेष्टेष्वनन्तरमित्यर्थः । अत्र होता चतुर्वषट्कारः । पोतृनेष्टारौ द्विवषट्कारौ । एकवषट्कारा अन्ये । तत्र सर्वेष्विष्टेषु भक्ष्यमाणेऽनेकवषट्काराणामपि शेषा[5]विभागात्कर्तृकालैक्याच्च सकृदेव भक्षणं प्राप्नोतीति तन्निवृत्त्यर्थमानन्तर्येणेत्युक्तम् ।

---

१ क. ख. ग. घ. ङ. °त्वमिति । २ च. पृष्ण्याह° । ३ च. पार्ष्णिके ष° । ४ घ. ङ. °देत° । ५ च. °मविशे° ।

**पृथगध्वर्युः प्रतिभक्षयेत् ।**

अध्वर्युग्रहणं प्रतिप्रस्थातुरपि प्रदर्शनार्थम् । अत्रापि तन्त्रशङ्कानिवृत्त्यर्थम् । पृथक्त्वमेव तत्र विधीयत इतरत्त्वनूद्यते ।

**तस्मिंश्चैवोपहवः ॥ ८ ॥**

तस्मिन्नेव प्रतिभक्षयितर्युपहवश्च भवति । अवधारणं दीक्षिता अप्यत्र प्रतिभक्षयितारमेवोपहवं याचेरन्न दीक्षतान्सर्वानिति । अन्यत्र दीक्षितादीक्षितान्सर्वानेव ॥ ८ ॥

**पराङध्वर्यावावृत्ते सुमत्पद्ग्दे पिता मातरिश्वा छिद्रापदाधा दच्छिद्रोक्था कवयः शंसन् । सोमो विश्वविन्नीथानिनेषद्बृहस्पतिरुक्थामदानि शंसिषद्वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यतीति जपित्वाऽनभिहिंकृत्य शोंसावोमित्युच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणवमसंतन्वन् ।**

पराङितिसप्तम्यर्थे प्रथमा प्रयुक्ता, छन्दोवत्सूत्राणि भवन्तीति । ऋतुपात्रभक्षणानन्तरमध्वर्युर्होतुर्मुखत आसीनः पराङावर्तते पृष्ठतः करोतीत्यर्थः । तस्मिन्पराच्यावृत्ते[1] होता सुमदिति जपित्वाऽभिहिंकारमकृत्वा शोंसावोमित्युच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणवमसंतन्वन् । अध्वर्यावावृत्त इति[2] शस्त्रकालोपदेशार्थम् । शस्त्राङ्गमयं जपः, जपित्वेति शस्त्रेण संबन्धदर्शनात् । अनभिहिंकृत्येति प्राप्तो निषिध्यते । शोंसावेति[3] । शंसावेत्यर्थः । स एव प्रणवान्तः शोंसावोमिति पठ्यते[4] । अनेन शब्देनाध्वर्युमाहूयाभिमुखीकृत्येत्यर्थः । अनेनाऽऽहूयेतिवचनादस्य शब्दस्याऽऽहाव इति संज्ञा भवति । उच्चैर्वचनं मन्द्रस्वरप्राप्त्यर्थम् । शस्त्राङ्गत्वादाहावस्य शस्त्रस्य च मन्द्रस्वरत्वादाहावानन्तरवर्तिनः शस्त्रैकदेशस्योपांशुत्वान्मुख्यानुग्रहन्यायेनोपांशुत्वाशङ्कायां भूयसामनुग्रह एवात्राऽऽश्रयितुं युक्त इति मन्द्रस्वरसिद्ध्यर्थमुच्चैरित्युक्तवानाचार्यः । यः पुनराहावः शस्त्रावयवभूतस्य स्तोत्रियादेरेवाङ्गं स तस्यैव स्वरं भजते तेन निष्केवल्येऽनुब्राह्मणस्वरपक्ष आहावस्यापि[5] स्वरविशेषः सिद्धो भवति । तूष्णींशंस इति नामधेयम् । सप्रणवं समानप्रणवम् । तूष्णींशंसे ये प्रणवास्ते पठिता अपि संतानार्थिकैर्लाक्षणिकैः समानास्त्रिमात्रा इत्यर्थः । असंतन्वन्नित्ययमप्राप्तप्रतिषेधः, अनुगन्तत्वात्परस्य चानृतत्वात् । तेन ज्ञायते पठितोऽपि प्रणवः संतानायेति[6] । तेन शस्त्रादिनाऽऽहावेनोत्तरः संततो[7] वक्तव्यः । अत्र तूष्णींशंसस्याऽऽहावस्य च स्वरस्थानभेदात्प्राणसंततं भवति ।

---

१ ख. ग. ङ. °राच्यावृ° । २ ख. ग. °ति शास्त्रकारोप° । ३ क. °सावोमिति । ४ ङ. च. °ते । तेन । ५ ख. ग. °वस्वरस्या° । ६ ख. ग. °नाय नेति । ङ. °नार्थीये° । ७ ख. ग. संतानो व° ।

**एष आहावः प्रातःसवने शस्त्रादिषु । पर्यायप्रभृतीनां च । सर्वत्र चान्तःशस्त्रम् ।**

एषु स्थानेषु वचनान्तरेणाऽऽह्वाने विहिते शोंसावोमित्यनेनैव शब्देनाऽऽह्वानं कुर्यान्नान्येनेति नियम्यते । सूत्रत्रयेण शस्त्रादिषु प्रातरेवमाह्वयेतिवचनात्पुरोरुक्त्वात्स्तोत्रियत्वात्प्रतिपत्त्वादाश्विनेऽन्तःशस्त्रेऽपि स्तोत्रियानुरूपानुचरप्रगाथधाय्यातदनन्तरवर्तिपरिधानीयात्वाद्वचनाच्चेति । माध्यंदिने तृतीयसवने च पर्यायेभ्यः प्राक्शस्त्रादिषु वचनादध्वर्य्वादिशब्दो विधीयते । तेषु शस्त्रादिषु तयोर्विहितत्वात्तदादिभूतानां प्रतिपदादीनां तावेव भवत इति नाऽऽह्वानान्तरं कल्प्यम् ।

**तेन चोपसंतानः ।**

तेनाऽऽह्वानेनोत्तरस्योपसंतानः कर्तव्यः । चशब्दात्तस्य च पूर्वेणेति गम्यते । इदमन्तःशस्त्र विधानमसंतन्वन्नित्यप्राप्ते संताने प्रातवत्प्रतिषेधात् । शस्त्रादिभूतेनाऽऽह्वानेनोत्तरस्य संतान उक्तः ।

**शस्त्रस्वरः प्रतिगर ओथामो दैवेति ।**

शस्त्रस्य स्वर इव स्वरो यस्य स शस्त्रस्वरः । उत्तरपदलोपोऽत्र द्रष्टव्यः । शस्त्रस्वर इत्यर्थः । सवनस्वरस्याविधेयत्वादन्योऽपि यो विशिष्टः स्वरो विहितः शस्त्रस्य तस्य प्रापणार्थं वचनम् । 'ओथामोदैव' इत्ययं प्रतिगरसंज्ञो भवति । शस्त्रस्वरश्च भवति । प्रतिगीर्यते प्रत्युच्चार्यत इति प्रतिगरः । वक्ष्यमाणविशेषविशिष्टतया सकृदेव विधातुं शक्येऽपि सामान्यस्य पृथग्विधानं प्रतिगरशब्दव्यवहारेऽपि सामान्येनास्य ग्रहणार्थम् ।

**शोंसामो दैवेत्याहावे ।**

प्रतिगरो भवतीति शेषः । यत्पुनरयं प्रतिगरान्तरविधिर्मध्ये विधीयते तज्ज्ञापयति प्रतिगरान्तरमप्यस्तीति मध्यवर्तिन्याहावेऽयं नियम्यते । तेन शस्त्रमध्येऽयमेव स्यात् । शस्त्रादावयं ब्राह्मणोक्तः शंसामो दैवोमिति वा ।

**प्लुतादिः प्रणवेऽप्लुतादिरवसाने ।**

व्यवहितस्येमौ विशेषविधी, अनन्तरस्य प्रणवावसानरूपेण विषयभेदासंभवात् ।

**प्रणवे प्रणव आहावोत्तरे ।**

प्लुतादेरयमपवादः । आहावोत्तरे प्रणवे प्रणव एव प्रतिगरो भवति ।

**अवसाने च ।**

प्रणवः प्रतिगरो भवतीति शेषः । शस्त्रान्ते शस्त्रमध्ये वाऽवसानेऽप्ययं विधिर्भवति ।

---

१ ख. ग. घ. °नीयत्वा° । २ च. °यात्वाद्विच° । ३ ख. ग. घ. ङ. °ल्प्यते ते° । ४ ख. ग. ङ. समानस्व° । ५ घ. ङ. च. यः पुन° । ६ च. °न्तरो वि° । ७ ङ. च. °मध्य° । ८ ख. च. °स्त्रान्तरे श° । ९ च. झ. °ध्ये चाव° ।

**प्रणवान्तो वा ।**

विषयद्वयेऽयं विकल्पः ।

**यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति प्रणवान्त एव तत्र प्रतिगरः शस्त्रान्ते तु प्रणवः ।**

पूर्वोक्तस्य प्रतिगरद्वयस्य विषयव्यवस्थापनमात्रमत्र क्रियते । ननु यद्ययमर्थो विवक्षितः स्यात्तदैवं प्रणेतव्यं स्यात् । अवसाने चेत्यादि सर्वमकृत्वा शस्त्रान्ते चान्तःशस्त्रं प्रणवान्त इति प्रणेतुं युक्तम् । सत्यमेवं प्रणेतुं युक्तं तथा च न प्रणीतवानाचार्यः । किं कुर्मः । एवं सति प्रणीतमनुसरामः । तत्र यदि पूर्वसूत्रेऽवसानशब्दं समाप्तिवचनमभ्युपगम्य द्वाभ्यां सूत्राभ्यां शस्त्रान्ते विकल्प उक्तः, उत्तरसूत्रेणान्तःशस्त्रे प्रणवान्तविधिरिति कल्प्यते तदा शस्त्रान्ते तु प्रणव इत्यतिरिच्यते । अथ मतं यत्रेत्यादिसूत्रेऽवस्यतिशब्दसंबन्धात्कर्मचोदनायां होतारमिति होतृविषयमिदं सूत्रं पारिशेष्यात्पूर्वोक्तविकल्पो होत्रकविषय इति । तदपि नोपपद्यते । अवस्यतीत्यत्र विधानाभावात्कर्मविधौ सा परिभाषा न कर्मानुवाद इति । अतः पूर्वोक्त एवार्थः । यत्रयत्रेत्यादिप्रपञ्चोक्तिश्चैवमेवेति सूचयति । अत्र संक्षेपविस्तररूपेण प्रपञ्चोक्तिरेवाऽऽश्रिता सूत्रकारेणेति । प्रतिगरस्य शस्त्रसमकालत्वादाहावस्य च द्विवचनयुक्तत्वात्प्रतिगरशब्दवाच्यत्वाच्च कर्त्रन्तरमस्यान्वेषणीयम्[१] । अत्राध्वर्युरेव भवति । पराङध्वर्यावित्येवाधिकारात्सर्वत्र चाध्वर्युरेव भवति ' शंसामो दैवोमित्यध्वर्युः प्रतिगृणाति ' इतिदर्शनात् । ' शंसावाध्वर्यो प्रति मे गृणीहि ' इति च दर्शनात् । सवनान्तरे च ' अध्वर्यो शोंसावोम् ' इत्याहावादिदर्शनात् । अत्राध्वर्युशब्दः प्रतिप्रस्थातुरपि प्रदर्शनार्थः । गृह्णीम एतत्किमित्याध्वर्यवमत्र विधीयते शस्त्राङ्गत्वाच्छस्त्रस्य चर्ग्वेदविहितत्वात्तस्याप्यार्ग्वेदिकत्वमेवेति अध्वर्युकर्तृकत्वं तु वचनान्न समाख्यात इति सिद्धम् ।

प्रतिगरस्वरूपमुक्त्वा शस्त्रमेवानुसरति—

**भूरग्निर्ज्योतिर्ज्योतिरग्नो३म् । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रो३म् । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो३मिति त्रिपदस्तूष्णींशंसः । यद्वु वै षट्पदः पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत् ।**

त्रिपदः षट्पदो वाऽयं शंसतव्यः । त्रिपदपक्षे यथापठितमेव । षट्पदपक्षे त्रीणि[३] वाक्यानि द्विधा कृत्वा शंसेत् । तत्र द्विधाकरणेऽवसानस्थानं पूर्वैर्ज्योतिःशब्दैरग्रेऽव*स्येदिति ।

---

* क.—आदौ ।

---

१ ङ. च. °म् । तत्रा° । २ ङ. च. झ. °त्यस्यैवा° । ३ ङ. च. झ. °णि त्रीणि वा° ।

**उच्चैर्निविदं यथानिशान्तमग्निर्देवेद्ध इति ।**

उच्चैर्वचनमुपांश्वधिकारनिवृत्त्यर्थम् । निविदिति निविदां नामधेयम् । यथानिशान्तं यथापठितम् । पदे पदेऽवसायेत्यर्थः । ऐकश्रुत्यं तु शस्त्रत्वादेव प्राप्तम् ।

**नास्या आह्वानम् ।**

' आह्वानं च निविदाम् ' इत्यत्र पदसमाम्नायनिवृत्त्यर्थं निविद्ग्रहणं कृतम् । उत्तराधिकारश्च तत्रास्ति । तच्च निविद्ग्रहणं *पदसमाम्नायनिवृत्त्यर्थं क्रियमाणमुत्तराधिकारं च निवर्तयितुं शक्नोतीति प्राप्तस्यायमपवादः ।

**न चोपसंतानः ।**

अस्या निविदस्तूष्णींशंसेन सहोपसंतानश्च न कर्तव्यः । तेनासंतन्वन्निति प्रतिषेधस्तूष्णींशंसेषु परस्परमेव न पूर्वापरयोरिति+ । अत आहावेन तूष्णींशंसस्य संतानः सिद्धो भवति । स तु स्वरविरोधात्प्राणसंतान इत्युक्तः ।

**उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसंतनुयात् ।**

निविद उत्तमेन पदेन सूक्तमुपसंतनुयात् । अनुक्तत्वादिदं विधीयते । आज्यमिति सूक्तस्यैतत्स्थानापन्नस्य नाम क्रियते ।

**एतेन निविद उत्तराः ।**

अस्या निविदः शंसनप्रकारो यो विहितस्तेन सर्वा निविदः शंस्तव्या इत्यर्थः । उत्तरवचनं पूर्वा अपि निविदः सन्तीति ज्ञापनार्थम् । तेन देवेद्धो मन्विद्ध इत्यादीनां चतुर्दशानां पदानां निवित्त्वं सिद्धं भवति ।

**सर्वे च पदसमाम्नायाः ।**

अन्ये चैतशप्रलापादयो ये पदश आम्नाता मन्त्रास्ते निविद्वदेव शंस्तव्याः । निविदामपि पदश आम्नाने सत्यपि निविदां पृथग्ग्रहणं निवित्सु क्वचित्पदसमासोऽस्तीति ज्ञापनार्थम् , 'प्रेदं ब्रह्म प्रेदं क्षत्रम् ' इत्यादौ× ।

**उपसंतानस्त्वन्यत्र ।**

अस्या निविदोऽन्यासु निवित्सु पदसमाम्नायेषु च पूर्वेणोपसंतानश्च कर्तव्यः ।

**आह्वानं च निविदाम् ।**

निविद्ग्रहणं पदसमाम्नायनिवृत्त्यर्थम् । आह्वानं चान्यासु निवित्सु भवति ।

---

* क.—पदसमाम्नाय ऐतशप्रलापः । + क.—आहावशस्त्रैकदेशयोः । × क.—प्रेदं ब्रह्म प्रेदं क्षत्रमित्येते एव समस्येदिति ब्राह्मणानुरोधात् ।

---

१ ख. ग. ङ. झ. °व पू° । २ थ. °द्ध इन्द्रत्वादी° । ३ ख. ग. च. दं निर्व° ।

**आज्यायां त्रिः शंसेदर्धर्चशो विग्राहम् ।**

इदं[1] त्रिर्वचनं शस्त्रादौ प्राप्तं सूक्तादौ नियम्यते । आज्यग्रहणं सूक्ताद्यानिवृत्त्यर्थम् । तेन यत्र[3] द्वे सूक्ते त्रीणि वाऽऽज्यकार्ये विहितानि तत्राऽऽद्यस्यैवाऽऽद्यां त्रिः शंसेन्नोत्तरस्येत्येवमर्थम् । अर्धर्चश इत्यृगावानपक्षेऽप्यर्धर्चसंतानानिवृत्त्यर्थम् । विग्राहं विगृह्य विगृह्येत्यर्थः ।

क्व विग्राहः[4] कथं वा विग्राह इत्येवं निदर्शनेन दर्शयितुमाह—

**तन्निदर्शयिष्यामः । प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै । गमद्देवेभिरासनो यजिष्ठो बर्हिरासदो ३ मिति ।**

विग्रहे प्राणसंतानः कार्यः । पूर्वस्मिन्नेवार्धर्चे स विग्रहो भवति ।

**ऋगावानं चैवमेव । एतेनाऽऽद्याः प्रतिपदामनृगावानम् ।**

प्रतिपदां या आद्या ऋचस्ता एतेन प्रकारेण शंस्तव्याः । प्रतिपत्त्वे प्रतिपदामितिबहुवचनं ज्योतिष्टोमाभ्याससूचनार्थम् । तथा 'प्रथमयज्ञेनैके धर्मम्' इत्यत्र प्रथमशब्दस्तमेवार्थं सूचयति । तथा शाखान्तरे स्पष्टं वचनमस्ति 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति । तत्र वीप्सयाऽभ्यासोऽवगतस्तदाश्रयोऽयं बहुवचनप्रयोगः । अन्यत्र ऋगावानवर्जनमिति[5] । प्रतिपच्छब्दोऽयं प्रतिपत्संज्ञितं तृचमेव गृह्णाति न यौ*गिकम् । तेनाऽऽश्विनप्रतिपद्ययं धर्मो न भवति ।

**अनुब्राह्मणं वाऽऽनुपूर्व्यम् ।**

ब्राह्मणोक्तस्य क्रमस्य क्रत्वर्थत्वात्समाम्नायसिद्धस्याक्रत्वर्थत्वात्समाम्नायसिद्धस्य प्रयोगो न प्राप्नोतीति तस्यापि विकल्पेन प्रयोगसिध्यर्थमिदं सूत्रम् ।

**आहूयोत्तमया परिदधाति ।**

उत्तमायाः परिधानीयात्वे सिद्धे सत्युत्तमावचनं याज्यान्तानि शस्त्राणीत्यन्यार्थमप्युच्यमानं याज्याया उत्तमत्वभ्रान्तिं जनयतीति तद्भ्रान्तिनिवृत्त्यर्थम् ।

**सर्वशस्त्रपरिधानीयास्वेवम् ।**

सर्वासु शस्त्रपरिधानीयास्वाहूय परिदध्यात् । परिधानीयास्वितिबहुवचनेनैव सर्वत्वे सिद्धे सर्वग्रहणं होत्रकपरिग्रहार्थम् ।

---

* क.—प्रतिपद्यतेऽसौ प्रतिपदित्येवं रूपम् ।

---

१ ख. ग. च. °दं निर्व° । २ ख. ग. °क्ताद्यङ्गनि° । घ. °क्तायनि° । ३ ख. ग. °श्र पादे सू° । ४ ङ. विग्रह । ५ ख. ग. घ. °र्जमि° ।

**उक्थं वाचि घोषाय त्वेति शस्त्वा जपेदग्न इन्द्रश्च दाशुषो दुरोण इति याज्योक्थपात्रमग्रे भक्षयेत् ।**

उक्थं शस्त्रं शस्त्रसंबन्धितया कश्चिद्ग्रहो गृह्यते शस्त्रयाज्यायां हूयते च तच्छेषवद्य-त्पात्रं तदुक्थपात्रमित्युच्यते । तस्य भक्षणं वषट्कारनिमित्तत्वादविधेयम् । तदत्र क्रमार्थं निधीयतेऽग्र इति ।

**ततश्चमसांश्चमसिनः सर्वशस्त्रयाज्यान्तेषु ।**

ततश्चमसांश्चमसिनो भक्षयेयुः सर्वत्र शस्त्रयाज्यान्तेषु । भक्षणं च क्रमश्चात्र विधीयते । भक्षणेन सकृत्कृतेनैव समाख्यायाः प्रवृत्तिनिवृत्तिसंभवाद्वचनादृतेऽभ्यासो नास्तीति भक्ष-विधानम् । सर्वशस्त्रयाज्यास्विति वक्तव्ये सत्यन्तवचनमाश्विनस्य शस्त्रस्य याज्याभावात्त-दन्ते चमसभक्षणं न प्राप्नोतीति तत्संग्रहर्थम् । तेनायमर्थः—सर्वशस्त्रयाज्यासु भक्षयेयुः सर्वशस्त्राणामन्ते चेति । सर्वशस्त्राणां याज्यानां चान्ताः सर्वशस्त्रयाज्यान्ता इति विग्रहः । नन्वप्तोर्याम आश्विनशस्त्रमन्तो न भवति । सत्यं नान्तः । तथाऽप्यतिरात्रस्त्विहेत्यतिरा-त्रातिदेशात्तत्र चमसभक्षणं भवत्येव । सर्वग्रहणं होत्रकशस्त्रपरिग्रहार्थम् । एवं सर्वत्र चम-सभक्षणविधानाद्यत्रोक्थपात्रमस्ति तत्र तद्भक्षयित्वा चमसानां भक्षणम्, अन्यत्र चमसा-नामेवेति गम्यते ।

**वषट्कर्तैकपात्राण्यादित्यग्रहसावित्रवर्जम् ॥ ९ ॥**

आदित्यग्रहसावित्रग्रहयोर्वषट्कर्तुर्भक्षो नास्तीत्येतावदत्र विधीयते, अन्यदनूद्यते प्राप्त-त्वात् । प्रासङ्गिकं चेदं सूत्रम् ॥ ९ ॥

**स्तोत्रमग्रे शस्त्रात् ।**

भवतीति शेषः । शस्त्रकालपरिज्ञानमनेन क्रियते ।

**एषेति प्रोक्त उद्गातुर्हिंकारे प्रातःसवन आह्वयीरन् ।**

एषेति प्रोक्ते प्रस्तोत्रा य उद्गातुर्हिंकारस्तस्मिन्काले प्रातःसवने शस्त्रायाऽऽह्वयीरन् । बहुवचनं होत्रकशस्त्रसंग्रहार्थम् । प्रातःसवनग्रहणं होत्रकपरिग्रहार्थम् ।

**प्रतिहार उत्तरयोः सवनयोः ।**

एषेतिप्रोक्ते यः प्रतिहारस्तस्मिन्नुत्तरयोः सवनयोराह्वयीरन् ।

---

१ ङ. झ. °निमित्तं° । ख. ग. घ. °निवृत्तं° ; २ ख. ग. °वार्थवैवच° । ३ घ. झ. न्वप्तौर्या° ।

**वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात्तृचं तृचं शंसेत् ।**

एताः सप्त पुरोरुचो नामर्चः । तासामेकैकस्या उपरिष्टादेकैकं तृचं शंसेत् । सप्तवचनं षष्ठ्याः सप्तपदत्वसिध्यर्थम् ।

**वायवायाहि दर्शतेति सप्त तृचाः ।**

सप्तवचनं सप्तानां तृचानां ग्रहणार्थम् । इतरथा पादग्रहणादेकैवर्ग्यथा सप्ततृचा भवेयुस्तथाऽभ्यासितव्याः स्युस्तस्मात्सप्तवचनम् ।

**द्वितीयां प्रउगे त्रिः ।**

प्रउगमिति शस्त्रस्य संज्ञा । अस्मिञ्शास्त्रे प्रकृतिप्राप्तं यदाद्यायास्त्रिर्वचनं तद्द्वितीयायां नियम्यते न त्रिर्वचनान्तरमपूर्वं विधीयते ।

**पुरोरुग्भ्य आह्वयीत षष्ठ्यां त्रिरवस्येदर्धर्चेऽर्धर्चे ।**

विश्वान्देवानित्येषा षष्ठी । सा सप्तभिः पादैरेका, न तैः सप्तभिः पादैर्द्वे अनुष्टुब्गायत्र्याविति सप्तानां पुरोरुचामित्यत्र सप्तग्रहणेनोक्तम् । आतोऽर्धर्चमित्यनेनार्धर्चशंसनमित्युक्तम् । अर्धर्चाश्च द्विप्रकाराः समाम्नायसिद्धा लाक्षणिकाश्च । समाम्नायसिद्धाः प्रसिद्धाः । ऋचोऽर्धमर्धर्चमिति लाक्षणिकाः । तत्र कथमर्धर्चशः शंसनमिति संशये तन्निर्णयार्थं षष्ठ्यां त्रिरवस्येदर्धर्चेऽर्धर्च इत्युक्तम् । तेनास्यामृच्यवसानत्रयविधानात्समाम्नायसिद्धा एवार्धर्चाः सूत्रकारेणार्धर्चशंसने परिगृहीता इति ज्ञायते । एतत्सर्वासां विषमपदावसानानां प्रदर्शनार्थमुक्तम् ।

**उत्तमां न शंसेच्छंसन्त्येके तृच आह्वानमशंसने ।**

उत्तमायाः पुरोरुचे आशंसनेऽप्युत्तमे तृच आह्वानं कर्तव्यम् ।

**माधुच्छन्दसं प्रउगमित्येतदाचक्षते ।**

अत्रायं प्रउगशब्दः कृत्स्नवाच्यपि तृचापेक्षया प्रयुक्तः । एवमन्यत्रापि यत्र यत्रर्षिच्छन्दोभ्यां प्रउगं विशेष्यते तत्र तत्र तृचापेक्षमेव न पुरोरुङ्निवृत्त्यर्थमिति द्रष्टव्यम् ।

**उक्थं वाचि श्लोकाय त्वेति शस्त्वा जपेद्विश्वेभिः सोम्यं मध्वति याज्या प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रकाः ।**

होत्रकाणां मध्य एते शस्त्रवन्तः । एतेषां शस्त्राणि भवन्तीत्यर्थः ।

---

१ ङ. च. छ. °च अशं° ।

एते शस्त्रिण इत्युक्तं क तेषां शस्त्राणि भवन्ति किंरूपाणि च तेषां शस्त्राणीत्येतदुभयं वक्तुमाह—

**तेषां चतुराहावानि शस्त्राणि प्रातःसवने तृतीयसवने पर्यायेष्वतिरिक्तेषु च ।**

एषु स्थानेष्वेतेषां शस्त्राणि भवन्ति तानि चतुराहावानीत्येतदुभयं विधीयते । पर्यायातिरिक्तानां तृतीयसवनत्वे सत्यपि पृथग्ग्रहणमुक्थ्यशस्त्रेभ्यो यान्यन्यानि तेष्वपि शस्त्राणि भवेयुरित्येवमर्थम् । अतिरिक्तेष्वितिबहुवचननिर्देशादप्तोर्यामातिरिक्तेष्वेव भवन्ति न वाजपेयातिरिक्ते तत्रैकत्वादतिरिक्तस्येति ।

**पञ्चाऽऽहावानि माध्यंदिने ।**

अत्रापि पूर्ववदुभयं विधीयते । आहावपरिमाणवचनं निमित्ताधिक्येऽप्येतेषामेतावत्त्वसिद्ध्यर्थम् ।

इदानीमाहावस्य निमित्तानि प्रसङ्गादुच्यन्ते[1]—

**स्तोत्रियानुरूपेभ्यः प्रतिपदनुचरेभ्यः प्रगाथेभ्यो धाय्याभ्य इति पृथगाह्वानम् ।**

एतेभ्यः सर्वेभ्य आहावः कर्तव्यः, एतेषां बहूनां संनिपाते पृथक्पृथक्कर्तव्य इत्येतदुभयमत्र विधीयते । सर्वत्र यदर्थतयाऽऽहावो विधीयते तस्याऽऽदौ स कर्तव्यः ।

**होतुरपि ।**

होत्रकाणामधिकाराद्धोतृग्रहणम् । होतुरप्येतेभ्य आहावः कर्तव्यः ।

**तेभ्यश्चान्यदनन्तरम्[2] ।**

होतुरपीत्यत्राप्यनुवर्तते । स्तोत्रियादिभ्योऽनन्तरं यत्प्रतीकं[3] तत्रापि होतुर्होत्रकाणां चाऽऽहावः कर्तव्यः ।

**आदौ निविद्धानीयानां सूक्तानामनेकं चेत्प्रथमेष्वाहावः ।**

निविद्धानीयसूक्तस्य चाऽऽदौ भवति । तस्यानेकत्वे प्रथम एवाऽऽहावः । निविद्धानीयकार्यमाहावस्य निमित्तं न सूक्तस्य स्वरूपम् ।

**आपोदेवते च तृचे ।**

आपोदेवतमब्देवतमित्यर्थः । स चाऽऽग्निमारुते 'आपो हि ष्ठा' इति तृच उच्यते । तत्र चाऽऽहावः कर्तव्यः ।

---

१ च. °प्येतान्याहावस्य निमित्तानि । ते° । २ च. °भ्योऽन्यत्तदन° । ३ च. °कं विधीयते तत्राप्याहा° ।

**तेषां तृचाः स्तोत्रियानुरूपाः शस्त्रादिषु सर्वत्र।**

तेषामधिकारे पुनस्तेषामितिवचनमस्मिन्सूत्रे सर्वार्थोऽपि[१] कश्चिद्विधिरस्तीति प्रदर्शनार्थम्। तेन तृचाः स्तोत्रियानुरूपाः सर्वत्रेत्येकोऽर्थः सर्वार्थः। अपरश्च तेषां शस्त्रादिषु य आदेशाः स्तोत्रियानुरूपास्तेष्वाहावः कर्तव्य इति व्यवहितयोजनया भवत्यर्थः।

**माध्यंदिने प्रगाथास्तृतीयाः।**

माध्यंदिने तेषामेव शस्त्रेषु तृतीया आदेशास्ते प्रगाथा वेदितव्याः।

**यथाग्रहणमन्यत्।**

अतोऽन्यत्सर्वं यथाग्रहणमेव वेदितव्यम्। प्रगाथ इत्युक्ते प्रगाथः प्रगाथस्तोत्रिय इत्युक्ते स्तोत्रियो भवति नान्यथेति।

**याज्यान्तानि शस्त्राणि।**

यत्र बहूनां शस्त्राणामृच आम्नायन्ते याज्याश्च विधीयन्ते तत्र कियदेकं शस्त्रमित्येतत्संशयनिवृत्त्यर्थमेतद्वचनम्। अन्यदपि प्रयोजनमस्ति, यच्छस्त्रार्थं वाग्यमनं विहितं तद्याज्यापर्यन्तमनुवर्तत इति।

**उक्थं वाचीत्येषां शस्त्वा जपः प्रातःसवने।**

प्रातःसवनवचनं स्पष्टार्थम्।

**ऊर्ध्वं च षोळशिनः सर्वेषाम्।**

षोळशिन ऊर्ध्वं यानि शस्त्राणि तेष्वयमेव शस्त्वा जपः सर्वेषां भवति। सर्ववचनं होतुरपि प्रापणार्थम्।

**उक्थं वाचीन्द्रायेति माध्यंदिन उक्थं वाचीन्द्राय देवेभ्य इत्युक्थ्येषु सषोळशिकेषु।**

उक्थ्येषु षोळशिनि चायं भवतीत्यर्थः। उक्थ्यानीति तृतीयसवने होत्रकशस्त्राण्युच्यन्ते।

**अनन्तरस्य पूर्वेण।**

यत्रानेकपदार्थाः क्रमवर्तिनः स्युरेकरूपास्तत्र यदि तेषां कस्यचिद्धर्माकाङ्क्षा स्यात्तदा तेषामेवानन्तरेण पूर्वेण धर्मविधिर्वेदितव्यः। किमुदाहरणम्। तृतीयसवने पुरोळाशाद्युक्तमित्युक्तम्। तत्र माध्यंदिनेन विधिर्भवति[२]। तथा सोमातिरेकशस्त्रैरनन्तरस्य[३] शस्त्रस्य यः शस्त्वा जपः स भवतीत्येवमादि द्रष्टव्यम्।

---

१ ख. ग. °र्थः। समर्थः। झ. °र्थः। अ°। २ च. °वतीत्य°। ३ ङ. ञ. झ. °स्त्रेऽन°।

स्तोत्रियेणानुरूपस्य च्छन्दःप्रमाणलिङ्गदैवतानि ।

छन्दो गायत्र्यादि । प्रमाणमेकस्मिन्नपि च्छन्दस्यूनाधिकाक्षरता । लिङ्गम् 'आवती प्रवती' इत्येवमादि । दैवतं प्रसिद्धम् । स्तोत्रियस्य यान्येतानि तान्येवानुरूपस्येत्यर्थः ।

आर्षं चैके ।

एक आचार्या आर्षं च तदेवेच्छन्ति ।

आ नो मित्रावरुणाऽऽनो गन्तं रिशादसा प्र वो मित्राय प्रमित्रयोर्वरुणयोरिति न वाऽऽयातं मित्रावरुणेति याज्याऽऽयाहि सुषुमा हि त इति षट्स्तोत्रियानुरूपावनन्तराः सप्तेन्द्र त्वा वृषभमुद्घेदभीति तिस्र इन्द्र क्रतुविदं सुतमिति याज्येन्द्राग्नी आगतं सुतमिन्द्राग्नी अपसस्परि तोशा वृत्रहणा हुव इति तिस्र इहेन्द्राग्नी उपेयं वामस्य मन्मन इति नवेन्द्राग्नी आगतं सुतमिति याज्या ॥ १० ॥

अत्र मध्ये 'आयाहि सुषुमा हि त इति षट्स्तोत्रियानुरूपौ' इत्यत्र षड्ग्रहणमासामृचां यासु कासुचिद्यदि च्छन्दोगाः स्तुवीरंस्तदा तत्तिसृभिरेव स्तोत्रियं कृत्वा शिष्टाभिरनुरूपः कर्तव्य इत्येवमर्थम् ॥ १० ॥

संस्थितेषु सवनेषु षोळशिनि चातिरात्रे प्रशास्तः प्रसुहीत्युक्तः सर्पतेति प्रशास्ताऽतिसृजेद्धोता दक्षिणेनौदुम्बरीमञ्जसेतरेऽपरया द्वारोत्तरां वेदिश्रोणीमभिनिःसर्पन्ति ।

सवनेषु संस्थितेषु मध्ये चातिरात्रे षोळशिनि समाप्ते । अतिरात्रविशेषणमतिरात्रे यः षोळशी तस्मिन्नेव समाप्ते न वाजपेयषोडशिनीत्येवमर्थम् । एतेषु चतुर्षु कालेषु होता दक्षिणेनौदुम्बरीं गत्वेतरे च स्वस्य धिष्ण्यस्याञ्जसाऽऽर्जवेन गत्वा सर्वेऽपरया द्वारा निष्क्रम्योत्तरां वेदिश्रोणीमभिनिःसर्पन्ति । तया श्रोण्या बहिर्वेदि प्राङ्मुखुरित्यर्थः । यत्र यस्मिन्कालेऽध्वर्युः 'प्रशास्तः प्रसुहि' इति ब्रूयात्तदा प्रशास्ता 'सर्पत' इति ब्रूयात् । ततो निःसर्पणं कुर्युरेतेष्वेव कालेषु । यद्यन्यस्मिन्काले ब्रूयात्तदा प्रत्यतिसर्जनमेव न निःस-

१ ख. ग. घ. ङ. झ. यद्यस्मि°।

र्पणमस्मदीयानामिति। यद्यध्वर्युर्न ब्रूयात्प्रशास्ताऽपि नातिसृजेत्तेष्वपि कालेषु ततोऽनतिसृष्टा एव निःसर्पयेयुः। सर्वथा तावदेतेषु कालेष्वतिसृष्टा अनतिसृष्टा वाऽस्मदीया निःसर्पेयुरेव नान्यस्मिन्काल इति स्थितम्। तृतीयसवनसमाप्तिरपि शस्त्रसमाप्तावेवास्माकं न हारियोजनान्ते पत्नीसंयाजान्त इति स्थितम्। पुनः सदसः प्रवेशप्रयोजनाभावात्सवनसंस्थासु निःसपर्णस्य सदःप्रवेशपर्यन्तत्वादिति।

**सृगतीर्थमित्येतदाचक्षते।**

संव्यवहाराभावेऽपि संज्ञायां नित्यत्वात्परिज्ञानार्थमुपदेशः।

**एतेन निष्क्रम्य यथार्थं न त्वेवान्यन्मूत्रेभ्यः।**

अतीर्थेन निष्क्रान्तानां बहिस्था(ष्ठा)नामपि प्राक्चेष्टतादयो नियमा यथासंभवमनुवर्तन्त इत्युक्तं प्राक्, तदनेन निष्क्रान्तानां नास्तीत्येवमर्थं यथार्थवचनम्। यथार्थवचनात्स्वैरकर्माण्यपि प्रसज्येरन्निति तन्निवृत्त्यर्थं न त्वेवान्यन्मूत्रेभ्य इत्युक्तम्। तेन यदावश्यकं तावन्मात्रमेव भवति, अतो नान्यदिति। आवश्यकमपि यच्छम्याप्रासादूर्ध्वं कर्तुं[2] शक्यते तदनेन निष्क्रम्य न कर्तव्यम्[3]। अतीर्थेनैव निष्क्रम्य तादृशं कुर्यात्, 'अनेन निष्क्रम्य शम्याप्रासात्परस्तान्न गच्छेयुः' इतिवचनात्।

**एतेन निष्क्रम्य कृत्वोदकार्थं वेद्यां समस्तानुपस्थायापरया द्वारा नित्ययाऽऽवृता सदोद्वार्ये चाभिमृश्य तूर्ष्णीं प्रतिप्रसर्पन्ति।**

एत[4] इति निष्क्रान्ता निर्दिश्यन्ते। एते निष्क्रमणानन्तरं यत्किंचिदुदककार्यमस्ति चेत्तत्कृत्वा नास्ति चेदकृत्वा वेदिं प्रविश्य वेद्यां ये धिष्ण्यास्तेषां समस्तोपस्थानं कृत्वा, उपस्थितांश्चानुपस्थितांश्चेत्येतत्कृत्वेत्यर्थः। अपरया द्वारा नित्ययाऽऽवृता मन्त्रेण सदोद्वार्ये चाभिमृश्य तूर्ष्णीं प्रतिसर्पन्ति। कृत्वोदकार्थमित्यत्र न विधीयते यथाप्राप्तमनूद्यते।

**एषाऽऽवृत्सर्पतेतिवचने।**

'सर्पतेतिवचने' इत्यनेन पूर्वोक्ताश्चत्वारः काला उच्यन्ते, तेषु[5] तस्य वचनस्य संभवात्। अतस्तेषु सर्वेषु य एष उक्तः प्रयोगो निःसर्पणादिः प्रतिसर्पणान्तः स कर्तव्यः, न केवलं प्रातःसवनान्त एवेति।

**पूर्वयैव गृहपतिः॥ ११॥**

यजमानस्तु पूर्वयैव द्वारा प्रतिसर्पणं कुर्यादेकाहाहीनेषु सर्वेषु गृहपतिरेवेति॥ ११॥

---

१ ख. ग. °या अनि°। २ च. °र्तुं न श°। ३ ख. ग. घ. ङ. च. झ. °म्। ती°। ४ च. °तेन नि°। ५ ख. ग. तेष्वेत°।

**एतस्मिन्काले ग्रावस्तुत्प्रपद्यते ।**

अस्याप्यस्मिन्नेव काले प्रपदनं न प्रातरनुवाककाल इत्यच्छावाकेन तुल्यम् ।

**तस्योक्तमुपस्थानम् ।**

अस्यापि पूर्वोक्तमुपस्थानं प्रसर्पणं च भवति ।

तत्र विशेषमाह—

**पूर्वया द्वारा हविर्धाने प्रपद्य दक्षिणस्य हविर्धानस्य प्रागुदगुत्तरस्याक्षशिरसस्तृणं निरस्य राजानमभिमुखोऽवतिष्ठते ।**

प्रसर्पणमेवात्र प्रपदनमित्युच्यते । असौ तु हविर्धानं पूर्वया द्वारा प्रपद्यते पूर्ववदेव हविर्धाने इति द्विवचनं शालायामेवोप+चारात् । शकटद्वयसंबन्धादुपचारः । हविर्धानशब्दः शालायामपि मुख्य एव योगस्याविशिष्टत्वात् । उभयोस्तत्प्रपद्य[1] [2] दक्षिणस्य शकटस्य यदुत्तरमक्षशिरस्तस्य प्रागुदग्यो देशस्तस्मिन्मन्त्रेण निरसनं कृत्वा तत्र राजानमभिमुखस्तिष्ठेत् । दक्षिणामुखः प्रत्यग्दक्षिणामुखो वा ।

**नात्रोपवेशनः ।**

निरसनोपवेशनयोः साहचर्यप्रदर्शनार्थमप्राप्त एवोपवेशनमन्त्रः प्रतिषिध्यते ।

**यो अद्य सौम्य इति तु ।**

उपविष्टस्य विहितत्त्वात्तिष्ठतो न प्राप्नोतीति विधीयते ।

**अथास्मा अध्वर्युरुष्णीषं प्रयच्छति ।**

उष्णीषं शिरसो वेष्टनं वासः ।

**तदञ्जलिना प्रतिगृह्य त्रिः प्रदक्षिणं शिरःसंमुखं वेष्टयित्वा यदा सोमांशूनभिषवाय व्यपोहन्त्यथ ग्राव्णोऽभिष्टुयात् ।**

यदा सोमलता अभिषवार्थमध्वर्यवो व्यपोहन्ति विक्षिपन्ति तदा ग्राव्णामभिष्टवनं कुर्यात् ।

**मध्यमस्वरेणेदं सवनम् ।**

इदमादीदं[3] माध्यंदिनं सवनं मध्यमस्वरेण प्रयोक्तव्यम् । इदं ग्रावस्तोत्रमारभ्य माध्यंदिनं सवनं वर्तते । तत्र स्वरग्रहणं बाधकबाधार्थम् । बार्हस्पत्येष्टौ सौमिक्य इति प्रधानोपांशुत्वं प्राप्तं तस्य बाधनार्थम् । तेन तस्यामिष्टौ प्रधानमपि मध्यमस्वरेण भवति ।

---

+ क. झ. गौणत्वात् ।

---

१ ख. ग. योर्यतम्° । २ ख. ग. घ. °द्यते द्° । ३ ङ. °दीनं मा° ।

**अभि त्वा देव सवितर्युञ्जते मन उत युञ्जते धिय आतून इन्द्र क्षुमन्तं मा चिदन्यद्विशंसत प्रैते वदन्त्वित्यर्बुदम् ।**

एतत्सूक्तमर्बुदनामधेयं भवति ।

**प्रागुत्तमाया आ व ऋञ्जसे प्र वो ग्रावाण इति ।**

सूक्ते आवपेतेति शेषः । अर्बुदस्य प्रागुत्तमाया इत्यर्थः ।

**सूक्तयोरन्तरोपरिष्टात्पुरस्ताद्वा पावमानी रोप्य यथार्थमा वाऽऽग्रहग्रहणाच्छिष्टया परिधाय वेद्यं यजमानस्योष्णीषम् ।**

सूक्तयोरुपरिष्टात्पुरस्ताद्वेति संबन्धः । सूक्ते इत्यध्याहृत्यान्तरशब्देन संबन्धः । त्रयाणामन्यतमस्मिन्स्था( मे स्था )ने पावमानीरावपेत[1] यथार्थं यावत्प्रयोजनमित्यर्थः । यावदभिषवमिति तदारम्भ आरम्भविधानात्तत्रैव ग्राव्णां व्यापारसंभवादस्य च ग्रावस्तोत्रत्वादिति । आग्रहग्रहणाद्वा[3] ग्रावस्तोत्रान्तर्भावेऽपि पावमानीनां पूयमानसोमाभिधानात्सं-पूयमानः सोमस्तावन्तं कालमनुवर्तत इति कृत्वेदमुच्यते । शिष्टयाऽर्बुदस्योत्तमया परिधाय वेद्यं यजमानस्योष्णीषं यजमानाय दातव्यमित्यर्थः ।

**आदाय यथार्थमन्त्येष्वहःसु ।**

यजमानाय दत्ते तस्यार्थप्राप्तमुच्यते नाप्राप्तं विधीयतेऽनेन सूत्रेण । दानमप्यत्र हस्ता-द्धस्तान्तरसंक्रमणमात्रं यजमानस्यैव तत्स्वमिति ।

**प्रतिप्रयच्छेदितरेषु ।**

अनन्त्येष्वहःसु येनेदं दत्तं तस्मा एव पुनः प्रयच्छेदिति प्रतिशब्दसंबन्धादवगम्यते ।

**अथापरमभिरूपं कुर्यादिति गाणगारिः ।**

अपरमिति । अपरमिदं ग्रावस्तोत्रं न पूर्वमित्यर्थः । प्रकृताविदं न प्रवर्तत इति भिन्नविषयत्वादपरशब्दप्रयोगो युक्तः । कार्यविशेषे तल्लिङ्गस्य विधानादेवाभिरूपत्वे सिद्धेऽ-भिरूपवचनं कार्यव्यत्यासे तृचव्यत्यासासिद्ध्यर्थम् । गाणगारिवचनं पूजार्थम् ।

**आप्यायस्व समेतु त इति तिस्रो मृजन्ति त्वा दशक्षिप एतमुत्यं दशक्षिपो मृज्यमानः सुहस्त्या दशभिर्विवस्वतो दुहन्ति सप्तैकामधुक्षत्पिप्युषीमिषमा कलशेषु धावति पवित्रे**

---

१ घ. ङ. °वपते° । २ ख. ग. °तमम° । ३ ख. ग. °णाय स्तो° । घ. °णाग्रा° । च. °णादाग्रा° ।

**परिषिच्यत इत्येका कलशेषु धावति श्येनो वर्म विगाहत द्वे एतासामर्बुदस्य चतुर्थीमुद्धृत्य तृचान्तेषु तृचानवदध्यात् ।**

एता द्वादश ऋचोऽनुक्रान्तास्ताश्चत्वारस्तृचा भवन्ति । अर्बुदस्य चतुर्थ्युद्धर्तव्या । उत्तमा परिधानीया । शिष्टा द्वादश । ता अपि चत्वारस्तृचा भवन्ति । एतासां पावमानीनां तृचान्तेष्वर्बुदस्य तृचानवदध्यात् । विपरीतं वा । अत्र विशेषो न शक्यते वक्तुं दुरवगमत्वात् ।

**आप्याय्यमाने प्रथमम् ।**

आप्यायनमुदकसेकः ।

**मृज्यमाने द्वितीयम् ।**

मार्जनं चूर्णमादाय हस्ताभ्यां पेषणम् ।

**दुह्यमाने तृतीयम् ।**

दोहनं प्रसिद्धम् ।

**आसिच्यमाने चतुर्थम् ।**

आसेचनमभिषवेण द्रवीकृतस्याऽऽधवनीये संभरणम् ।

**बृहच्छन्दे बृहच्छन्दे चतुर्थीम् ।**

निमित्तावृत्तावावृत्त्यर्थं वीप्सावचनम् ।

**मा चिदन्यद्विशंसतेति यदि ग्रावाणः संह्लादेरन् ।**

संह्लादनं शब्दनम् । अत्रापि निमित्तावृत्तावावृत्तिरस्ति । अस्या ऋचो निमित्ताभावेऽपि प्रयोगः स्वस्थाने चतुर्थ्या उद्धारवचनादिदमवगम्यते ।

**समानमन्यत् ।**

अर्बुदपावमानीभ्योऽन्यत्सर्वं समानं भवतीत्यर्थः ।

**अर्बुदमेवेत्येके ।**

अवधारणादिदमेव सूक्तं नान्यत्किंचित् ।

**प्र वो ग्रावाण इत्येके ।**

अत्राप्यवधारणं द्रष्टव्यम् ।

**उक्तं सर्पणम् ।**

प्रसर्पणमत्र कर्तव्यमित्यर्थः ।

---

१ ब. तृचां तृचा° ।

**स्तुते माध्यंदिने पवमाने विहृत्याङ्गारान् ॥ १२ ॥**
**दधिघर्मेण चरन्ति प्रवर्ग्यवांश्चेत् ।**

अङ्गारविहरणवचनं तत्कालपरिज्ञाने तद्व्यवायपरिहारे यत्नकरणार्थम् । दधिघर्मो नाम कर्मविशेषः । तेन चरन्ति प्रवर्ग्यवांश्चेदयं क्रतुः । न चेन्न कर्तव्यो दधिघर्मः ।

**तस्योक्तमृगावानं घर्मेण ।**

तस्येतिवचनं योगविभागार्थम् । योगविभागप्रयोजनमप्रवर्ग्येऽपि दधिघर्मस्य विधेः प्रापणमिति । घर्मेणेतिवचनमृगावानादन्यस्य घर्मेण संबद्धस्यैकश्रुत्यस्यापि प्रापणार्थम् । तेनोत्तिष्ठतावपश्यतेत्यस्याः शंसत्यादिचोदनाभावेऽप्यैकश्रुत्यं भवति ।

**इज्याभक्षिणश्च ।**

इज्या[1] च घर्मेण व्याख्याता । भक्षिणश्च घर्मेणैव व्याख्याताः । भक्षिशब्दो[2] न कर्त्रुपलक्षणार्थं[3] प्रयुज्यते कथं तर्हि *स्वात्मनोऽपि विधेयत्वाय । तेन भक्षस्य भक्षकर्तॄणां च घर्मवत्ता विधीयते ।

**होतर्वदस्वेत्युक्त उत्तिष्ठतावपश्यतेत्याह ।**

अस्यां लिङ्गजनितमेव कार्यम् । आहेतिवचनमस्या अनुवाक्यात्वं मा भूदित्येवमर्थम् । तेनोत्तरैवानुवाक्या भवति + । अनयाऽध्वर्युप्रैषरूपमभिधानं क्रियते ।

**श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाह ।**

इयमनुवाक्या ।

**श्रातं मन्य ऊधनि श्रातमग्नाविति यजति ।**
**अग्ने वीहीत्यनुवषट्कारो दधिधर्मस्याग्ने वीहीति वा मयि त्यदिन्द्रियं बृहन्मयि द्युम्नमुत क्रतुः । त्रिशुग्घर्मो विभातु म आकूत्या मनसा सह विराजा ज्योतिषा सह तस्य दोहमशीय ते तस्य त इन्द्रपीतस्य त्रिष्टुप्छन्दस उपहूतस्योपहूतो भक्षयामीति भक्षजपो यं धिष्ण्यवतां प्राश्न-**

---

* क.—भक्षस्यापि । + घ —अस्या अन्ते प्रणवकरणे विचार ऋगावानलक्षणे लिखितः। अध्वर्यूणामपि वचनम् । यद्यश्रातो ममत्तनेत्युच्यमान इति ।

---

१ घ. °ज्याश्च घ° । २ ख. ग. °ब्दोऽत्र क° । ३ ख. ग. र्थम् । आहेति वचनमस्या अनुवाक्ये प्र° ।

**मङ्गारैरभिविहरेयुः । पश्चात्स्वस्य धिष्ण्यस्योपविश्योपहवमिष्ट्वा परि त्वाऽग्ने पुरं वयमिति जपेत् ।**

धिष्ण्यवतां मध्ये यं कंचिद्धिष्ण्यवन्तं धिष्ण्येभ्यः प्राञ्चं सन्तं यद्यङ्गारैरभिविहरेयुस्तस्य नैमित्तिकमिदं, पश्चात्स्वस्य धिष्ण्यस्योपविश्योपहवं यजमानादिष्ट्वा[1] परि त्वाऽग्ने पुरं वयमिति जपेत् ।

**अनिष्ट्वा दीक्षितः ।**

दीक्षितस्योपहवयाचनप्रतिषेधाददीक्षितस्योपहवयाचनं यजमानादिति गम्यते । अस्यैव नैमित्तिकस्य निमित्तापत्तिकालादन्यत्राऽऽम्नानं तृतीयसवनेऽप्यस्य नैमित्तिकस्य प्रापणार्थम् ।

**सवनीयानां पुरस्तादुपरिष्टाद्वा पशुपुरोळाशेन चरन्ति ।**

प्रकृतिप्राप्तस्य पशुपुरोळाशस्य कालविधिरयम् ।

**अक्रियामेकेऽन्यत्र तदर्थवादवदनात् ।**

तस्य पुरोळाशस्याक्रियामेक आचार्या मन्यन्ते हेतुबलात् । सोऽयं हेतुः 'अन्यत्र तदर्थवादवदनात्' इति । तत्प्रयोजनो वादस्तदर्थवादः । तस्य वदनं तदर्थवादवदनम् । तत्प्रयोजनवादस्यान्यत्र वदनादित्यर्थः । अन्यत्रेति सूक्तवाकप्रैष उ*च्यते । तत्रावीवृधत पुरोळाशैरित्याम्नातम् । पुरोडाशैरितिबहुवचनदर्शनात्सवनीयदेवताऽत्राभिधीयते न पशुपुरोडाशदेवतेति गम्यते । तेनात्र प्रकृतिप्राप्तमभिधानमपश्यन्तोऽकरणनिमित्तमेवेदमनभिधानमिति मन्यमाना अक्रियामुक्तवन्तः ।

**क्रियामाश्मरथ्योऽन्विताप्रतिषेधात् ।**

अतिदेशप्राप्तस्य प्रतिषेधाभावादाश्मरथ्यः पशुपुरोडाशस्य क्रियामेव मन्यते । आश्मरथ्यग्रहणं तस्य पूजनार्थं न विकल्पार्थम् । तस्मात्पशुपुरोडाशः कर्तव्य एव । यत्पुनरिदम्— 'अन्यत्र तदर्थवादवदनात्' इत्यनभिधानादकरणमुक्तं तदयुक्तं प्राप्तस्य प्रतिषेधाभावात् करणमेवेति । अनभिधानं पुनर्यत्सूक्तवाकप्रैष उक्तं तदहेतुरेव । प्रत्यक्षपठिते मन्त्रेऽभिधानशक्तिर्नास्ति चेदनभिधानमस्तु किं कुर्मः । यथाकथंचिदभिधानं वा कल्पनीयम् ।

**पुरोळाशाद्युक्तमा नाराशंससादनात् । न त्विह द्विदेवत्या एतस्मिन्काले दक्षिणा नीयन्तेऽहीनैकाहेषु ।**

अधिकृते काले पुनः कालविधानं यत्रानुसवनं दक्षिणानयनं विहितं[2] तत्र त्रिष्वपि सव-

---

* घ.—अत्र प्राणभक्षः साधितः सप्तमे षोळशिपात्रेण भक्षण इत्यत्र ।

---

१ घ. °वं याज° । २ क. ख. ग. घ. ङ. च. °म्भि° ।

नेषु नाराशंससादनोत्तरकालमेव दक्षिणानयनमित्येवमर्थम् । अहीनैकाहग्रहणं सत्रेष्वात्मदक्षिणाऽपि नास्तीति सूचनार्थम् ।

**कृष्णाजिनानि धून्वन्तः स्वयमेव दक्षिणापथं यन्ति दीक्षिताः सत्रेष्विदमहं मां कल्याण्यै कीर्त्यै तेजसे यशसेऽमृतत्वायाऽऽत्मानं दक्षिणां नयानीति जपन्तः ।**

दीक्षितवचनं पत्नीनिवृत्त्यर्थम् । सत्रवचनमसत्रेष्वस्य समुच्चयस्य[1] निवृत्त्यर्थम्[2] । आत्मानं दक्षिणां नयानीति मन्त्रवादः सत्राणामदक्षिणत्वस्तुतिपरत्वान्नाऽऽत्मदक्षिणत्वं विधातुं शक्नोति ।

**उन्नेष्यमाणास्वाग्नीध्रीय आहुती जुह्वति ।**

उन्नेष्यमाणासु दक्षिणासु दक्षिणाद्रव्येष्वित्यर्थः । केनचिन्मानविशेषेण दक्षिणाद्रव्याणि दक्षिणकाले[3] नेतव्यानि । तत्क्षणात्पूर्वक्षणे सर्व ऋत्विज आहुती जुह्वति ।

**ददानीत्यग्निर्वदति वायुराह तथेति तत् । हन्तेति चन्द्रमाः सत्यमादित्यः सत्यमोमापस्तत्सत्यमाभरन् । दिशो यज्ञस्य दक्षिणा दक्षिणानां प्रियो भूयासं स्वाहा । प्राचि ह्येधि प्राचि जुषाणा प्राच्याज्यस्य वेतु स्वाहेति द्वितीयाम् ।**

द्वितीयाग्रहणं मन्त्रभेदप्रदर्शनार्थं न द्वयोराहुत्योरेतावानेको मन्त्र आवर्तयितव्य इति ।

**क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्वित्यतीतास्वनुमन्त्रयेत प्राणि ।**

विहारदेशमतीत्य नीतेषु दक्षिणाद्रव्येषु तन्मध्ये यत्प्राणि द्रव्यं तदेतेनानुमन्त्रयते ।

**अभिमृशेद्प्राणि ।**

तन्मध्ये यदप्राणि तदभिमृशेत् ।

**कन्यां च ।**

अभिमृशेदिति शेषः । दैवेन विवाहप्रकारेण तदा यदि कन्या दीयते तामप्यभिमृशेत्, अनेनैव मन्त्रेण । न ब्राह्मादिष्विदमभिमर्शनमस्ति, क्रतुसंबन्धाभावात् ।

**सर्वत्र चैवम् ।**

सर्वत्र वैतानिक इष्टिपश्वादावेवं प्रतिगृह्णीयात् । न त्विहैवेति[4] नैं बहिर्वेदि प्रसङ्गाभावात् ।

---

१ ख. ग. घ. ङ. च. झ. °यनि° । २ ख. ग. °क्षिणात्वं । ३ ख. ग. ङ. च. झ. °क्षिणाका° । ४ ङ. च. °ति प्र° ।

**प्रतिगृह्याऽऽग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः प्राश्य प्रतिसृप्य ॥ १३ ॥**

॥ १३ ॥

**मरुत्वतीयेन ग्रहेण चरन्ति ।**

मरुत्वद्देवत्यो मरुत्वतीयः । गतार्थं सूत्रद्वयम् ।

**इन्द्र मरुत्व इह पाहि सोमं होता यक्षदिन्द्रं मरुत्वन्तं सजोषा इन्द्र सगणो मरुद्भिरिति भक्षयित्वैतत्पात्रं मरुत्वतीयं शस्त्रं शंसेत् ।**

भक्षयित्वेतिवचनं शस्त्रकालोपदेशार्थम् । मरुत्वतीयमिति शस्त्रनाम ।

**अध्वर्यो शोंसावोमिति माध्यंदिने शस्त्रादिष्वाहावः ।**

माध्यंदिने सवने यानि शस्त्राणि होतुर्होत्रकाणां च तेषामेवंरूप[1] आहावो विधीयते । बहुवचनं होत्रकशस्त्रपरिग्रहार्थम् ।

**आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ ।**

पुनर्मरुत्वतीयवचनं सर्वशस्त्राधिकारात् । प्रतिपदनुचराविति संज्ञे यथासंख्येन द्वयोस्तृचयोः ।

**इन्द्र नेदीय एदितीन्द्रनिहवः प्रगाथः ।**

इयमपि संज्ञा ।

**प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः ।**

प्रगाथ इति शेषः । इयमपि संज्ञैव ।

**तृचाः प्रतिपदनुचरा द्वृचाः प्रगाथा आऽतोऽर्धर्चं सर्वम् ।**

शस्त्राणामादिभूतमाज्यमारभ्यास्माद्ब्राह्मणस्पत्यात्सर्वमर्धर्चं[2] भवति । आज्यमारभ्य ब्राह्मणस्पत्यपर्यन्तं सर्वमर्धर्चशस्यं भवतीत्यर्थः ।

सर्ववचनात्प्रकृतौ विकृतौ च त्रिष्टुबादीनि पङ्क्तिर्वा विच्छन्दो वाऽस्मिन्नवधौ यदागच्छति तत्सर्वमर्धर्चमिति गम्यते ।

**स्तोत्रियानुरूपाः प्रतिपदनुचराः प्रगाथाः सर्वत्र ।**

एते च सर्वत्रार्धर्चशः शस्याः । प्रगाथस्यार्धर्चशंसनविधानं बृहतीकारपक्षे चतुर्थषष्ठयोः पादयोः पुनर्द्विरभ्यस्तयोरवसानविध्यभावात्समाम्नायप्रसिद्धार्धर्चावसानं[3] न प्राप्नोतीति[4]

---

१ ख. ग. तेष्वाहा°। २ क. °द्वा अर्धर्चभा°। ३ ख. ग. °र्धर्चशोभा°। घ. °र्धर्चशाभा°। ४ घ. °ति तत्तत्रा°।

तत्रावसानप्राप्त्यर्थम् । सर्वत्रवचनं छन्दोगप्रत्ययप्राप्तस्यापि प्रगाथस्या[1]स्मिन्शंस्यमानस्यैतद्-व्रसानं भवतीत्येवमर्थम् ।

**प्राक्च च्छन्दांसि त्रैष्टुभात् ।**

गायत्र्यादीनि पङ्क्त्[2]यन्तान्यर्धर्चशः शंस्यानीत्यर्थः ।

**सर्वाश्चैवाचतुष्पदाः ।**

गायत्र्यादीनां च सप्तानामक्षरपरिमाणमेव प्रवृत्तिनिमित्तं न पादविन्यासः । तत्र बृहत्त्यन्तानां पादविन्यासानपेक्षया सर्वप्रकाराणामर्धर्चशंसनमुक्तम् । पङ्क्त्या अप्य-पञ्चपदाया अर्धर्चशंसनमेव । पञ्चपदायास्तु वक्ष्यति । तत्र पङ्क्त्या उत्तरेषु त्रिषु च्छन्दःसु या अचतुष्पदास्तासामर्धर्चशंसनमनेन विधीयते । सर्वग्रहणं वृषाकप्यतिदिष्टेऽप्ये[3]व या म[4]र्त्स्यर्धर्चशंसनमेवेत्येवमर्थम् ।

**पङ्क्तिषु द्विरवस्येदुद्द्वयोर्द्वयोः पादयोः ।**

अयं विधिः पञ्चपदास्वेव । पङ्क्तिषु द्विरवस्येदित्यस्य विधेः पञ्चपदास्वेव संभवात् ।

**अर्धर्चशो वाऽऽश्विने ।**

आश्विने शस्त्रे याः पङ्क्त्यस्तासामर्धर्चशंसनं पङ्क्तिशंसनं वा भवतीति विक-ल्पोऽयं विधीयते । तत्रार्धर्चशस्यान्तर्गतानामर्धर्चशंसनं स्वतन्त्राणां पङ्क्तिशंसनमेवेति विनिवेशो युक्तः ।

**पच्छः शस्यगतां तु पच्छः ।**

शंसने क्रियमाणेऽयं विशेषः । सर्वत्र विषये पच्छः[5]शस्यसूक्तगताया एकस्याः पङ्क्तेः पच्छः शस्यतैव[6], तत्र सूक्तमुखीयोदाहरणम्—'अर्वाग्रथम्' इति चैवमादि । 'नमोवाकः' इत्यर्धर्चशः [7]शस्या । स्वाहाकृतस्येत्यस्याः पङ्क्तिशंसनम् ।

**समासमुत्तमे पदे ।**

पङ्क्त्याः पच्छःशंसने क्रियमाणे ये उत्तमे पदे अतिरिच्येते तयोः समासं कृत्वा शंसेत् । उत्तमे पदे समस्य शंसेदिति वा योजना ।

**पच्छोऽन्यत् ।**

उक्तादन्यत्पच्छः शंसेत् । यदिदमर्धर्चशंसनविधानं सामिधेन्यतिदेशप्राप्तमप्युद्दिश्यते तत्पच्छःशस्यविषयनियमार्थं[8] न स्वरूपविधानपरम् ।

---

१ झ. °स्यास्मच्छस्य° । २ घ. °नम् । एवं प° । ३ च. °प्येतया । ४ च. °रुत्वत्य° । ५ च. शस्यः, सूक्तं ग° । ६ घ. °तैवं त° । ७ झ. शस्यः । स्वा° । ८ च. °र्थं तत्स्वरू° ।

**पादैरवसायार्धर्चान्तैः संतानः ।**

इदं पच्छःशस्यप्रकारप्रदर्शनार्थम् । 'अर्धर्चान्तैः संतानः' इत्यर्धर्चान्ते प्रणवं कृत्वा तैः संतानः कर्तव्यः ।

**अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः ।**

धाय्या इति नाम ।

**प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः ।**

इदमपि नाम ।

**जनिष्ठा उग्र इति ।**

इदं सूक्तम् ।

**एकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यात्सर्वत्र ।**

एतस्य सूक्तस्यार्धा एकाधिकाः शस्त्वा तदन्तराले 'इन्द्रो मरुत्वान्' इत्येतां निविदं दध्यात् । अर्धा इति ब्राह्मणाल्लभ्यते 'तस्यार्धाः शस्त्वाऽर्धाः परिशिष्य[2] मध्ये निविदं दधाति' इति । सर्वत्रग्रहणं सूक्तमुखीयायां सत्यामपि तां मुक्त्वा सूक्तस्यैवैकभूयसीर्ऋचः शस्त्वा निविद्धेयेत्येवमर्थम् ।

**एवमयुजासु माध्यंदिने ।**

सवनवचनं विस्पष्टार्थम् ।

**एकां तृचे । अर्धां युग्मासु ।**

शस्त्वेत्यनुवर्तते ।

**एकां शिष्ट्वा तृतीयसवने ।**

निविदं दध्यादित्यनुवर्तते ।

**अक्षिणी मृजानः परिदध्यादध्यायन्नेन आत्मनः ।**

उभयं कुर्वन्परिदध्यात् । एतत्त्रिष्वपि वचनेषु कर्तव्यम् । एनः पापम्, आत्मन इति-वचनाच्च यजमानस्येति गम्यते ।

**अन्यत्राप्येतया परिदधदेवम् ।**

अतिदेशप्राप्तायां वचनादृतेऽपि भवति । इदं तु वचनं 'जनिष्ठा उग्र उग्रो जज्ञ इति माध्यंदिने' इत्युपदेशप्राप्तायां प्रापणार्थम् ।

**उक्थं वाचीन्द्राय शृण्वते त्वेति शस्त्वा जपेद्धे त्वा हि हव्ये मघवन्नवर्धन्निति याज्या ॥ १४ ॥**

॥ १४ ॥

---

१ ग. एकस्य । २ क. °पि तामु° । ३ ख. ग. °त । पुनस्त्रिष्व° ।

## निष्केवल्यस्य ।

अधिकारोऽयम् । निष्केवल्यमिति शस्त्रनाम ।

**अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ यदि रथंतरं पृष्ठम् ।**

रथंतरमिति सामविशेषः । पृष्ठमित्यस्मिन्स्थाने ज्योतिष्टोमाङ्गभूतं *सामाभिव्यक्तऋगक्षरसंपाद्यस्तुतिजन्यं शास्त्रैकसमधिगम्यं कार्यमुच्यते । तत्र यदि रथंतरं पृष्ठं पृष्ठमित्ययमर्थः—यदि पृष्ठकार्ये रथंतरं साम कुर्युश्छन्दोगा इति । एवं बृहत्पृष्ठं वैरूपं पृष्ठमित्येवमादिषु वेदितव्यम् । सामानाधिकरण्यं त्वौपचारिकमिति मन्तव्यम् । प्रगाथवचनं द्वृचग्रहणार्थम् । स्तोत्रियानुरूपवचनं तृचत्वादिसिद्ध्यर्थम् ।

**यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति यदि बृहत् ।**

**यद्वा उ वै बृहत्त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति ।**

प्रगाथौ स्तोत्रियानुरूपावित्यनुवर्तते ।

**प्रगाथा एते भवन्ति ।**

सिद्धे सत्यारम्भो नियमार्थः । यद्येतेषु द्वृचेषु च्छन्दोगा द्विपदोत्तराकारं तृचं कृत्वा स्तुवन्ति तथाऽप्यस्माभिर्द्वृचा एव कृत्वा शंस्तव्याः, न यथास्तुतं तृचाकारं शंस्तव्या इत्यर्थः ।

**तां द्वे तिस्रस्कारं शंसेत् ।**

अनभ्यासेन तृचाकारस्तवने द्वृचा एव न तृचाः कर्तव्या इत्युक्तम् । इदानीमभ्यासेन तृचाकारस्तवने तान्प्रगाथान्द्वे ऋचौ सत्यावभ्यासेन तिस्र ऋचः कृत्वा शंसेदिति सूत्रार्थः।

तदेवंप्रकारमित्याह—

**चतुर्थषष्ठौ पादौ बार्हते प्रगाथे पुनरभ्यासित्वोत्तरयोरवस्येत् ।**

बृहतीसतो+बृहत्योर्यो द्वृचः स बार्हतः प्रगाथ इत्युच्यते । ककुप्सतोबृहत्योः काकुभ इति बार्हताधिकारे पुनर्बार्हतवचनमधिकृतानामप्यस्य विधेः प्रापणार्थम् । तस्मिंश्चतुर्थषष्ठौ पादौ पुनरभ्यस्य सप्तमपञ्चमयोः पादयोरवस्येत् । अत्रावसानाभ्यासौ विधीयेते । एवंकृते पूर्वा बृहत्युत्तरे ककुभौ भवतः ।

* क.—स्पष्टीभूतानि । + ङ.—अयुजौ जागतौ सतो बृहती ।

१ ख. ग. घ. झ. °ते । य° । २ ङ. च. पृष्ठ° । ३ ख. ग. घ. °नार्द्दिर° । ४ ख. ग. घ. भ्यासो वि° । ५ ख. ग. घ. °धीयते ।

बृहतीकारं चेत्तावेव द्विः ।

बृहतीं कृत्वा शंसनं बृहतीकारमित्यर्थः । यदि तिस्रो बृहत्य एव चिकीर्ष्यन्ते तदा तावेव पादौ पुनर्द्विरभ्यस्य तत्रैवावस्येत् । तत्रैवावसानलाभार्थं प्रगाथस्यार्धर्चशंसनविधान[1]मित्युक्तम् ।

तृतीयपञ्चमौ तु काकुभेषु ।

एतेष्वेतावभ्यस्योत्तरयोरवस्येत् । उत्तरयोरवस्येदित्यत्रानुवर्तते । तदनुवर्तनमपि प्रगाथस्यार्धर्चशंसनविधिबलात्पूर्वत्र निष्प्रयोजनमेवावतिष्ठते । अत्र तु प्रयोजनमस्तीत्युक्तम् ।

प्रत्यादानाद्युत्तरा ।

ऋग्भवतीति शेषः ।

एवमेतत्पृष्ठेष्वहःस्विन्द्रनिहवब्राह्मणस्पत्यान् ।

*एतत्पृष्ठेष्विति समासनिर्देशादेतदेवेत्यवधार्यते । एतच्छब्देन प्रकृतत्वाद्बृहद्रथंतरे उच्येते । एतदुक्तं भवति—येष्वहःसु बृहद्रथंतरं वा तयोः संहतिर्वा पृष्ठकार्ये भवति तत्र यथा बृहद्रथंतरस्तोत्रियानुरूपयोः शंसनं भवति तद्वदिन्द्रनिहवब्राह्मणस्पत्याञ्शंसेत् । तयोस्तु शंसनं यथास्तुतमिति वक्ष्यति ।

बृहतीकारमितरेषु पृष्ठेषु ।

बृहद्रथंतराभ्यामितरेषु पृष्ठेषु तान्बृहतीकारं शंसेत् । इतरेष्वित्यसमासनिर्देशादितर[2]सत्तामात्रेऽपि बृहतीकारमेव भवति । तेन 'अप्तोर्यामे रथंतरेणाग्रे ततो वैराजेन' इत्यत्र यद्यपि बृहद्रथंतरे पृष्ठे तथाऽपि वैराजसंबन्धाद्बृहतीकारमेव भवतीति ।

बृहद्रथंतरयोश्च तृचस्थयोः ।

यदा बृहद्रथंतरे गायत्रीषु वाऽन्यासु वाऽनभ्यस्तासु तिसृष्वृक्षु स्तुवते स्वयोनिषु वा द्विपदोत्तराकारं तदाऽपीन्द्रनिहवब्राह्मणस्पत्यान्बृहतीकारं शंसेत् ।

होत्रकाश्च येषां प्रगाथाः स्तोत्रियानुरूपाः ।

येषां होत्रकाणां प्रगाथाः स्तोत्रियानुरूपा भवन्ति तेऽपीन्द्रनिहवब्राह्मणस्पत्यवत्ता-ञ्शंसेयुः ।

सर्वमन्यद्यथास्तुतम् ।

उक्तादन्यत्सर्वं यथास्तुतं शंसेत् । सर्वग्रहणं बृहद्रथंतरयोः स्तोत्रियानुरूपसंग्रहार्थम् ।

---

* क.—एते पृष्ठे येष्वहःसु ।

---

१ क. ख. ग. °र्धर्चे शं° । २ ख. ग. °रे प्राप्ते त° ।

## परिमितशस्य एकाहः ।

परितः[1] सर्वतो मितं शस्यं यस्याह्नः स परिमितशस्यः । एतदुक्तं भवति—यः स्वकीयैर्धर्मजातैरुपदेशत एव परिपूर्ण इति । स चैकेनाह्ना समाप्यत इत्येकाहः । अनेन प्रकारेण परिमितशस्यशब्देन प्रकृतिभूतोऽग्निष्टोम उच्यते । योऽयमविकृत एकाहः स सर्वत औपदेशिकशस्य इत्यर्थः । एवं चेच्छस्यविशेषणं[2] किमर्थम् , अन्यदपि धर्मजातं तस्योपदेशादवगतमेव । अत्रोच्यते । सत्यमेवं, किंत्वत्र विशेषोऽस्ति । सोमद्रव्यसंबन्धिनो ये धर्मा उत्पत्तिविध्यनुप्रवेशिनस्ते चतुःसंस्थस्य ज्योतिष्टोमस्य साधारणाः । ये पुनरधिकारविध्यनुप्रवेशिनो दीक्षणीयादयः स्तुतशस्त्रादयश्च त उपदेशतोऽग्निष्टोमस्यैवातिदेशात एवोक्थ्यादीनामपि संस्थानामित्यनेन विशेषेण शस्यविशेषणं कृतवानाचार्यः । तस्य चैकाहत्वं प्रसिद्धमेवोच्यते तेन शब्देनास्य संव्यवहारार्थम् ।

**स यद्युभयसामा यत्पवमाने तस्य योनिरनुरूपः ।**

स प्रकृत एकाहो यद्युभयसामा स्यात् । बृहद्रथंतरसामा स्यादित्यर्थः । उभयसामत्वं नामैवं भवति—बृहद्रथंतरं वा पृष्ठस्थाने भवतीतरत्पवमान इति । तत्र यत्पवमाने[3] भवति तस्य योनिं निष्केवल्यस्यानुरूपं कुर्यात् । क्षत्रियस्यायमर्थः प्रत्यक्षाम्नात एव, इदं तु सूत्रवचनं सर्वार्थत्वायोच्यते ।

**योनिस्थान एवैनामन्यत्र शंसेत् ।**

अन्यत्रेत्युक्थ्यादीन्यपि गृह्यन्ते । अग्निष्टोमादन्यो यः कश्चिदुभयसामैकाहः संस्था वा बृहद्रथंतरसामा[4] स्यादित्यर्थः । तत्र यत्पवमाने कृतं तस्य योनिं योनिस्थान एव शंसेत् ।

योनिस्थानमाह—

**ऊर्ध्वं धाय्याया योनिस्थानम् ।**

निष्केवल्ये धाय्याया ऊर्ध्वं यत्स्थानं तद्योनीनां स्थानं शंसनस्थानमित्यर्थः ।

**अनेकानन्तर्ये सकृत्पृथग्वाऽऽह्वानम् ।**

अनेकासां[5] सामयोनीनां सहशंसने प्राप्त आदावेव सर्वासामाहावः सकृत्कर्तव्यः, प्रतियोनि वेति विकल्पः । 'तेभ्यश्चान्यदनन्तरम्' इत्यनेनाऽऽदौ सकृदाहावः प्राप्त एवोत्तरत्र[6] विकल्पेन विधीयते ।

---

१ क. ख. ग. घ. ङ. झ. °रिमितः । २ ख. ग. चेत्तस्य वि° । ३ क. °ने कृतं त° । ख. °ने कृतं तस्य योमिर्योनिस्थाने भवाति । त° । ४ क. °साम स्या° । ५ घ. °कि कृ° । ६ घ. °रवि° ।

**एवमूर्ध्वमिन्द्रनिहवात्प्रगाथानाम् ।**

ब्राह्मणस्पत्यमरुत्वतीयसामप्रगाथा यदाऽनेके[1] सह संगच्छेयुस्तदा तेष्वपि सकृत्पृथग्वाऽऽहावः कर्तव्यः । अत्र सर्वत्राऽऽहावे प्राप्तेऽनेनाऽऽद्येषु विकल्पो विधीयते ।

**यद्वा वानेति धाय्या पिबा सुतस्य रसिन इति सामप्र*गाथः ।**

संज्ञाशब्दावेतौ ।

**इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्यात् ।**

इन्द्रो देवता यस्याः सैन्द्री निवित् ।

**अनुब्राह्मणं वा स्वर उक्थं वाचीन्द्रायोपशृण्वते त्वेति शस्त्वा जपेत्पिबा सोममिन्द्र मन्दतु त्वेति याज्या ॥ १५ ॥**

होत्रकाणां माध्यंदिनेऽपि शस्त्राणि भवन्तीत्युक्तम् । तान्येतानीत्याह—

**होत्रकाणां कया नश्चित्र आ भुवत्कया त्वं न ऊत्या कस्तमिन्द्र त्वा वसुं सद्यो ह जात एवा त्वामिन्द्रो शं नु षु णः सुमना उ पाक इति याज्या तं वो दस्ममृतीषहं तत्त्वा यामि सुवीर्यमिति प्रगाथौ स्तोत्रियानुरूपा उदुत्ये मधुमत्तमा इन्द्रः पूर्भिदुद्ब्रह्माण्यृजीषी वज्री वृषभस्तुराषाळिति याज्या । तरोभिर्वो विदद्वसुं तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपा उदिन्वस्य रिच्यते भूय इदिमामूष्विस्युपोत्तमामुद्धरेत्सर्वत्र पिबा वर्धस्व तव घा सुतास इति याज्या ॥ १६ ॥**

अत्रोपोत्तमामुद्धरेत्सर्वत्रेत्युक्तम् । तस्य सर्वत्रग्रहणस्य प्रयोजनमन्यत्राप्येति[2] येत्यनेनाऽन्यत्रग्रहणेन तुल्यम्[3] । अस्मिन्नवसरे सवनसंस्थानिमित्तं कर्म कर्तव्यम् ॥ १६ ॥

**अथ तृतीयसवनमुत्तमस्वरेण ।**

स्वरग्रहणं पूर्ववद्बाधकबाधनार्थम् । तेन पाशुके हविःसंप्रचारेऽप्युत्तमः स्वरः सिद्धो भवति ।

**आदित्यग्रहेण चरन्ति ।**

आदित्यो देवता यस्य ग्रहस्य स आदित्यग्रहस्तेन चरन्ति ।

---

* घ. अयं सामप्रगाथो रथंतरे पृष्ठ एव । बृहती तूभयं शृणवच्च न इति सामप्रगाथ इति सप्तमे तृतीयखण्डान्ते वक्ष्यते । वैरूपादिष्वपि सामप्रगाथविशेषास्तत्रैव द्रष्टव्याः ।

---

१ ङ. च. झ. °नेनानाद्ये° । २ ख. ग. घ. ङ. च. झ. °प्येतये° । ३ ७ ख. ग. °म् । तस्मि° ।

**आदित्यानामवसा नूतनेन होता यक्षदादित्यान्प्रियान्प्रियधाम्न आदित्यासो अदितिर्मादयन्तामिति नैतं ग्रहमीक्षेत हूयमानम् ।**

अत्र प्रतिषेधान्नियमेन नेक्षेत । तेनान्यत्रानियमः ।

**स्तुत आर्भवे पवमाने विहृत्याङ्गारान्मनोतादि पश्विळान्तं पशुकर्म कृत्वा पुरोळाशाद्युक्तमा नाराशंससादनात् ।**

कर्तव्यमिति शेषः । विहरणोपदेशस्तत्कालपरिज्ञानात्तद्व्यवायपरिहारार्थः । अत्राविद्विदेवत्या न सन्ति । पश्विळान्तं कर्मेत्येतावतैव सिद्धे पशुग्रहणं ब्रह्मणः पशुवदासनप्राप्त्यर्थम् । तेनैतस्मिन्नवसर आहवनीयस्य दक्षिणत आसनं भवति ।

**सन्नेषु प्रदिष्टात्पुरोळाशस्य तिस्रस्तिस्रः पिण्डीर्दक्षिणतः प्रतिस्वं चमसेभ्यः स्वेभ्यः पितृभ्य उपास्येयुरत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ।**

नाराशंसेषु सादितेषु पुरोळाशस्य मृदुतमात्प्रदेशाद्गृहीत्वा सर्वे चमसिनः पुरोळाशं तिस्रस्तिस्रः पिण्डीः कृत्वा स्वात्स्वाच्चमसाद्दक्षिणतः स्वान्स्वान्पितॄनुद्दिश्य चमससमीप आस्येयुः । ताः पिण्डीः प्रतिस्वमिति चमसेभ्य इत्यस्य विशेषणम् । पितृशब्दस्य संबन्धिशब्दतयैव स्वत्वे सिद्धे यत्स्वशब्दग्रहणं करोति तज्ज्ञापयति संबन्धिपदार्था अपि यत्नादृते यजमानस्यैवेति । तेन 'यस्यां द्वेष्यो न ताम्' इत्यत्र यजमानद्वेष्य एव परिगृह्यते ।

**सव्यावृत आग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः प्राश्य प्रतिप्रसृप्य ॥ १७ ॥**

**सावित्रेण ग्रहेण चरन्ति ।**

एतदुभयं गतार्थम् । सवितृदेवत्यो ग्रहः सावित्रग्रहः ।

**अभूद्देवः सविता वन्द्यो नु नो होता यक्षद्देवं सवितारं दमूना देवः सविता वरेण्यो दधद्रत्नादक्ष पितृभ्य आयुनि । पिबात्सोमं ममदन्नेनमिष्टयः परिज्माचिद्रमते अस्य धर्मणीति वषट्कृते होता वैश्वदेवं शस्त्रं शंसेत् ।**

वषट्कृतवचनमत्रापि शस्त्रकालज्ञानार्थम्[1] । होतृग्रहणमृत्विक्कर्मव्यतिरेकाविषयेऽपि[2] होतैव वैश्वदेवं शंसेदित्येवमर्थम् । वैश्वदेवमिति शस्त्रनाम ।

---

१ ख. ग. °लत्वज्ञापना° । २ ख. ग. घ. °तिकारावि । ङ. च. झ. °तिकरावि° ।

**सर्वा दिशो ध्यायेच्छंसिष्यन् । यस्यां द्वेष्यो न ताम् ।**

यस्यां द्वेष्यो न तां दिशं ध्यायेदितिवचनान्मुख्यं ध्यानमत्र न संभवतीति प्राच्यादिशब्दैरेव ध्यानं कर्तव्यम् ।

**अध्वर्यो शो शोंसावोमिति तृतीयसवने शस्त्रादिष्वाहावः ।**

उक्तार्थमेतन्माध्यंदिने ।

**तत्सवितुर्वृणीमहेऽद्यानो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरावभूद्देव एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशत्या च तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्च प्र द्यावेति दैर्घतमसं सुरूपकृत्नुमूतये तक्षन्रथमयं वेनश्चोदयत्पृश्निगर्भा येभ्यो माता मधुमत्पिन्वते पय एवा पित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवम् ।**

पुनर्वैश्वदेवग्रहणं शस्त्रादिष्विति व्यवायादेकया चेति कल्प[1]जा[2]द्दैर्घतम[3]सामिति वासिष्ठानिवृत्त्यर्थम् । नवग्रहणमस्य सूक्तस्योत्तमावर्जस्यैव वैश्वदेवसूक्तत्वसिद्ध्यर्थम् । एतत्सार्वत्रिकमुत्तमायाः परिधानीयात्वेन सर्वत्र विनिवेशात् ।

**वैश्वदेवाग्निमारुतयोः सूक्तेषु सावित्र्यादिनिविदो दध्यात् ।**

सप्त सूक्तानि सप्तैव च निविदो[4]ऽवशिष्यन्ते, उत्तमायाः षोळशि[5]नि विनियोगात् । अतो यथासंख्येन विनिवेशः सिद्धो भवति ।

तदेव स्पष्टयति—

**चतस्रो वैश्वदेवे ।**

शस्त्र इत्यर्थः ।

**उत्तरास्तिस्र उत्तरे ।**

आग्निमारुत इत्यर्थः ।

**सूक्तानां तद्धि दैवतम् ।**

सूक्तानां यद्दैवतं भवति तदेव निविदो दैवतमित्यर्थः । हिशब्दो हेत्वर्थसूचकः प्रसिद्ध[6]-

१ झ. °ल्पजम् । दैर्घतमसग्रहणं वा° । २ क. ख. ग. घ. ङ. °जा दैर्घ° । ३ ख. ग. घ. °मसेति । ४ ख. ग. ङ. च. °दो शि° । ५ घ. °शिविधो° । ६ ङ. च. °सिद्धिवा ।

द्वारेण । तेनायमर्थः—यस्मादनयोरेकदैवतत्वं प्रसिद्धं तस्मादग्निष्टुदादौ सूक्तानां देवताभेदे सति निविद ऊहेन तद्देवत्याः कर्तव्याः । तासु देवतापदानामूहः कर्तव्य इत्यर्थः ।

**दैवतेन सूक्तान्तः ।**

यदैतयोः शस्त्रयोः सप्तैव सूक्तानि तदा निविद्भिर्यथासंख्यमुपपद्यते । यदा पुनर्विकृतिषु सप्तभ्योऽधिकानि सूक्तानि तदा कथं यथासंख्यमिति तदुपपादनार्थमिदं सूत्रम्—'दैवतेन सूक्तान्तः' इति । दैवतेनैव सूक्तानां नानात्वमवगन्तव्यं न समाम्नायप्रसिद्ध्या । एतदुक्तं भवति—एतयोः शस्त्रयोः सप्तैव कार्याणि प्रकृतौ परिच्छिन्नानि तत्रैकं कार्यमेकं वा सूक्तं कुर्यात्, द्वे बहूनि वा । सर्वथा तावदेकसूक्तकार्यानुप्रविष्टमेकमेवेति कृत्वा यावतां सूक्तानामेकं दैवतं तावदेकमेवेति मन्यमानः 'दैवतेन सूक्तान्तः' इत्युक्तवानाचार्यः ।

**धाय्याश्चात्रैकपातिनीः ।**

विद्यादिति शेषः । अत्रेति । वैश्वदेवाग्निमारुतयोरित्यर्थः । अस्य विधेरुभयार्थत्वायोत्तरसूत्रे वैश्वदेवशब्दं प्रयुक्तवानाचार्यः ।

**अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेवे द्विः पच्छोऽर्धर्चशः सकृद्भूमिमुपस्पृशन् ।**

सर्वत्र प्रकृतौ विकृतौ च वैश्वदेवशस्त्रेऽनयैव परिदध्यात् । इत्थं च परिदध्यादिदं च कुर्वन्परिदध्यादित्यर्थः ।

**उक्थं वाचीन्द्राय देवेभ्य आ श्रुत्यै त्वेति शस्त्वा जपेद्विश्वे देवाः शृणुतेमं हवं म इति याज्या ॥ १८ ॥**

॥ १८ ॥

**त्वं सोम पितृभिः संविदान इति सौम्यस्य याज्या ।**

सौम्यो नाम कर्मविशेषश्चरुहविष्कः[1] सोमदेवत्यः ।

**तं घृतयाज्याभ्यामुपांशूभयतः परियजन्ति ।**

तं सौम्यमभितो घृतयाज्याभ्यामुपांशु परियजन्ति ।

तत्रैव विशेषमाह—

**घृताहवनो घृतपृष्ठो अग्निर्घृते श्रितो घृतम्वस्य धाम । घृतप्रुषस्त्वा हरितो वहन्तु घृतं पिब-**

---

१ ङ. °श्चतुर्हवि° ।

न्यजसि देव देवानिति पुरस्तात् । उरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिरेत्युपरिष्टात् । अन्यतरेतश्चेद्-ग्राविष्णू महि धाम प्रियं वामित्युपांश्वेव ।

यद्यन्यतरतो यजन्ति तदाऽनया यजेत्तदाऽप्युपांश्वेव । एवकारः पौनर्वचनिकः ।

आहृतं सौम्यं पूर्वमुद्गातृभ्यो गृहीत्वाऽवेक्षेत यत्ते चक्षुर्दिवि यत्सुपर्णे येनैकराज्यमजयो हि ना । दीर्घं यच्चक्षुरदितेरनन्तं सोमो नृचक्षा मयि तद्दधात्विति ।

अध्वर्युणाऽऽहृतमुद्गातृभ्यः पूर्वं गृहीत्वा सौम्यमवेक्षेत मन्त्रेण ।

अपश्यन्हृदिस्पृक्क्रतुस्पृग्वर्चोधा वर्चो अस्मासु धेहि । यन्मे मनो यमं गतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि भद्रं कर्णेभिः शृणुयाम देवा इति च ।

तस्मिंश्चरौ घृतप्लुत ईक्षमाणः स्वच्छायां यदि न पश्येत्तस्यापश्यतो नैमित्तिकमिदं 'हृदिस्पृक्' इत्यादियजुश्च 'भद्रं कर्णेभिः' इत्यृचं ब्रूयात् ।

अङ्गुष्ठोपकनिष्ठिकाभ्यामाज्येनाक्षिणी अज्य च्छन्दोगेभ्यः प्रयच्छेत् ।

अङ्गुष्ठोपकनिष्ठिकाभ्यां चरुस्थेनाऽऽज्येनाक्षिणी अङ्क्त्वा छन्दोगेभ्यः प्रदानार्थमध्वर्यवे प्रयच्छेदित्यर्थः । अञ्जनादि नित्यमेव ।

विहृतेषु शालाकेष्वाग्नीध्रः पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङित्युपांश्वेव ।

शालाका दर्भेषीकास्तेषु भवा अग्नयः शालाकास्तेषु । विहृतेष्विति विहरणकालोपदेशस्तस्य व्यवायपरिहारार्थः । शालाका धैष्ण्या अग्नयः । उपांश्वेवेत्यवधारणं तेषामुच्चैः संप्रैषेऽप्युपांश्वेव यष्टव्यमित्येवमर्थम् ।

नेष्टारं विसंस्थितसंचरेणानुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत् ।

नेष्टुर्विसंस्थितसंचरेण नेष्टारमनुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत्पात्नीवतम् । नेष्टर्यधिकृत उपस्थ इतिवचनात्तस्यैवेत्यवगतौ सत्यां तस्येतिवचनं शाखान्तरे 'नोपस्थ आसीत' इति

१ क. ख. ग. छ. ज. °रश्चे° । २ ख. ग. °तरो य° । ३ ख. ग. °नर्वाच्च° ।

प्रतिषेधे सत्यप्युपस्थ एवोपविशेदित्येवमर्थम् । अस्य सूत्रकारस्यान्या श्रुतिमूलमस्तीत्यनु-[1]मिमीमहे ॥ १९ ॥

अथ यथेतम् ।

अथानन्तरमेव यथेतं निष्क्रामेत्, सदस आग्नीध्रं प्रति गच्छेत् । तास्मन्नाग्नीध्रीये यथेतं निष्क्रान्त एवाऽऽग्निमारुतमारभेतेति वचनप्रयोजनम् । यथेतमिति । येनैव मार्गेणाऽऽगतस्तेनैवेति ।

स्वभ्यग्रमाग्निमारुतम् ।

स्वभ्यग्रं द्रुतवृत्त्येत्यर्थः । वाचस्तिस्रो वृत्तयो विलम्बिता मध्यमा द्रुता चेति । तत्र विलम्बितायां य एकमात्रः स मध्यमायां द्विमात्रः, एवं द्रुतायां त्रिमात्र इत्यासु विशेषः । एवं श्रूयते—'तेनासंत्वरमाणाश्चरेयुः' इत्यारभ्य 'त्रिषु सवनेष्वसंत्वरमाणाश्चरेयुः' इतिस्थितेऽसंत्वरमाणा इति संत्वराप्रतिषेधात्तदनन्तरा मध्यमा वृत्तिर्विहिता भवति । तत्राऽऽग्निमारुते मध्यमामपोह्य द्रुता विधीयते । उच्चनीचभावेनैवं[2] शंस्तव्यम् । त्रिषु सवनेषु मन्द्रादयो यमा आरोहक्रमेणैव प्रयोक्तव्याः । आग्निमारुतमिति शस्त्रनाम ।

तस्याऽऽद्यां पच्छ ऋगावानं पच्छः शस्या चेत् ।

तस्याऽऽग्निमारुतस्याऽऽद्यामृचमृगावानं शंसेत् । यदि सा पच्छः शस्या भवेत्तदा पादे पादेऽवसायानुच्छ्वसन्नेव शंसेत् ।

अर्धर्चश इतराम् ।

यदि साऽर्धर्चशस्या[4] स्यात्तदाऽर्धर्चेऽवसायानवानामित्यर्थः ।

संतानमुत्तमेन वचनेन ।

ऋगावानवचनात्त्रिषु वचनेष्वसंताने प्राप्त उत्तमेन वचनेन द्वितीयायाः संतानं विधीयते ।

**वैश्वानराय पृथुपाजसे शं नः करत्यर्वते प्रत्वक्षसः प्रतवसो यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ प्रतव्यसीं नव्यसीमापो हि ष्ठेति तिस्रो वियतमप उपस्पृशन्नन्वारब्धेष्वपावृतशिरस्क इदमादि प्रतिप्रतीकमाह्वानमुत नोऽहिर्बुध्न्यः शृणोतु देवानां पत्नीरुशतीरवन्तु न इति द्वे राकामहमिति द्वे पावीरवी कन्या चित्रायुरिमं यम प्रस्तरमाहि सीद मातलीकव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परास आहं पितॄन्त्सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्य स्वादुष्किलायमिति चतस्रो मध्ये चाऽऽह्वानं मदामो दैव मोदामो दैवोमित्यासां प्रतिगरौ ययोरोजसा स्कभिता रजांसि वीर्येभिर्वी-**

---

१ घ. °नुमी° । २ क. ख. ग. °नैव शं° । ३ ख. ग. °चमनवा° । ४ च. °र्चशः श° ।

होत्रकाणाम् ।

माध्यंदिने सवने होतुर्विधिरुक्तः, इदानीं होत्रकाणां विधिरुच्यत इति संबन्धः । इति मैत्रावरुणस्येति ब्राह्मणाच्छंसिन इत्यच्छावाकस्येत्येतैरेव होत्रकसंबन्धे सिद्धे होत्रकाणामितिवचनं चतुर्विंशेनैषां स्तोत्रियानुरूपाणां संकोचनिवृत्त्यर्थम् । तेन सत्रसंबन्धिनां होत्रकाणां माध्यंदिने सवन एते स्तोत्रियानुरूपा वेदितव्याः । ननु सर्वत्र च्छन्दोगप्रत्यय एव स्तोत्रियस्तत्र किं वचनेनेति । अनुरूपनियमार्थम् । यदि 'यच्चिद्धि त्वा' इत्यत्र स्तुयुस्तदा 'माचिदन्यत्' इत्ययमेवानुरूपो भवति नान्यो लाक्षणिक इत्येवं सर्वत्र प्रयोजनं द्रष्टव्यम् ।

कया नश्चित्र आभुवत्कया त्वं न ऊत्या माचिदन्यद्विशंसत यच्चिद्धि त्वा जना इम इति स्तोत्रियानुरूपा मैत्रावरुणस्य ।

एतत्स्तोत्रियानुरूपस्य युगलद्वयं मैत्रावरुणस्य ।

तं वो दस्ममृतीषहं तत्वा यामि सुवीर्यमभिप्रवः सुराधसं प्रसुश्रुतं सुराधसं वयं घत्वा सुतावन्तः क ईं वेद सुते सचा विश्वाः पृतना अभिभूतरं नरं तमिन्द्रं जोहवीमि या इन्द्र भुज आभर इत्येका द्वे चेन्द्रो मदाय वावृधे मदे मदे हि नो ददिः सुरूपकृत्नुमूतये शुष्मिन्तमन्न ऊतये श्रायन्त इव सूर्यं बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरुदुत्ये मधुमत्तमास्त्वमिन्द्र प्रतूर्तिषु त्वमिन्द्र यशा असीन्द्र क्रतुं न आभरेन्द्र ज्येष्ठं न आभराऽऽत्वा सहस्रमा शतं मम त्वा सूर उदित इति ब्राह्मणाच्छंसिनः ।

एतान्येकादश युगलानि चतुर्थस्यानुरूपैः संहार्यः ।

तरोभिर्वो विदद्वसुं तरणिरित्सिषासति त्वामिदाह्यो नरो वयमेनमिदाह्यो यो राजा चर्षणीनां यः सत्राहा विचर्षणिः स्वादोरित्था विषूवत इत्था हि सोम इन्मद उभे यदिन्द्र रोदसी अव यत्त्वं शतक्रतो नकिष्टं कर्मणा नशन्न त्वा बृहन्तो अद्रय उभयं शृणवच्च न आवृषस्व पुरूवसो कदाचन स्तरीरसि कदाचन प्रयुच्छसि यत इन्द्र भयामहे यथा गौरो अपाकृतं यदिन्द्र प्रागपागुदग्यथा गौरो अपाकृतमित्यच्छावाकस्य ।

१ च. °न शत्रसं° । २ ब. च. °पयु° । ३ ब. पः समाहा° ।

एतानि दश युगलानि[1] ।

**स्तोत्रियानुरूपाणां यद्यनुरूपे स्तुवीरन्स्तोत्रियाऽनुरूपः ।**

स्तोत्रियानुरूपाधिकारे पुनः स्तोत्रियानुरूपवचनं सर्वेषु स्तोत्रियानुरूपेष्वस्य विधेः प्रापणार्थम् । तेन माध्यंदिने तृतीयसवने च होतुर्होत्रकाणां चायं विधिर्भवतीति वेदितव्यम् । प्रातःसवनमतिक्रम्यास्य विधेरुक्तत्वात्तत्रायं विधिर्न भवति ।

**ऊर्ध्वं स्तोत्रियानुरूपेभ्यः कस्तमिन्द्र त्वा वसुं कन्नव्यो अतसीनां कद्रून्वस्याकृतमिति कद्वन्तः प्रगाथाः ।**

कद्वन्त इति प्रगाथानां संज्ञा, ते च होत्रकाणां यथासंख्येन भवन्ति ।

**अपप्राच इन्द्र विश्वाँ अमित्रान्ब्रह्मणा ते ब्रह्म युजा युनज्म्युरुं नो लोकमनुनेषि विद्वानिति कद्वद्भ्य आरम्भणीयाः ।**

आरम्भणीया इत्यासामृचां संज्ञा । ता अपि यथासंख्येन होत्रकैः संबध्यन्ते । कद्वद्भ्य इति पञ्चमीदर्शनादूर्ध्वमित्यध्याह्रियते । कद्वद्भ्य ऊर्ध्वमारम्भणीया भवन्तीति ।

**ऊर्ध्वमारम्भणीयाभ्यः सद्यो ह जात इत्यहरहः शस्यं मैत्रावरुणोऽस्मा इदु प्रतवसे शासद्वह्निरितीतरावहीनसूक्ते ।**

आरम्भणीयाया ऊर्ध्वं मैत्रावरुणः सद्यो ह जात इत्येतत्सूक्तमहरहः शस्यसंज्ञकं शंसेत् । ब्राह्मणाच्छंस्यच्छावाकौ द्वावारम्भणीयाभ्यामूर्ध्वमस्मा इदु प्रतवसे शासद्वह्निरित्येते सूक्ते अहीनसूक्तसंज्ञके शंसेयाताम् ।

**आ सत्यो यात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुण उदु ब्रह्माण्यभितष्टे वेतीतरावहरहः शस्ये ।**

आसत्यो यात्वित्येतत्सूक्तमहीनसूक्तसंज्ञकं च द्वितीयं मैत्रावरुणः शंसेत् । ब्राह्मणाच्छंस्यच्छावाकावुदु ब्रह्माण्यभितष्टे वेत्येते सूक्ते अहरहः शस्यसंज्ञके द्वितीये सूक्ते शंसेयाताम् ।

**नूनं सात इत्यन्तमुत्तमम् ।**

एतेषां सूक्तानां यदुत्तमं सूक्तमभितष्टीयं तन्नूनं सात इत्यन्तं भवति । ऋगागमेऽप्युद्धाराभावादधिकेयं भवति तेन शुनंहुवीयाया उद्धाराभावे सति सकृदिन्द्रं निराहेति ब्राह्मणवचनमुपपन्नं भवति ।

**अहीनसूक्तानि षळहस्तोत्रियानावपत्सु ।**

आसत्यो यात्वस्मा इदु प्रतवसे शासद्वह्निरित्येतान्यहीनसूक्तानि, तेषां प्रवेशविषयं

---

१ घ. च. °नि स्तोत्रियानुरूपाणां रूपम् । स्तो° ।

उच्यते । यान्यहानि षळहस्तोत्रियवन्ति तेष्वेतानि भवन्ति । चतुर्विंशसहचारिषु महाव्रतादिष्वित्यर्थः । षळहस्तोत्रियावापसहचारिणीत्युक्तं भवति ।

इदानीं तृतीयसवनमुच्यते—

**उदुष्य देवः सविता हिरण्ययेति तिस्रस्ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवम् ।**

आर्भवमैकाहिकमेव वैश्वदेवशस्त्रं भवति ।

**पृक्षस्य वृष्णो वृष्णे शर्धाय यज्ञेन वर्धतेत्याग्निमारुतम् ।**

एतदाग्निमारुतं[1] भवति ।

**अग्निष्टोम इदमहः ।**

एतच्चतुर्विंशमहरग्निष्टोमसंस्थं[2] भवति । आग्निमारुतान्तमित्यर्थः ।

**उक्थ्यो वा ॥ ४ ॥**

अयं चतुर्विंश उक्थ्यसंस्थो वा भवेत् । अस्मिन्नहनि यत्प्रत्यक्षमाम्नातं तस्मादन्यत्सर्वमैकाहिकं भवति । एवं सर्वत्र प्रत्यक्षाम्नातादन्यत्सर्वं[3] प्रकृतितो ग्रहीतव्यम् ॥ ४ ॥

**अभिप्लवपृष्ठ्याहानि ।**

अभिप्लवश्च पृष्ठ्यश्चाभिप्लवपृष्ठ्यौ, तयोरहान्यभिप्लवपृष्ठ्याहानि[4] । इत ऊर्ध्वं वक्ष्यन्त इति संबन्धः । अभिप्लवस्य पूर्वनिपातो गवामयने तस्य पूर्वप्रयोग इत्यनेनाभिप्रायेण[5] ।

**रथंतरपृष्ठान्ययुजानि ।**

अभिप्लवपृष्ठ्याहान्यधिकृतानि[6] तयोर्यान्ययुजानि विषमाणि तानि रथंतरपृष्ठानि भवेयुः । तेषु रथंतरं साम पृष्ठस्थाने[7] भवतीत्यर्थः ।

**बृहत्पृष्ठानीतराणि ।**

इतराणि युग्मानि समानि । तेषामेव द्वितीयचतुर्थषष्ठान्यधिकृतान्यहानि यानि तानि बृहत्पृष्ठानि स्युः । तेषु बृहत्साम पृष्ठस्थाने भवतीत्यर्थः ।

**तृतीयादिषु पृष्ठ्यस्यान्वहं[8] द्वितीयानि वैरूपवैराजशाक्वररैवतानि ।**

पृष्ठ्यस्य यानि तृतीयादीन्यहानि चत्वारि तेषु वैरूपादीनि चत्वारि सामानि यथासं-

---

१ च. °तं शस्त्रं भ° । २ ग. ङ. झ. °ति । अग्नि° । ३ ग. घ. च. °न्यत्स्वप्र° । ४ क. ग. ङ. झ. °हानि व° । ५ झ. °नेन त° । ६ क. ग. ङ. झ. °हानि व° । ७ झ. °नेन त° । ८ घ. पृष्ठ्यानि ।

ल्येन रथंतरस्य बृहतश्च द्वितीयानि पृष्ठानि[1] भवन्ति । द्वितीयवचनं[2] बृहद्रथंतरयोरबाध-नार्थम् । अन्वहवचनमेतेषामहर्धर्मत्वप्रतिपत्त्यर्थम् । तेन पृष्ठ्याहरतिदिष्टेष्वप्येष धर्मो भवतीति गम्यते ।

**तेषां यथास्थाने क्रियायां योनीः शंसेत् ।**

पृष्ठ्याभिप्लवाहानि विषमाणि रथंतरपृष्ठानि समानि बृहत्पृष्ठानि पृष्ठे[3] तृतीयादीनि वैरूपादीनि[4] द्विपृष्ठानीत्युक्तम् । एवं यदि च्छन्दोगाः कुर्युरस्माभिरप्येषां साम्नां योनिभि-र्निष्केवल्यानां[5] स्तोत्रियाः कर्तव्या भवन्तीत्येतदवगतम् । इदानीमिदमुच्यते यद्येतानि[6] निष्केवल्यस्थाने[7] न कुर्युस्तदाऽस्माभिस्तस्मिंस्तस्मिन्नहनि तदीया योनिर्योनिस्थाने शंस्त-व्येति । यथास्थानवचनं तस्मिन्नहनि पृष्ठस्य[8] स्थाने या स्वक्रिया सैव योनिशंसनस्य निमित्तं नाहःसंबन्धिनीत्येवमर्थम् । तेन पृष्ठस्थानादन्यत्र[9] क्रियायामप्यक्रिया चेत्पृष्ठस्थाने[10] शंस्त-व्यैव योनिरिति वेदितव्यम् । तयोरक्रियमाणस्येत्यत्र यथास्थानवचनमन्तरेणापि सिध्यत्ययमर्थः । तत्रैकैकस्यैव साम्नस्तत्कार्यसंबन्धितयोक्तत्वादक्रियमाणस्येत्युक्तेऽपि कार्यविशेषसंबन्धो गृह्यत एव[11] । तत्र पुनः केषांचिद्द्विसामत्वाद्द्वाभ्यां[12] वा तत्कार्यं कुर्युः । एकेन वा तस्मिन्कार्ये कृतेऽन्यदन्यस्मिन्कार्ये कुर्युरिति कार्यविशेषज्ञापको[13] नावगम्यते । अक्रियायामित्येतावत्युक्ते द्विसामसंबन्धिष्वानियतत्वात्कार्यस्याहःसंबन्धिन्यक्रियेति कस्य-चिद्भ्रान्तिः स्यात्तदपनोदनार्थं यथास्थानवचनं कृतम् ।

**सर्वत्र चास्वयोनिभावेऽन्यत्राऽऽश्विनात् ।**

तेषां योनीः शंसेदित्यनुवर्तते । सर्वत्रेत्यनेन पृष्ठ्याभिप्लवाभ्यामन्यत्रापि पृष्ठस्थानाद्[14]-न्यत्रापीत्येतदुभयं गम्यते । तदेव स्पष्टयति अन्यत्राऽऽश्विनादिति । साम्न उत्पत्तिर्य-स्यामृचि सा योनिरित्युच्यते[15] । स्वा योनिः स्वयोनिः, न स्वयोनिरस्वयोनिस्तस्या भावोऽ-स्वयोनिभावः । एतदुक्तं भवति रथंतरादीनां षण्णां यत्र काप्यहनि यत्र कापि कार्येऽ-स्वयोनिभावे सति तत्र तत्राहनि निष्केवल्ये योनिस्थाने योनिशंसनं कर्तव्यमिति ।

---

१ घ. च. °पृष्ठ्यानि । २ घ. च. °तीयानीतिव° । ३ घ. ङ. च. पृष्ठ्ये । ४ घ. च. °पादिभिर्द्विपृ° । ५ च. °पृष्ठ्यानी° । ६ घ. योनीर्नि° । ७ घ. च. °पृष्ठ्यस्था° । ८ घ. °ने यस्य क्रि° । ङ. झ. °ने यस्याक्रि° । च. °ने यस्य चाऽऽद्याक्रि° । ९ ग. घ. च. पृष्ठ्यस्था° । १० घ. च. पृष्ठ्यस्था° । ११ घ. ङ. झ. °व । अत्र । १२ च. °भ्यां सामभ्यां । १३ घ. °षप्रायेण संबन्धो ना° । च. °षसंबन्धप्रापको ना° । १४ घ. च. पृष्ठ्यस्था° । १५ क. ग. च. °ते । सा यो° ।

अन्यत्राऽऽश्विनादाश्विनैार्थात्संधिस्तोत्रादन्यत्रैवं भवति । तत्र यो ह्रस्वयोनिभावः स[2] च योनिशंसनस्य निमि[3]त्तं न भवतीत्यर्थः । सर्वत्र योनिशंसनं निष्केवल्यस्य योनिस्थान एव ।

**यज्ञायज्ञीयस्य त्वक्रियमाणस्यापि सानुरूपां योनिं व्याहावं शंसेदूर्ध्वमितरस्यानुरूपात् ।**

यज्ञायज्ञीयस्याक्रियमाणस्य, अपिशब्दादस्वयोनिभूतस्य च योनिशंसनं विधीयते, तस्यैव योनिशंसनस्य द्वाविमौ विशेषावूर्ध्वमितरस्यानुरूपादिति योनिशंसनस्य स्थानं सानुरू[4]प्यत्वं च स्तोत्रियानुरूपयोराहावपृथक्त्वं चेत्येते पञ्चार्था अस्मिन्सूत्रे विधीयन्ते । व्याहाववचनं सकृत्पृथग्वेति विकल्पनिवृत्त्यर्थम् । अन्यदप्राप्तं विधीयते । ऊर्ध्वमितरस्यानुरूपादिति यज्ञायज्ञीयस्य स्थाने यदन्यत्प्रविष्टं तस्यानुरूपादूर्ध्वमित्यर्थः । एकस्या एव योनित्वे सत्यपि योनिशंसने क्रियमाणे यत्साम यास्वृक्षु प्रयोगकाले गीयते ताः समस्ता ऋचः शंस्तव्यो नैकैकशः, तत्सामसंबन्धेन तत्सामसंबन्धिनीनामृचां विवक्षितत्वात् ।

**होत्रकाः परिशिष्टानावापानुद्धृत्य ।**

तत्स्थाने वक्ष्यमाणा ऋच आवपेरन्निति शेषः । होत्रकाणां प्रातःसवने शस्त्राण्येवं भवन्ति । परिशिष्टानावापानुद्धृत्य तत्स्थाने वक्ष्यमाणा ऋचः शस्त्वा चातुर्विंशिका[6]न्येव[7] भवन्ति । एतेनाह्ना सुत्यानीति सर्वत्रैकाहिके शस्ये प्राप्ते तन्निवृत्त्या चातुर्विंशिकप्रापणार्थं परिशिष्टानावापानुद्धृत्येत्युक्तम् ।

**मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमयं वां मित्रावरुणाऽऽनो मित्रावरुणेति तृचाः प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत्प्र मित्रयोर्वरुणयोरिति षट् काव्येभिरदाभ्येति तिस्रो मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यो यच्चिद्धि ते विश इति वारुणम् ।**

मैत्र्यो वारुणमिति देवतानिर्देशस्येदं प्रयोजनम्—मित्रावरु[8]णदैवतत्वान्मैत्रावरुणस्यैतासामावापो मिश्रितानामेव कर्तव्य इति । तत्र मिश्रणे बहुत्वाद्वारुणीनां बह्व्यो वारुण्योऽल्पीयस्यो मैत्र्य इत्येवं मिश्रयेत् ।

**एतस्य तृचमावपेत मैत्रावरुणो नित्यादधिकं स्तोमकारणात् ।**

एतस्य ऋक्समाम्नायस्य सकाशात्तृचं गृहीत्वा परिशिष्टावापस्थान आवपेन्मैत्रावरुणः । नित्यादित्युद्धृतपरिशिष्टावापे[9]श्चातुर्विंशिकं शस्यं नित्यमित्युच्यते तस्मादधिकमित्यर्थः ।

---

१ ङ. च. झ. °नार्थसंबन्धिस्तो° । २ ग. स च स्वयो° । घ. ङ. च. झ. स स्वयो° । ३ च. °त्तं भ° । ४ क. च. °पत्वे च । ५ ग. °व्या एकै° । ६ च. झ. °न्येवाऽऽवपन्ति । ७ क. ङ. °विंशक° । ८ च. °णदैव° । ९ ङ. झ. °वापे चातु° ।

नित्येनैव पञ्चदशात्प्राक्तनाः स्तोमा अतिशस्ता[1] भवन्ति[2] तथाऽपि तेष्वपि[3] नियमेन नित्या-दधिकमावपेतेत्येवमर्थं नित्यादधिकमित्युच्यते । स्तोमकारणादिति स्तोमातिशंसनप्रयो-जनकारितोऽयमावाप इति दर्शयति । तेन पञ्चदशस्तोमेऽपि तृचावापः कर्तव्यः ।

**पञ्च सप्तदशे नवैकविंशे द्वादश चतुर्विंशे पञ्च-दश त्रिणव एकविंशतिं त्रयस्त्रिंशे द्वात्रिं-शतं चतुश्चत्वारिंशे षट्त्रिंशतमष्टाचत्वारिंशे ।**

एकया द्वाभ्यां वा प्रातःसवन इत्यनेनैव स्तोमानुगुणा ऋच आवप्तव्या इत्येव सिद्धे संख्योपदेशस्येदं प्रयोजनं स्तोमातिशंसने नाभाका न गणयितव्या इति । अतस्तेषु[4] सत्स्वपि तानगणयित्वा स्तोमातिशंसनार्थमेतत्संख्याका[5] ऋच आवप्तव्या इत्ययमर्थः सिद्धो भवति ।

**एकाल्पीयसीर्वा ।**

एकया हीना वाऽऽवपेत । चतस्रः सप्तदशेऽष्टावेकविंश इत्येवंप्रकारः सप्तदशात्प्राक्त-नेषु स्तोमेषु । नित्यादधिकमितिवचनात्तृच एव नित्यमावप्तव्यः ।

**एकाहेष्वेकभूयसीर्वा ।**

एतेष्वहःस्वेकाहीभवत्स्वेकभूयसीर्वाऽऽवपेत । पूर्वोक्ता वा षट्सप्तदशे दशैकविंश इत्येवं-प्रकारो वैश्वदेव्यस्थाने प्रथमं पृष्ठ्याहरित्येवमादिषु ।

अत्र प्रकरणमाह[6]—

**नाऽऽरम्भणीया न पर्यासा अन्त्या ऐकाहिकास्तृचाः पर्यासस्थानेषु ।**

तायमानरूपाणामहर्गणधर्मत्वादेकाहेषु प्राप्तिर्नास्ति । तेनाऽऽरम्भणीयाः[7] पर्यासाश्च तेषु न सन्ति । तत्राऽऽरम्भणीयास्थानं शून्यमेवावतिष्ठते । पर्यासस्थानेष्वन्त्या ऐकाहि-कास्तृचा अस्मिन्नेव सूत्रे विधीयन्ते तेनैकाहिकेष्वेकयोनिशंस्यामिति युक्तमेतत् ।

**ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि ।**

सूक्तग्रहणमेतानि षट् सूक्तान्यत्र विहितानीति ज्ञापनार्थम् । इतरथा पादग्रहणात्तृच एव प्रतीयेरन् । एवं तर्हि पादग्रहणं किमिति क्रियते । ऋक्संप्रत्ययार्थम् । अतोऽवगम्यत एतेषु षट्सूक्तेषु यावतीभिर्ऋग्भिः प्रयोजनं तावतीर्ऋच आवपेत नाखण्डितानि षट् सूक्तानीति ।

---

१ च. झ. अभिश° । २ घ. च. °वन्तीति त° । ३ ङ. झ. °षु शस्त्वाऽपि । ४ ग. ङ. झ. °का गणयितव्या इ° । ५ च. मकारमा° । ६ घ. °रणादाह । ७ क. याः न प° ।

अत्र 'आदह स्वधामनु' इत्येताः षण्मारुत्य ऋचस्तासामुद्धारवचनाभावात्ता अपि प्रयोक्तव्याः । षट्सूक्तवचनं मारुतीनामपरिवर्जनं सूचयति । अस्मादेव वचनाज्ज्ञायते ता अप्यैन्द्र्यो मरुतस्तासु[1] निपातभाज इति । एवं सति 'तस्मादैन्द्रं ब्राह्मणच्छंसी प्रातःसवने शंसति' इत्यस्याः श्रुतेरविरोधो भवति ।

आवाप उक्तो मैत्रावरुणेन ।

आवाप उक्त इत्येतावतैव सिद्धे मैत्रावरुणेनेतिवचनं[3] मैत्रावरुणस्य स्वदेवत्याभिर्ऋग्भिरेवाऽऽवाप उक्त एवमस्यापि निर्दिष्टा ऋचः स्वदेवत्या एव न मारुत्य इत्येतत्प्रदर्शनार्थम् ।

इहेन्द्राग्नी इन्द्राग्नी आगतं ता हुवे ययोरिदमिति नवेयं वामस्य मन्मन इत्येकादश यज्ञस्य हि स्थ इत्यच्छावाकस्य ।

आवाप उक्तो मैत्रावरुणेनेत्यत्रापि संबध्यते ।

आयात्विन्द्रोऽवस इति मरुत्वतीयमान इन्द्र इति निष्केवल्यं प्रथमस्याऽऽभिप्लविकस्य ।

प्रथमस्याऽऽभिप्लविकस्येत्ययमधिकारार्थः । प्रथमस्याह्न[4] एते निष्केवल्यमरुत्वतीययोः सूक्ते भवत इत्यर्थः ।

मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात् ।

यत्र यत्र मध्यंदिन इति वक्ष्यति तत्र तत्र निष्केवल्यमरुत्वतीये शस्त्रे विद्यात् ।

अहीनसूक्तस्थान एवा त्वामिन्द्र यन्न इन्द्रः कथमहामिन्द्रः पूर्भिद्य एक इद्यस्तिग्मशृङ्ग इमामूष्विच्छान्ति त्वा शासद्वह्निरिति संपाताः ।

यान्येतानि नव सूक्तानि निर्दिष्टानि तेषां संपाता इति संज्ञा विधीयते । ते च संपाता माध्यंदिने होत्रकाणां शस्त्रेषु यान्यहीनसूक्तस्थानानि तेषु स्थानेषु भवन्तीत्ययमप्यर्थोऽस्मिन्सूत्रे विधीयते । अहीनसूक्तस्थान इतिवचनादत्रापि चातुर्विंशिकस्य प्राप्तिं दर्शयति ।

एकैकस्य त्रयस्त्रयः ।

प्रथमचतुर्थसप्तमादयस्त्रयः संपाता एकैकस्य भवन्ति ।

उक्ता मरुत्वतीयैः ।

यथा मरुत्वतीयाः प्रगाथाः पृष्ठ्याभिप्लवयोरहःसु भवन्ति तथा संपाता अपीत्यर्थः ।

---

१ व. च. न्द्यो मारुत्यस्ता° । २ क. ङ. °तस्तेषु नि° । ३ घ. च. °नं यथा मै° । ४ घ. च. °स्याऽऽभिप्लविकस्याह्न ।

**युञ्जते मन इहेहव इति चतस्रो देवान्हुव इति वैश्वदेवम् ॥ ५ ॥**

द्यावापृथिवीयमैकाहिकम् । एतद्वैश्वदेवशस्त्रम्, आज्यप्रउगे, आग्निमारुतं चैकाहिकानि । एतत्प्रथमस्याऽऽभिप्लविकस्याधिको वा संपातास्तु वाक्येन सर्वार्थाः ॥ ५ ॥

**द्वितीयस्य चतुर्विंशेनाऽऽज्यम् ।**

द्वितीयस्याऽऽभिप्लविकस्य होताऽजनिष्टेत्याज्यं भवति ।

**वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आगहीत्येकोभा देवा दिविस्पृशेति द्वे शुक्रस्याद्यगवाशिर इत्येकाऽयं वां मित्रावरुणेति पञ्च तृचाः ।**

तृचग्रहणमृङ्निवृत्त्यर्थम् ।

**गार्त्समदं प्रउगमित्येतदाचक्षते ।**

गार्त्समदशब्दस्तदार्षाणां भूयस्त्वात् ।

**विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ इन्द्र सोमं या त ऊतिरवमेति मध्यंदिनः । निष्केवल्यस्योत्तमे विपरीते ।**

निष्केवल्यस्य यत्सूक्तं या त ऊतिरिति तस्य ये उत्तमे ऋचौ ते विपर्यस्य शंसेत् ।

**भारद्वाजो होता चेत्प्रकृत्या ।**

यदि होता गोत्रतो भारद्वाजः स्यात्तदा प्रकृत्यैव शंसेत्[2] । होतृग्रहणाद्धोतुरेव भारद्वाजत्वमत्र विवक्षितं न प्रतिनिधिप्रवृत्तस्यापि । तेनाभरद्वाजोऽपि प्रतिनिधिप्रवृत्तः प्रकृत्यैव शंसेद्धोता चेद्भारद्वाजः स्यादिति ।

**चातुर्विंशिकं तृतीयसवनं विश्वो देवस्य नेतुरित्येका तत्सवितुर्वरेण्यमिति द्वे आ विश्वदेवं सत्पतिमिति तु वैश्वदेवस्य प्रतिपदनुचरौ ।**

अयं तु विशेषश्चातुर्विंशिकात्तृतीयसवनादेतौ प्रतिपदनुचरौ भिद्येते इति ।

**आज्यप्रउगे प्रतिपदनुचराश्चोभयोर्युग्मेष्वेवमभिप्लवे ॥ ६ ॥**

अस्मिन्नहनि य आज्यप्रउगे वैश्वदेवमरुत्वतीययोरुभयोः प्रतिपदनुचराश्चाभिप्लवे यान्यहानि युग्मानि द्वितीयचतुर्थषष्ठानि तेषु ते भवन्ति न केवलं द्वितीय एवेति सूत्रार्थः । अभिप्लवाधिकारे पुनरभिप्लवग्रहणमुभयोरित्यस्य वचनस्य षळहविषयतां व्यावर्त्य शस्त्रविषयत्वज्ञापनार्थम् ॥ ६ ॥

---

१ ग. घ. ङ. च. झ. °कारात्संपा° । २ ग. °तेन भार° । घ. च. तेनाभार° ।

**तृतीयस्य ऽर्यमा यो जात एवेति मध्यंदिनः ।**

आज्यप्रउग ऐकाहिके होत्रकाणां प्रातःसवने माध्यंदिने चोक्तान्येवोभयोरपि षळहयोर्भवन्ति ।

**तद्देवस्य घृतेन द्यावापृथिवी इति तिस्रोऽनश्वो जातः परावतो य इति वैश्वदेवं वैश्वानराय धिषणां धारावरा मरुतस्त्वमग्ने प्रथमो अङ्गिरा इत्याग्निमारुतं चतुर्थस्याग्नो जज्ञ इति निष्केवल्यम् ।**

ऐकाहिकं मरुत्वतीयम् ।

**ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्रस्ततं मे अप इति वैश्वदेवम् ।**

ऐकाहिकं वैश्वदेवं सूक्तम् ।

**वैश्वानरं मनसेति तिस्रः प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम् ।**

आज्यप्रउगे प्रतिपदनुचराश्च द्वैतीयाः ।

**पञ्चमस्य कया शुभा यस्तिग्मशृङ्ग इति मध्यंदिनः ।**

आज्यप्रउग ऐकाहिके एव ।

**कयाशुभीयस्य तु नवम्युत्तमाऽन्यत्रापि यत्र निविद्धानं स्यात् ।**

अन्यत्रापीतिवचनात्कर्मान्तरेऽपि यत्रैतत्सूक्तं निविद्धानीयं भवति तत्र सर्वत्र नवम्युत्तमा कर्तव्या । अतो ' निष्केवल्यस्योत्तमे विपरीते ' 'मरुत्वतीयस्योत्तमे विपरीते' इत्येवमादिषु तत्कर्मावधिक एव तादृशो विधिर्भवतीति[1] वेदितव्यम् । निविद्धानमित्यत्र[2] शब्देन निविद्धानीयमिति । तेनैतत्साधितं भवति—बहुष्वपि निविद्धानीयेषु यत्रास्मिन्नेव सूक्ते निविद्धीयते[3] तत्रैव नवम्युत्तमा न निविद्धानीयमात्र इत्येतदवगम्यत इति ।

**घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ कदु प्रियायेति वैश्वदेवम् ।**

सावित्रमैकाहिकमेव ।

**पृक्षस्य वृष्णो वृष्णे शर्धाय नूचित्सहोजा इत्याग्निमारुतं षष्ठस्य सावित्रार्भवे तृतीयेन वैश्वानरीयं च कतरा पूर्वा-षासानक्तेति वैश्वदेवं प्रयज्यव इमं स्तोममित्याग्निमारुतम् ।**

आज्यप्रउगे प्रतिपदनुचराश्च द्वैतीयाः, अन्यदैकाहिकम् । ब्राह्मणस्पत्यमरुत्वतीययोरुक्तो विशेषः ।

---

१ क. ग. च. °धिर्नभव° । २ घ. च. °त्ययं शब्दो न नि° । ३ च. °विद्धानीयं विधीयते ।

इत्यभिप्लवः षळहः ।

षळहवचनमभिप्लवस्य षळहसंज्ञाविधानार्थम् । अभिप्लव इतिवचनं पृष्ठ्यस्याभिप्लवषळहसंज्ञाप्रापणार्थम् । तेन षळहव्यवहारे द्वयोः संप्रत्ययः सिद्धो भवति ।

तस्याग्निष्टोमावभित उक्थ्या मध्ये ।

अभिप्लवस्य संस्थाविधिरेताभ्यां सूत्राभ्यां विधीयते ।

उक्थ्येषु स्तोत्रियानुरूपाः ।

वक्ष्यन्त इति शेषः । तेष्विति वक्तव्य उक्थ्येष्वितिवचनमस्मिन्सत्रप्रकरणे य उक्थ्यास्तेषां सर्वेषां वक्ष्यमाणेन विधिना संबन्धसिध्यर्थम् ।

मैत्रावरुणस्य ॥ ७ ॥

एह्यूषु ब्रवाणि त आग्निरगामि भारतः प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा प्र मंहिष्ठाय गायत प्र सो अग्ने तवोतिभिरग्निं वो वृधन्तमग्ने यं यज्ञमध्वरं यजिष्ठं त्वा ववृमहे यः समिधाय आहुत्याऽऽते अग्न इधीमह्युभे सुश्चन्द्रसर्पिष इति द्वे एका चाग्निं तं मन्ये यो वसुरा ते वत्सो मनो यमदाऽग्ने स्थूरं रयिं भर प्रेष्ठं वो अतिथिं श्रेष्ठं यविष्ठ भारत भद्रो नो अग्निराहुतो यदी घृतेभिराहुत आ घाये अग्निमिन्धत इमा अभिप्रणोनुम इति ।

दशैतानि स्तोत्रियानुरूपयुगलानि षष्ठस्य स्तोत्रियः संहार्यः ।

अथ ब्राह्मणाच्छंसिनोऽभ्रातृव्यो अनात्वं मा ते अमाजुरो यथैवाह्यसि वीरयुरेवाह्यस्य सूनृता तं ते मदं गृणीमसि तम्वभि प्रगायत वयमु त्वामपूर्व्य यो न इदमिदं पुरेन्द्राय साम गायत सखाय आशिषामहि य एक इद्विदयते य इन्द्र सोमपातम एन्द्र नो गध्येदु मध्वो मदिन्तरमेतो न्विन्द्रं स्तवाम सखाय स्तुहीन्द्रं व्यश्ववत्त्वं न इन्द्राभर वयमु त्वामपूर्व्य यो न इदमिदं पुराऽऽयाहीम इन्दव इति समाहार्योऽनुरू-

१ ध. च. °स्यापि ष° । २ क. ग. ङ. च. °स्मिन्सूत्र° । ३ च. °स्य युगलस्य स्तो° । ४ च. °यः समाहा° ।

पोऽभ्रातृव्यो अनात्वं मा ते अमाजुरो यथेति ।

एतान्यपि दशैव नवमस्यानुरूपः संहार्थः । आद्यस्य पुनर्वचनं सत्त्रादन्यत्राप्यस्य युगलस्य परस्परानियमार्थम् ।

अथाच्छावाकस्येन्द्रं विश्वा अवीवृधन्नुकथमिन्द्राय शंस्यं श्रुधीहवं तिरश्च्या आश्रुत्कर्ण श्रुधीहवमसावि सोम इन्द्र त इममिन्द्र सुतं पिब यदिन्द्र चित्रमेहना यस्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविर्वृषा ह्यसि राधसे गायन्ति त्वा गायत्रिण आत्वा गिरो रथीरिवेति ।

एतानि षड्युगलानि, अत्राप्यनुरूपनियमार्थमेषां विधानम् ।

सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन् ॥ ८ ॥

॥ ८ ॥

स्तोमे वर्धमाने ।

उक्थ्यशस्त्राणि प्रकृतानि तेषु शस्त्रेषु यद्यदन्त्यं सूक्तं तत्तदवशिष्य[1] स्तोमे वर्धमाने तदतिशंसनार्थं यावदर्थमृचो वक्ष्यमाणेभ्य ऋक्समुदायेभ्यो गृहीत्वाऽऽवपेरन्होत्रकाः ।

इमा उ वां भृमयो मन्यमाना इति तिस्र इन्द्रा को वामिति सूक्ते श्रुष्टी वां यज्ञो युवां नरा पुनीषे वामिमानि वां भागधेयानीत्येतस्य यथार्थं मैत्रावरुणः ।

यथार्थं यथाप्रयोजनं यावतीनामृचामावापे सति त्र्यवराभिर्ऋग्भिः स्तोमोऽतिशस्तो भवति तावतीरावपेतेत्यर्थः ।

यस्तस्तम्भ यो अद्रिभिद्यज्ञे दिव इति सूक्ते अस्तेव सु प्रतरमायात्विन्द्रः स्वपतिरिमां धियमिति ब्राह्मणाच्छंसी ।

एतस्य यथार्थमावपेतेति शेषः ।

विष्णोर्नुकमिति सूक्ते परो मात्रयेत्यच्छावाकः ॥ ९ ॥

अत्राप्यावपेतेति शेषः ॥ ९ ॥

पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्याम् ।

अभिप्लवस्य ये आद्ये अहनी ताभ्यां पृष्ठ्यस्याऽऽद्ये अहनी व्याख्याते । अभिप्लवस्य प्रथममहरेवं भवति, आज्यप्रउगे ऐकाहिके द्यावापृथिवीयमाग्निमारुतं च । इतरत्तत्रैवोक्तम्[2] ।

---

१ ग. ङ. झ. °वशेष्य । २ ङ. सत्यत्र°

द्वितीयमहरेवं भवति, आज्यं तृतीयसवनं चातुर्विंशिकम् । इतरदुक्तमेव । एवं पृष्ठ्यस्याऽऽद्ये अहनी भवतः ।

**तृतीयसवनानि चान्वहम् ।**

न केवलमाद्ये एवाहनी अभिप्लवातिदिष्टे स्याताम्, उत्तरेष्वहःसु यानि तृतीयसवनानि तान्यभिप्लवस्योत्तरेषामह्नामन्वहं तृतीयसवनानि यानि तैरेवातिदिष्टानीत्यर्थः ।

**उपप्रयन्त इति तु प्रथमेऽहन्याज्यम् । अग्निं दूतमिति द्वितीये ।**

आद्ययोरप्यह्नोरयं विशेषः—एते तयोराज्ये भवत इति ।

**तृतीये युक्ष्वाहीत्याज्यम् ।**

आज्याधिकारे पुनराज्यग्रहणं तृतीयशब्दस्य वैलक्षण्यप्रदर्शनार्थम् । वैलक्षण्यं चोत्तरत्राधिकारासिद्धिः ।

**वायवायाहि वीतय इत्येका वायो याहि शिवा दिव इति द्वे इन्द्रश्च वायवेषां सुतानामिति द्वयोरन्यतरां द्विरामित्रे वरुणे वयमश्विनावेह गच्छतमायाह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिरुत नः प्रियाप्रियास्वित्यौष्णिहं प्रउगम् ।**

आद्यः संहार्यो द्वितीयो द्वाभ्यामृग्भ्यां प्रथमाभ्यासेन वा द्वितीयाभ्यासेन वा तृचः कर्तव्यः । औष्णिहमिति ब्राह्मणानुवादस्तस्य विधायकत्वं मन्यमानस्यानुष्ठानमाह ।

**उत्तमेऽन्वृचमभ्यासाश्चतुरक्षराः ।**

अन्वृचं प्रत्यृचमित्यर्थः । चत्वार्यक्षराणि यस्मिन्नभ्यासे स चतुरक्षरोऽभ्यासः । ते च त्रयः, ऋक्त्रयसंबन्धात् । स चाभ्यासस्तृतीये पादे भवति, उष्णिक्संपादनस्य चिकीर्षितत्वात् । ‘ स्तोम्याभूत्स्तोम्याभोम् ’ इत्येवम् ।

**न वा ।**

वाशब्दः पक्षं व्यावर्तयति । नात्राभ्यासः कर्तव्यः । औष्णिहशब्दस्य विधायकत्वं न संभवति प्राप्तार्थत्वात् । ब्राह्मणग्रामवच्छब्दप्रवृत्तिः संभवतीति ।

**तृतीयेनाऽऽभिप्लविकेनोक्तो मध्यंदिनः । तं तमिद्राधसे मह त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ वैरूपं चेत्पृष्ठं**

---

१ क्ष. °नं च चा° ।

**यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्व-
मिति प्रगाथौ स्तोत्रियानुरूपौ ॥ १० ॥**

निष्केवल्यस्येति शेषः । रथंतरं चेदुक्तौ ॥ १० ॥

**चतुर्थेऽहनि प्रातरनुवाकप्रतिपद्यर्धर्चाद्योर्न्यूङ्खः ।**

पार्ष्ठिके चतुर्थेऽहनि यत्प्रातरनुवाकं तस्याऽऽद्याया ऋचो यावर्धर्चयोरादी तयोर्न्यूङ्खो भवति । अहरधिकारे पुनरहनीतिवचनमहर्धर्मोऽयं न्यूङ्ख इति प्रदर्शनार्थम् । तेनात्र या न्यूङ्खभाज ऋचस्तासामन्यत्र वचनादृते न्यूङ्खो न भवति ।

**द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिः ।**

इदानीं न्यूङ्खलक्षणमुच्यते । तयोरर्धर्चयोर्यो द्वितीयः स्वरः संहितावस्थायां तमोकारं त्रिमात्रं कृत्वा त्रिर्ब्रूयात्पच्छोऽर्धर्चश ऋक्श इति सर्वत्र शंसनविधानात् । संहितावस्थानामेव मन्त्राणां शंसनमुक्तं भवति । अतः संहितावस्थायामित्युक्तम् । पूर्वसूत्रेऽर्धर्चाद्योरित्याद्ययोरक्षरयोर्न्यूङ्खो विहितः, इह तु द्वितीययोर्विधीयते कथमनयोः संबन्ध इति । पूर्वसूत्रस्यायमभिप्रायः—ब्राह्मणोक्तो यो न्यूङ्खविधिरेकाक्षरद्व्यक्षरत्र्यक्षरचतुरक्षरैरिति सोऽयमर्धर्चाद्योरित्यनेन सूचितो भवति । यस्तु खलु पक्षस्तत्रैव सिद्धान्तितः ' तस्माद्द्व्यक्षरेणैव न्यूङ्खयेत् ' इति तमेव पक्षमङ्गीकृत्येदानीं न्यूङ्खो विधीयते द्वितीयं स्वरमित्यादिना ।

**तस्य तस्य चोपरिष्टादपरिमिता-
न्पञ्च वाऽर्धौकारानुदात्तान् ।**

तस्य तस्यौकारस्योपरिष्टादर्धौकाराननुदात्तानपरिमितांस्त्रींश्चतुरः पञ्च वा ब्रूयात् । यत्र संख्याविशेषं निर्दिश्यापरिमितशब्दं ब्रवीति तत्र निर्दिष्टात्संख्याविशेषादुपरिष्टादपरिमितशब्दार्थो ग्रहीतव्यः । यत्र पुनरुपरिष्टात्संख्याविशेषो निर्दिष्टस्तत्र प्रागेव संख्याविशेषाद्बहुत्वे सत्येवानियतिर्ग्रहीतव्येति सिद्धम् । अर्धं च तदोकारश्चार्धौकार इति कर्मधारयः समासः ।

**उत्तमस्य तु त्रीन् ।**

उत्तमस्यौकारस्योपरिष्टात्त्रीनेवार्धौकारान्ब्रूयात् ।

**पूर्वमक्षरं निहन्यते न्यूङ्ख्यमाने ।**

निहन्यत इति अनुदात्ती क्रियत इत्यर्थः । न्यूङ्खाधिकारे पुनर्न्यूङ्ख्यमान इति वचनं प्रथमे द्वितीये चतुर्थे वाऽक्षरे न्यूङ्ख्यमानेऽपि तस्मात्पूर्वमक्षरं निहन्यत इत्येवमर्थम् ।

---

१ झ. °ऋचा या° । २ क. °वदर्ध° । ३ क. ङ. °रादित° । ४ ङ. झ. °सने वि° । ५ ग. ङ. च. °स्थायामे° । ६ घ. ङ. च. झ. °शेषानिर्दिष्टस्याप° । ७ क. ग. घ. ङ. झ. °मस्योका°

**तदपि निदर्शनायोदाहरिष्यामः ।**

उक्तलक्षणस्यापि न्यूङ्खस्यार्धौकारस्वरूपस्यालौकिकत्वादन्यदप्येवंजातियकं संदेहं व्यावर्तयितुं निदर्शनं क्रियते ।

**आपो ३ ऽ० ऽ० ऽ० ऽ० ऽ० ओ ३ ऽ० ऽ० ऽ० ऽ०**
**ऽ० ओ ३ ऽ० ऽ० ऽ० रेवतीः क्षयथा हि वस्वः क्रतुं च**
**भद्रं बिभृथामृतं च रायो ३ ऽ० ऽ० ऽ० ऽ० ऽ० ओ ३**
**ऽ० ऽ० ऽ० ऽ० ऽ० ओ ३ ऽ० ऽ० ऽ० श्च स्थः स्वप-**
**त्यस्य पत्नीः सरस्वती तद्गृणते वयोधो ३ मापो ३ ।**

आपो प्लुतः ३, ऽ० ऽ० ऽ० ऽ० ऊँ रेव० रायो प्लुतः ३, ऽ० ऽ० ऽ० ऽ० ऊँ० श्च स्थः० यो धो ३ मापो प्लुत इत्येवं न्यूङ्खपुनरावृत्तिप्रदर्शनं प्रत्यावृत्तिन्यूङ्खप्रापणार्थम् । अयमेव पाठोऽविच्छिन्नसंप्रदायादागतः । यस्तु पुनः संहितानुरूपेण पाठः स प्रमादकृतत्वात्त्यक्तव्यः ।

**अग्निं न स्ववृक्तिभिरित्याज्यम् ।**

पादग्रहणेऽपीदं सूक्तमेव, आज्यस्थाने विधानात् । अत्र पादग्रहणस्य प्रयोजनमन्वेषणीयम् ।

**तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च ।**

तस्य सूक्तस्य याः पुरस्तात्प्रागुत्तमाया ऋचस्तासां तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च कर्तव्यः । उत्तमाऽपि न्यूङ्खनिनर्दरहिता शंस्तव्यैव ।

**उक्तो न्यूङ्खः ।**

उक्तसंकीर्तनमुत्तरविवक्षार्थम् ।

**स्वरादिरन्त ओकारश्चतुर्निनर्दः ।**

तृतीयेषु पादेषु निनर्द उक्तः । तेषु कस्मिन्प्रदेश इत्युच्यते । पादान्ते स्वरादिस्वरो वा टिप्रदेश इत्यर्थः । स ओकारश्चतुष्कृत्वो वक्तव्यः । स निनर्द उच्यते ।

तस्यैव विशेषमाह—

**उदात्तौ प्रथमोत्तमौ । अनुदात्तावितरौ उत्तरोऽनुदात्ततरः ।**

मध्यमयोरुत्तर इत्यर्थः ।

**प्लुतः प्रथमो मकारान्त उत्तमः । तदपि निदर्शनायोदाहरिष्यामः ।**

अत्रापि टिप्रदेशोपमर्दी निनर्दोऽनुपमर्दी वेत्येवमादिसंदेहनिवृत्त्यर्थं निदर्शनम् ।

---

१ ग. ऽ० ओ ३ ५ ओ ३ ३, रे० । २ ग. ऽ० ओ ३ ५ ओ ३ ३ श्च० । ३ क. ङ. °पनिनर्दी ।

आग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे ।
यज्ञो३ ओ ओ ओ ओ ओ ओ३ ओ ओ ओ ओ
ओ ओ३ ओ ओ ओ यस्तीर्णबर्हिषे विवोमदो ३
ओ ३ ओ ३ ओ३ शीरं पावकशोचिषं विवक्षसो
३ माग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे ।

पूर्वस्मिन्नर्धर्चे यो विग्रहः स आज्यत्वकारितो न न्यूङ्खनिनर्दकारितः । तेन द्वितीया-दिष्वृक्षु स न भवति । आवृत्तिप्रदर्शनार्थं पूर्वस्यार्धर्चस्य पुनः पाठः । सर्वत्र संहिता-पाठोऽपभ्रंश एव ।

ओ * ३ ओ ओ ओ ओ ओ ओ ३ ओ
ओ ओ ओ ओ ओ ३ ओ ओ ओ
मदेथमदेवो ३ ओ ३ ओ ३ ओ३
मो थामो दैवोमित्यस्य प्रतिगरः ।

न्यूङ्खनिनर्दाभ्यां प्रणवेन संबन्धाद्द्वितीयेऽर्धर्चेऽयं प्रतिगरो भवति पूर्वस्मिन्प्लुतादिरेव ।

**अपि वोदात्तादनुदात्तं स्वरितमुदात्तमिति चतुर्निनर्दः ।**

निनर्दरूपस्यौकारचतुष्टयस्य यथासंख्येन स्वरविशेषोऽनेन विधीयते । पूर्वोक्तस्यायं विकल्पः । तथाभूतशस्त्रनिनर्दे सति प्रतिगरनिनर्देऽपि तथाभावनिदर्शनेन दर्शयन्न्यूङ्खेन विना तद्दर्शनाशक्तेस्तत्सहितमेव दर्शितवानाचार्यः ।

**तदपि निदर्शनायोदाहरिष्यामः । आग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे । यज्ञो ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओ यस्तीर्णबर्हिषे विवोमदो ३ ओ ३ ओ ३ ओ ३ शीरं पावकशोचिषं विवक्षसो ३ माग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे । ओ ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओ मदेथमदेवो ३ ओ ३ ओ ३ ओ ३ मोथामोदैवोमित्यस्य प्रतिगरः ।**

गतार्थमेतत्सर्वम् ।

**प्रथमादर्धौकारादध्वर्युर्न्यूङ्खयेत् ।**

अवसाने प्रणवे च प्रतिगरो वक्तव्यः । तत्र प्रतिगरान्तर्वर्तिनः प्रणवस्य ऋगन्तर्व-र्तिना प्रणवेन समानकालतासंपादनार्थं प्रतिगरान्तकालश्चतुर्भिः सूत्रैर्विधीयते प्रथमात् ।

* अत्र क. ग. ङ. झ. पुस्तकेषु सर्वे प्लुता ओकाराः निर्दिष्टाः ।

१ झ. °भूते श° । २ क. ग. ङ. °तत्सर्वत्र । प्र° । झ. °तत्पूर्वत्र । प्र° । ३ ग. झ. °न्तवर्ति° । ४ ग. झ. °न्तवर्ति । ५ घ. °रारम्भकालश्च ।

द्वितीयाद्वा ।

काललक्षणार्थमेतदुभयं प्रथमस्य वा द्वितीयस्य वाऽर्धौकारस्य यः कालस्तत्र प्रतिगर आरब्धव्यः । एतौ विधी वृषाकप्यादिष्वल्पाक्षरेषु भवतः । तयोस्तत्र संभवात् । वक्ष्यमाणौ तु बह्वक्षरेषु भवतः ।

व्युपरमं हैके ।

अस्मिन्पक्षे न्यूङ्खेन सह न्यूङ्खमारभ्य विविवमुपरम्योपरम्य न्यूङ्खेन न्यूङ्खं निनर्देन निनर्दं प्रणवेन प्रणवं संपादयेत् । उपरमणं चात्र विलम्बनमुच्यते नावसानम् । अस्य पक्षस्याभिमतत्वसूचनार्थं हशब्दं पठितवानाचार्यः ।

यथा वा संपादयिष्यन्तो मन्येरन् ।

एवमारब्धे प्रणवेन प्रणवः संपादयितुमशक्यत[2] इति मन्यन्ते चेत्तथाऽऽरम्भः कर्तव्य[3] इत्यर्थः ।

वायो शुक्रो अयामि ते वि हि होत्रा अवीता वायो शतं हरीणामिन्द्रश्च वायवेषां सोमानामाचिकिता न सुक्रतू आ नो विश्वाभिरूतिभिस्त्यमु वो अप्रहणमपत्यं वृजिनं रिपुमम्बितमे नदीतम इत्यानुष्टुभं प्रउगम् ।

अत्राप्यानुष्टुभवचनं ब्राह्मणानुवादः । अत्र तु विशेषोऽप्यस्ति । वैश्वदेवस्तृच औष्णिहस्तत्र द्वादशाक्षराणि न्यूनानि परिधानीया बृहती तस्यास्त्रिभिर्वचनैर्द्वादशाक्षराण्यधिकानीति सर्वा अनुष्टुभ एवेति ।

एकपातिन्यः प्रथमः[4] ।

तृचेस्त्रिप्रतीक इत्यर्थः ।

तं त्वा यज्ञेभिरीमह इदं वसो सुतमन्ध
इति मरुत्वतीयस्य प्रतिपदनुचरौ ।

प्रतिपदनुचरयोः सहचारित्वादेको न प्राप्नोतीति प्राकृतस्यानुचरस्य विधानम् ।

श्रुधीहवमिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयम् ।

इदं मरुत्वतीयं द्विसूक्तम् । तत्र किं द्वयोः सूक्तयोर्निविद्धयोतैकस्मिन्निति संदेहः । यद्येकस्मिंस्तदा पूर्वस्मिन्नुत परस्मिन्निति । एवमन्यत्रापि सूक्तबहुत्वेऽपि संदेहः स्यात्तन्निवृत्त्यर्थमाह—

---

१ घ. °रारम्भकालश्च° । २ ग. °यितुं श° । ३ ध. च. °क्य इ° । ४ झ. °मः । त्रिप्र° । ५ च. °चस्य त्रिः प्र° ।

**अन्त्ये निविदं दध्यादनेकभावे सूक्तानाम् ।**

सर्वार्थेयं परिभाषा ।

**वैराजं चेत्पृष्ठं पिबा सोममिन्द्र मन्दतु त्वेति स्तोत्रियानुरूपौ ।**

बृहत्पृष्ठ उक्तावेव ।

**कुह श्रुत इन्द्रो युध्मस्य त इति निष्केवल्यम् । श्रुधीहवीयस्य तु तृच आद्येऽर्धर्चादिषु न्यूङ्खः ॥**

अस्य सूक्तस्याऽऽद्ये तृचेऽर्धर्चे न्यूङ्खः । आदिग्रहणं न केवलं द्वितीयाक्षर एव न्यूङ्खः कर्तव्यः । क्व तर्हि, आद्ये द्वितीये तृतीये चतुर्थे वा कर्तव्यो न्यूङ्ख इति गम्यते ।

**एवं कुहश्रुतीयस्य ।**

एवमित्यनेन तृच आद्येऽर्धर्चादिषु न्यूङ्ख इति गम्यते ।

**विराजां मध्यमेषु पादेषु ।**

विराज इति ' पिबा सोममिन्द्र मन्दतु त्वा ' इति षळृच उच्यन्ते । तासां मध्यमेषु पादेषु न्यूङ्खः कर्तव्यो द्वितीय एवाक्षरे, अत्राऽऽदिशब्दाभावात् ।

**नित्य इह प्रतिगरो न्यूङ्खादिः ।**

अस्मिन्न्यूङ्खप्रकरणे नित्य एव प्रतिगरः ' ओथामो दैव ' इति स एव न्यूङ्खादिर्भवति । तस्य यदाद्यमक्षरं तस्मिन्नेव न्यूङ्खः कर्तव्य इत्यर्थः ।

**प्रणवान्तः प्रणवे कुहश्रुतीयानाम् ।**

कुहश्रुतीयानां द्वितीयेऽर्धर्चे यः प्रतिगरो न्यूङ्खादिः स प्रणवान्तश्च भवति । यः पुनः कुहश्रुतीयानामेव चतुर्थ्यादिष्वृक्षु द्वितीयेऽर्धर्चे प्रतिगरः स प्लुतादिरेव ।

प्रणवान्तः प्रणवे कुहश्रुतीयानामित्येतदुपपादयति—

**अर्धर्चशश्चैनदुत्तमावर्जम् ।**

उत्तमा त्रिष्टुप्सा पच्छः शस्या, अन्या बृहत्योऽनुष्टुभश्च ता अर्धर्चशः शस्याः । तेन प्राप्तमेवानूद्यते प्रणवान्तत्वोपपादनार्थम् । अतो हिशब्दस्थाने चशब्दो द्रष्टव्यः ।

**न ते गिरो अपि मृष्ये तुरस्य प्रवो महे महि-वृधे भरध्वमिति चतस्रस्तिस्रश्च विराजः ।**

विराज इतिवचनं विराज एवैता भवन्ति नैतासु विराड्धर्मो न्यूङ्खादिरित्येवमर्थम् । तथा चोक्तं ' न न्यूङ्ख्या विराजः ' इति ।

---

१ ग. घ. च. झ. °र्चेषु न्यू° । २ ग. ङ. झ. प्रतिक° ।

**तासामूर्ध्वमारम्भणीयाभ्यस्तृचानावपेरन् ।**

एताः सप्त ऋच उक्ताः । एतासामेव सप्तानां चतुर्थेऽहनि माध्यंदिने सवने होत्रकाः स्वे स्वे शस्त्र आरम्भणीयाभ्य ऊर्ध्वमेकैकं तृचमावपेरन्नित्याह—

**आद्यं मैत्रावरुणस्तस्योत्तमादि-**
**शस्तानां तृचं ब्राह्मणाच्छंसी ।**

तस्येति । तेनेत्यर्थः । तेन मैत्रावरुणेन शस्तानामुत्तमामृचमारभ्य यस्तृचस्तं ब्राह्मणाच्छंस्यावपेतेत्यर्थः ।

**तस्य चाच्छावाकः ।**

तस्येति पूर्ववत् । शेषश्च पूर्ववत् ।

**यजामह इन्द्रं वज्रदक्षिणमिति द्वितीयानेवमेव ।**

द्वितीयवचनमेषां तृचानां पूर्वैस्तृचैः समुच्चयार्थम् । एवमेव पूर्ववत्सप्तभिर्ऋग्भिस्त्रयस्तृचाः कर्तव्या इत्येवमर्थम् ।

**पञ्चमेऽहनि यद्विद्धि सत्यसोमपा इत्येकैकमेवमेव ।**

अस्मिन्नेव[1] प्रसङ्गे ग्रन्थलाघवार्थं पञ्चमषष्ठयोरप्यह्नोस्तेष्वेव शस्त्रेषु तस्मिन्नेव स्थान एकैकं तृचं विदधात्यत्रस्थ एव भगवान्सूत्रकारः ।

**षष्ठेऽहनीन्द्राय हि द्यौरसुरो अनम्नतेत्येवमेव ॥ ११ ॥**

एवमेवेति पूर्ववदित्यर्थः ॥ ११ ॥

**स्तोमे वर्धमाने को अद्य नर्यो वनेन वाय आया-**
**ह्यर्वाङित्यष्टर्चान्यावपेरन्नुपरिष्टात्पारुच्छेपीनाम् ।**

माध्यंदिने सवने होत्रकाणामावाप ऊर्ध्वमारम्भणीयाभ्योऽधिकृतः । अथेदानीं स्तोमवृद्धिनिमित्त आवाप उच्यते । तेषामेव होत्रकाणां तेष्वेव शस्त्रेष्वेतानि त्रीणि सूक्तानि त्रयाणामेकैकमेकैकस्य यथासंख्येन भवन्ति । अष्टर्चवचनमेतेषां कृत्स्नावापसिद्ध्यर्थम् । तेनात्राऽऽवापस्य निमित्ते सति यथार्थावापो न कर्तव्यः । आवापाधिकारे पुनरावपेरन्निति बहुवचनं विवक्षार्थम् । तेनैकस्याऽऽवापनिमित्ते सति द्वयोर्वा सर्वे होत्रका आवपेरन्निति साधितं भवति । उपरिष्टात्पारुच्छेपीनामित्ययमूर्ध्वमारम्भणीयाभ्य इत्यस्यापवादः । पारुच्छेपिग्रहणं पूर्वोक्तानामावापानां प्रदर्शनार्थम् । तेनायमर्थोऽवगतो भवति—तृचावापवत्स्वहःसु तृचेभ्य ऊर्ध्वमतिशंसनावापोऽन्यत्राऽऽरम्भणीयाभ्य ऊर्ध्वमिति ।

---

१ च. °व सूत्रम°। २ ङ. च. °तृचोऽन्त्य ऊ°।

**तैरप्यनतिशस्त ऐन्द्राणि त्रैष्टुभान्यमरुच्छन्दान्यावपेरन् ।**

तैरष्टर्चैः शस्यमानैरपि स्तोमो यद्यतिशस्तो न भवेत्तदैन्द्राणि सूक्तानि मरुच्छन्दवर्जितान्यावपेरंस्त्रिष्टुप्छन्दस्कानि । अस्माद्वचनादेते त्रयोऽर्था अवगम्यन्ते—अष्टर्चानामप्यतिशंसनार्थत्वात्तैरनतिशस्त ऐन्द्राणामावापो नाष्टर्चावापेन विनैन्द्रैरेवातिशंसनमिति । तेनाष्टर्चावापे कृते तैरप्यनतिशस्ते स्तोम इन्द्रदेवत्यानि मरुच्छन्दवर्जितानि त्रैष्टुभानि सूक्तान्यावपेरन् । अन्यत्रोपयुक्तान्यनुपयुक्तानि वाऽभूरेक इत्येवंप्रकाराणि । त्रैष्टुभवचनं व्यूह्ळादिषु गायत्रं माध्यंदिनं जागतं माध्यंदिनमित्येवमादौ वचने सत्यपि त्रैष्टुभानामेवाऽऽवापसिध्यर्थम् । आवपेरन्निति पुनर्वचनमहरन्तरेष्वप्यस्य विधेः प्रापणार्थम् । तेनायमावापः सत्रेषु सर्वेष्वहःसु स्तोमातिशंसनार्थं भवति ।

**न त्वेतान्यनोप्यातिशंसनम् ।**

एतान्यष्टर्चान्यनोप्यान्यैरतिशंसनं नैव कर्तव्यम् । 'एकाहाहीनेष्वपीति' अनेन सूत्रेणाष्टर्चानां सर्वार्थत्वं विधीयते । पूर्वसूत्रेण यत्सर्वार्थत्ववचनं तत्सत्रेष्वेवाहरन्तरेषु प्राप्त्यर्थतयाऽप्युपपद्यत इत्यनेनैवाष्टर्चानामेकाहाहीनेषु प्राप्तिर्विधीयते । एतदेवात्र विधित्सितं नान्यदिति ।

**एकया द्वाभ्यां वा प्रातःसवने ।**

अतिशंसनमुक्तं तदेतावतीभिरित्युच्यते । एकयर्चा द्वाभ्यां वा ऋग्भ्यां प्रातःसवने स्तोमोऽतिशंस्तव्यः ।

**अपरिमिताभिरुत्तरयोः सवनयोः ।**

त्रिप्रभृतिभिर्ऋग्भिरुत्तरयोः सवनयोरतिशंसनं कर्तव्यमिति । अस्मिन्सूत्र उत्तरयोः सवनयोरितिवचनादेव पूर्वसूत्रस्य प्रातःसवनविषयत्वे सिद्धे यत्पूर्वसूत्रे प्रातःसवनग्रहणं करोति तज्ज्ञापयति ब्राह्मणे विधिद्वयं तावदस्ति—अनवानं प्रातःसवने यजेदित्युक्त्वाऽनन्तरमेकां द्वे न स्तोममतिशंसेदित्युक्त्वाऽपरिमिताभिरुत्तरयोः सवनयोरित्येको विधिः । अपरस्त्वेकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेदित्युक्त्वाऽपरिमिताभिस्तृतीयसवन इति । विधिद्वयसूचनस्येदं प्रयोजनं मध्यंदिन एकया द्वाभ्यां वाऽपरिमिताभिर्वाऽतिशंसनं कर्तव्यमिति ।

**पञ्चमस्येममूषु वो अतिथिमुषर्बुधमिति नवाऽऽज्यम् ।**

पार्ष्ठिकस्य पञ्चमस्याह्न इममूषु व इति नवर्चमाज्यं भवति ।

---

१ क. च °यनति° । २ ङ. झ. °पेरन्त्रि° । ३ घ. ङ. च. °नि चाभू° । ४ ङ. च. °नेष्विति' । ५ घ. च. °नं माध्यं । ६ घ. च. दिने सवन ए° । ७ घ. च. वा प्रातःसवनेऽप° । ८ ग. घ. ङ. च. झ. ऋच आज्यं ।

**आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायो महेतन इत्येका रथेन पृथुपाजसा बहवः सूरचक्षस इमा उ वां दिविष्टयः पिबा सुतस्य रसिनो देवं देवं वोऽवसे देवं देवं बृहदु गायिषे वच इति बार्हतं प्रउगम् ।**

प्रथमस्तृचो द्विप्रतीकः । एवमस्य प्रउगस्य बार्हतत्वम्—द्वितीयं तृचं[1] मुक्त्वाऽन्येषु[2] षट्सु तृचेषु द्वितीयाः सतोबृहत्य उत्तमे तृतीया च ताः सप्त सन्ति । उत्तमायास्त्रिर्वचनेन नव सन्ति । नवसु बृहत्या अतिरिक्तानि षट्त्रिंशदक्षराणि तानि द्वितीये गायत्रे तृचे प्रक्षिप्य सर्वं बार्हतं भवति । श्रुतेरप्ययमेवाभिप्रायः ।

**प्रगाथानेके द्वितीयोत्तमवर्जम् ।**

द्वितीयोत्तमौ तृचौ वर्जयित्वाऽन्ये द्वृचा एव भवन्तीत्येकेषां मतम् । प्रगाथशब्देनात्र द्वृचत्वमेवेष्यते न प्रगाथधर्म आहावादिः, 'पुरोरुग्म्य आह्वयीत' इति तत्र नियमात् ।

**यत्पाञ्चजन्यया विशेन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ । अविताऽसीत्था हीन्द्र पिब तुभ्यमिति मरुत्वतीयम् ।**

इदं त्रिसूक्तम् ।

**शाक्वरं चेत्पृष्ठं महानाम्न्यः स्तोत्रियः । ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति ।**

ता महानाम्नीरध्यर्धकारं शंसेत्त्रिभिस्त्रिभिरध्यर्धैरवसाने[3] प्रणवं च कुर्यादित्यर्थः । ता अध्यर्धकारं शंसेद्यथा प्रकृत्या नव सत्यस्ता एव तिस्रो भवन्तीति सूत्रार्थः ।

**ताभिः पुरीषपदान्युपसंतनुयात् ।**

ताभिर्महानाम्नीभिः पुरीषपदान्युपसंतनुयात् । महानाम्न्यो नाम नवर्चो नव च पदानि पुरीषपदसंज्ञानि तासामृचामन्त्येन प्रणवेन प्रथमं पुरीषपदं संधाय ततः सर्वाणि यथापठितानि शंसेदन्त्ये प्रणवं कृत्वाऽनुरूपमुपसंतनुयात् ।

तत्रोऽऽद्येषु पञ्चसु शंसनविशेष उच्यते—

**पञ्चाक्षरशः पूर्वाणि पञ्च ।**

एवाह्येवैवेत्यवसाय[5][6] पञ्च पदानि शंसेत् । उत्तराणि यथापठितमेव, अपवादाभावात् । अन्त्ये च प्रणवः कर्तव्य एव ।

---

१ क. ग. ङ. तृचमुक्ताऽन्ये° । २ क. ङ. °ने नव । ३ घ. च. °रर्धचैर° । ४ छ. °त्रान्तेषु । च. °त्रान्येषु । ५ ग. ङ. च. झ. °ह्येवेत्य° । ६ घ. °वेत्येवमेव सा° ।

**सर्वाणि वा यथानिशान्तम् ।**

सर्वाणि वा नव पदानि यथापठितमेव शंसेत्, न पञ्चाक्षरशः पञ्च पदानीति । पञ्चानां पञ्चाक्षरशः शंसननिवृत्तिपरमेतत्सूत्रं न परेषां शंसनं तद्विशेषं वा विदधाति, अन्यत एव तस्यार्थस्य सिद्धेरिति ।

**योनिस्थाने तु यथानिशान्तं सपुरीषपदा उत्तमेन संतानः ।**

योनिशंसनस्थाने त्वयं विशेषः । तृचश्च यथानिशान्तमेव शंसेन्न केवलं पुरीषपदान्येव । यथानिशान्तवचनादृक्ष्वपि प्रणवो न कर्तव्यः । सपुरीषपदा इति पुरीषपदैः सह ऋचश्च यथापठितं शंस्तव्या इत्यर्थः । अस्मिन्नपि पक्ष उत्तमे पदे प्रणवं कृत्वा तेनोत्तरं संदध्यात् । अस्य विधेः प्रणवनिषेधपरत्वादुत्तमेऽपि पदे प्रणवनिषेधशङ्का स्यात्तन्निवृत्त्यर्थमुत्तमेन संतान इत्युक्तम् ।

**स्वादोरित्था विषूवत उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्निति त्रयस्तृचा अनुरूपः ।**

अनुरूपत्वादेता अध्यर्धकारमेव शंस्तव्याः ।

**प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम् ।**

इदमपि त्रिसूक्तमेव ।

**पाङ्क्ते पूर्वे सूक्ते मरुत्वतीये पाङ्क्ते निष्केवल्ये ।**

द्वयोः शस्त्रयोर्मध्यमे सूक्ते पाङ्क्ते एव । आद्ये तु शाक्वरातिजागते, तयोरपि पाङ्क्त्व-विधानं पङ्क्तिशंसनप्राप्त्यर्थम् । तेन तयोरपि प्रत्यृचमवसानद्वयं भवतीति गम्यते । अवसा-नस्थानमुत्तरत्र वक्ष्यति ।

**आद्ये तु त्रिष्टुबुत्तमे ।**

तत्र तत्र च ये द्वे पाङ्क्ते उक्ते तयोर्ये आद्ये सूक्ते तयोरुत्तमे त्रिष्टुभौ भवतः । त्रिष्टु-बुत्तमा यस्य तत्त्रिष्टुबुत्तमं ते द्वे इति त्रिष्टुबुत्तमे । 'श्यावाश्वस्य सुन्वतः' 'श्यावाश्वस्य रेभतः' इत्येते ऋचावक्षरतस्त्रिष्टुब्जगत्यौ साधारणे इति त्रिष्टुब्वचनम् । तथा शृणु त्वमेक इदनयोः पादयोरवसाने ।

**तयोरवसाने शतक्रतो समप्सुजिदिति मरुत्वतीये ।**

'अवितासि' इत्यत्रावसाने 'शतक्रतो समप्सुजित्' इति ।

**शचीपतेऽनेद्येति निष्केवल्ये निष्केवल्ये ॥ १२ ॥**

प्रेदं ब्रह्मेत्यत्रावसाने शचीपतेऽनेद्येति ॥ १२ ॥

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायामुत्तरषट्के प्रथमोऽध्यायः ॥ १ ॥

---

१ घ. च. °मध्ये सू° । २ घ. ङ. च. पादौ । तं° ।

अथ द्वितीयोऽध्यायः ।

---

**षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्ता-दन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति ।**

पृष्ठ्योऽधिकृतस्तस्य षष्ठमहरिदानीमुच्यते । तस्य षष्ठस्य[1] प्रातःसवने याः प्रस्थितयाज्या-स्तास्वयं[2] विशेषः । एकैकस्याः पुरस्तादेकैकामन्यामृचं[3] कृत्वोभाभ्यामनुच्छ्वसन्तो यागं कुर्युः । अन्या इति प्रकृतिभ्योऽन्या वक्ष्यमाणा इत्यर्थः । उभाभ्यामिति वचनमुभयोः[4] सहितयोरेव याज्यात्वसिध्यर्थं नैकैकस्या अपीति । अनवानन्त इतिवचनमुभयोः सर्वत्रान-वानसिध्यर्थम् ।

**वृषन्निन्द्र वृषपाणास इन्दवः सुषुमायातमद्रिभिर्व-नोति हि सुन्वन्क्षयं परीणसो मोषु वो अस्मदभितानि पौंस्यौषूणो अग्ने शृणुहि त्वमीळितोऽग्निं होतारं मन्ये दास्वन्तं दध्यङ्ह मे जनुषं पूर्वो अङ्गिरा इति ।**

सप्तैता ऋचः प्रस्थितयाज्याश्च सप्तैव साच्छावाकानामेतेन[6] तासां यथासंख्येन[7] भवन्ति ।

**एवमेव माध्यंदिनेऽध्यर्धा तु तत्रानवानम् ।**

तत्र माध्यंदिने सवने प्रस्थितयाज्यामध्यर्धामेवानवानं[8] ब्रूयात् । पूर्वामनुच्छ्वासेनो-क्त्वोत्तरां संधाय तस्या अर्धर्चेऽवसाय यष्टव्यमित्यर्थः । तत्रग्रहणं तत्रैव माध्यंदिनेऽध्य-र्धानवानं भवति, उत्तरसूत्रविहितानामृतुयाजानां[10] पूर्वोक्त एवोभाभ्यामनवानन्त इत्ययमेव विधिर्भवतीत्येवमर्थम् ।

**पिबा सोममिन्द्र सुवानमद्रिभिरि-न्द्राय हि द्यौरसुरो अनम्नतेति षट् ।**

एताः सप्त माध्यंदिन आगन्तवः प्रस्थितयाज्याः ।

**उपरिष्टात्त्वृच ऋतुयाजानाम् ।**

अन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति प्रेष्यति[11] चेति शेषः ।

---

१ ग. ङ. झ. °जन्तीति । पृ° । २ घ. च. °ष्ठस्याह्नः प्रा° । ३ ब. च. °स्तासामयं° । ४ च. °मृचमुक्त्वो° । ५ घ. च. °योः संगत° । ६ घ. च. °कानां त° । ७ ब. °संख्यं भवति । ए° । ८ घ. च. °ज्यानाम° । ९ घ. च. °नुच्छ्वसन्नुक्त्वो° । १० क. °तानां ऋतु° । ११ ब. प्रेष्यन्ति चे° ।

**प्रैषमृते सौयजमृचं चानवानमु-
क्त्वर्गन्तैरसौ यजेति प्रेष्येत् ।**

ऋतुप्रैषान्होतर्यजेत्यादिशब्दरहितानुक्त्वा तैर्ऋचः संधाय ऋगन्ते होतर्यजेत्यादिशब्दान्संधाय तैर्मैत्रावरुणः प्रेष्यति ।

**एवमेव यजन्ति ।**

एवंक्रमात्तयोरेव होता यक्षदसौ यजयोः स्थान आगूर्वषट्कारौ कृत्वा यजन्तीत्यर्थः ।

**तुभ्यं हिन्वानो वसिष्टगा अप इति ।**

एता ऋतुयाजानामृचः ।

**अयं जायत मनुषो धरीमणीत्याज्यम् ।**

एतत्सूक्तमस्याह्न आज्यं भवति । आज्यकार्यस्य प्रकृतौ सूक्तसाध्यत्वात्पादग्रहणेऽपीदं सूक्तमेव भवति । पादग्रहणं ब्राह्मणानुवादः ।

**एकेन द्वाभ्यां च विग्रहः ।**

आज्याद्यायाः प्रथमेऽर्धर्चे विग्रहः प्रकृतिप्राप्तः । अत्र च प्रथमार्धर्चस्य त्रिपात्त्वात्कथं विग्रह इति संशयनिवृत्त्यर्थमिदमुच्यते । पूर्वमेकः पादः पश्चाद्द्वौ पादौ यथा भवति तथा विग्रहः कर्तव्य इत्यर्थः ।

**त्रिभिरवसानं चतुर्भिः प्रणवो यत्रार्धर्चशः पारुच्छेप्यः ।**

सप्तपदानां पारुच्छेपीनामनेकार्धर्चत्वादसकृदवसाने प्राप्त इदमुच्यते त्रिभिरवसानं चतुर्भिः प्रणव इति । अत एवायं विधिः पारुच्छेपीनां सप्तपदानामेव भवतीत्युक्तम् । अतः सप्तपदानां त्रिभिरवसानं चतुर्भिः प्रणवो न संभवतीति । पच्छःशस्यानामुपरिष्टाद्विधीयमानत्वाद्यत्र पारुच्छेप्य इत्येतावदुक्तेऽप्यर्धर्चस्य विषय एवायं विधिर्भवति तत्र किमित्यर्धर्चश इत्युच्यते । तस्येदं प्रयोजनम् । यदा पुनरयारुचेति पारुच्छेप्यो ग्रावस्तोत्रं प्राप्नुवन्ति तत्राप्यवसानप्रणवयोरयमेव विधिर्भवतीत्येवमर्थमर्धर्चश इतिवचनम् ।

**स्तीर्णं बर्हिरिति तृचौ सुषुमायातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनावर्मह इन्द्र वृषान्निन्द्रास्तु**

---

१ ङ. च. झ. मुक्त्वा ऋ° । २ घ. ङ. च. झ. °गन्तैर्होत° । ३ ङ. झ. °शब्दौ सं° । ४ ङ. झ. °क्रमध्याह्न । ५ ङ. झ. त्रिपद° । ६ ध. च. °त्र पच्छः पा° । ७ घ. °र्धर्चशस्यस्य । ८ क. ग. झ. °शस्य ह° । ९ घ. ङ. च. झ. तदाऽप्य° ।

**श्रौषळोषू णो अग्ने शृणुहि त्वमीळितो ये देवासो दिव्येकादश स्थेयमददाद्रभसमृणच्युतमिति प्रउगम् । द्वे चैका च पञ्चमे एकपातिन्य उपोत्तमे ।**

तृच इत्युभयत्र शेषः ।

**उत्तमेऽन्तृचमभ्यासा अष्टाक्षराः ।**

अष्टाक्षरा इत्यभ्यासविशेषणम् । अन्यपदार्थत्वाद्बहुव्रीहिः पुंलिङ्गं भवति । उत्तमे [1]तृच इयमददादित्यस्मिन्प्रत्यृचमन्ततो यान्यष्टावक्षराणि तानि द्विरुक्त्वा प्रणवः कर्तव्य इत्यर्थः ।

**न वा ।**

वाशब्दः पक्षं व्यावर्तयति नैवाभ्यासः कर्तव्यः । श्रुतावतिच्छन्दःशब्दस्य विधेयत्वं मन्यमानेनाभ्यास उक्तः । तस्य [2]विधेयत्वं न संभवति प्राप्तार्थत्वात्पारुच्छेपीषु तृचेषु । अतोऽनुवादत्वेनात्रावगता । न [3]त्वेकः शब्दः प्राप्तमनुवदत्यप्राप्तं चात्र विदधाति । तेनात्र प्रउगेतिच्छन्दःशब्दः पारुच्छेपशब्दश्च ब्राह्मणग्रामशब्दवत्प्रयुक्ताविति सिद्धम् ।

**स पूर्व्यो महानां त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ यं त्वं रथमिन्द्र स यो वृषेन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम् ।**

अन्त्येन तृचेन सह त्रीणि सूक्तान्यत्र ।

**एकेनाग्रेऽवसाय द्वाभ्यां प्रणुयाद्द्वाभ्यामवसाय द्वाभ्यां प्रणुयाद्यत्र पच्छः पारुच्छेप्यः ।**

यत्र विषये त्रिष्टब्जगत्यादीनां चतुष्पदानां पच्छःशंसनं विहितं तत्र पारुच्छेपीनामेवं भवति । एकेन पादेनाग्रेऽवसाय ततो द्वाभ्यां प्रणुत्य पुनर्द्वाभ्यां पादाभ्यामवसाय द्वाभ्यामेव प्रणुयात् । यत्रग्रहणं पारुच्छेपीनां सप्तपदानामेवायं विधिः स्यादित्येवमर्थम् । एतदुक्तं भवति—यास्वृक्ष्वेकेनाग्रेऽवसाय ततो द्वाभ्यां प्रणुयात्पुनश्च द्वाभ्यामवसाय द्वाभ्यामेव प्रणवः संभवति तासु पारुच्छेपीष्वयं विधिरिति । यत्र पच्छः पारुच्छेप्य इति [6]सार्वत्रिकोऽयं विधिरिति दर्शयति । तेन ‘ इन्द्राय हि द्यौरसुरो अनम्नत ’ इत्येवमादिष्वपि भवति । ‘ स नो नव्येभिः ’ इत्येवमादिष्वसप्तपदत्वान्न संभवति ।

---

१ क. पद । २ झ. °धेयार्थत्वं । ३ घ. च. ह्येकः । ४ ध. च. °प्तं च वि° । ५ ग. °त्य पु° । ६ क. ङ. झ. त्रिषूक्त° ।

**रैवतं चेत्पृष्ठं रेवतीर्नः सधमादे रेवाँ इन्द्रेवतः स्तोतेति स्तोत्रियानुरूपौ ।**

निष्केवल्यस्तोत्रे यदि रैवतं साम स्यादित्यर्थः । छन्दोगप्रत्ययत्वादनित्यवचनम् ।

**एन्द्र याह्युप नः प्रघान्वस्याभूरेक इति निष्केवल्यम् ।**

इदमपि त्रिसूक्तम् ।

**अभि त्यं देवं सवितारमोण्योरित्येका तत्सवितुर्वरेण्यमिति द्वे दोषो आगाद्बृहद्गायद्युमद्गेह्याथर्वण स्तुहि देवं सवितारं तमु ष्टुह्यन्तः सिन्धुं सूनुं सत्यस्य युवानम् । अद्रोघवाचं सुशेवं सधानो देवः सविता साविषद्वसुपतिः । उभे सुक्षिती सुधातुरिति वैश्वदेवस्य प्रतिपदनुचरौ ।**

एकाग्रहणमृचं पादग्रहणं इत्येवमादीनामेतच्छास्त्रोक्तानां परिभाषाणां खिलेष्वप्रवृत्तेः । तत्सवितुर्वरेण्यमित्यनयोरभिप्लवप्राप्तयोरप्यसति पुनर्वचने चतस्र एवर्चः प्रतिपदनुचरौ स्याताम् । तत्राभित्यमित्येषा ऋक्त्रिरभ्यस्ता प्रतिपत्स्यादन्यथा वा स्यादतस्तान्निवृत्त्यर्थं पुनर्वचनं कृतम् । इदं चैकाग्रहणस्य पुनर्वचनस्य³ प्रयोजनमेतास्तिस्र एवर्चः प्रतिपत्स्यात्' उपरितनाश्च तिस्र एवानुचरः स्यादित्येवमर्थम् । इतरथा ' विश्वो देवस्य नेतुः ' इत्यस्या अनैकाहिकत्वादुद्धारो न स्यादिति ।

**उद्धृत्य चोत्तमं सूक्तं त्रीणि ।**

अभिप्लवातिदेशात्प्राप्तानां सूक्तानामुत्तममुषासा नक्तेत्येतत्सूक्तमुद्धृत्य तत्स्थाने त्रीणि सूक्तानि वक्ष्यमाणानि भवन्तीत्यर्थः ।

कानि तानि केन वा क्रमेण शंस्तव्यानि कथं वा शंस्तव्यानीत्येतत्संशयनिवृत्त्यर्थमाह—

**इदमित्था रौद्रमिति ।**

एतदेकं सूक्तं शंस्तव्यमित्यर्थः ।

**प्रागुपोत्तमाया ये यज्ञेनेत्यावपते ।**

इदमित्थेत्येतस्य सूक्तस्योपोत्तमायाः प्राग्ये यज्ञेनेत्येतद्द्वितीयं सूक्तमावपेत् ।

**तस्यार्धर्चशः प्रागुत्तमाया ऊर्ध्वं चतुर्थ्याः ।**

तस्य ये यज्ञेनेत्यस्य चतुर्थ्या ऊर्ध्वमुत्तमायाः प्राग्याः षळृचस्ता अर्धर्चशः शंस्तव्याः ।

---

१ च. °मृचां पा° । २ ब. च. °गामित्ये° । ३ ग. घ. च. °स्य च प्र° । ४ ङ. °त्सूत्रमु° ।

' विरूपासः ' इत्येवमाद्याः ।[1] ' प्राक्छन्दांसि ' इत्यनेनैव प्राप्तस्य पुनर्वचनविच्छन्दसामुद्धारः सूक्तन्यायशंसनयोराश्विन एव प्रवृत्तिर्नान्यत्रेति प्रकटनार्थम् ।

शिष्टे शस्त्वा स्वस्ति नो मिमीतामश्विना भग इति तृचः ।

शिष्ट ' इति ' इदम् ' इत्यस्योपोत्तमोत्तमे[2] । अयं तृचस्तृतीयं सूक्तं भवति । शिष्टे शस्त्वैतं तृचं शंसेत् । उध्दृत्येतिवचनमुषासा नक्तेत्यस्यानैकाहिकस्यापि समुच्चयनिवृत्त्यर्थम् । त्रीणीत्यर्थसिद्धस्यास्य पुनर्वचनमुत्तमं सूक्तमुध्दृत्य तत्स्थाने त्रीणि सूक्तानि भवन्तीत्येवमर्थम् । इतरथोत्तमं सूक्तमुध्दृत्येदमित्येत्यस्य प्रागुपोत्तमायाः शंसेदित्येवमाद्या भ्रान्तयः स्युरिति । आवपत इतिग्रहणमन्यत्राप्यनयोः सूक्तयोः प्राप्तौ प्रागुपोत्तमाया एवैतत्सूक्तमावप्तव्यमित्येवमर्थम् ।

इति वैश्वदेवम् ॥ १ ॥

वैश्वदेवाधिकारे पुनर्वैश्वदेवग्रहणं विस्पष्टार्थम् ॥ १ ॥

होत्रकाणां द्विपदास्विहोक्थ्येषु स्तुवते ।

इह पार्ष्ठिके षष्ठेऽहनि तृतीयसवने होत्रकाणामुक्थ्यसंज्ञकेषु शस्त्रेषु द्विपदास्वृक्षुच्छन्दोगाः स्तुवते । होत्रकाणामित्ययमधिकारार्थः । तस्योपयोगमुत्तरत्र वक्ष्यामः । द्विपदाग्रहणं लक्षणतो द्विपदात्वे सिद्धेऽपि समाम्नायप्रसिद्धेर्बलीयस्त्वार्थम् । इहेति विस्पष्टार्थम् । उक्थ्यानीति तार्तीयसवनिकानां होत्रकशस्त्राणां संज्ञा । शंसनविशेषविधानार्थः परकर्तृकस्तवनोपदेशः ।

त ऊर्ध्वमनुरूपेभ्यो विकृतानि शिल्पानि शंसेयुः ।

ते होत्रका अनुरूपेभ्य ऊर्ध्वं वालखिल्यादीनि शिल्पसंज्ञकानि विहरणन्यूङ्खनिनर्दादिभिर्विकृतानि शंसेयुः । त इति वचनं होत्रका एवानुरूपेभ्य ऊर्ध्वं शिल्पानि शंसेयुर्होता त्वन्यत्रेति ज्ञापनार्थम् । तेन नाभानेदिष्ठस्यापि शिल्पत्वं साधितं भवति । ऊर्ध्वमनुरूपेभ्य इति शिल्पानां स्थानविधानम् । विकृतानीतिवचनं विकृतान्यविकृतानि चेति शिल्पानां द्वैविध्यप्रदर्शनार्थम् । तेनैषु त्रिषु शस्त्रेषु विकृतानि शिल्पानीति विद्यात् । यानि पुनः प्रकृत्या शिल्पानि शंसेयुरित्यत्रोक्तानि तान्यविकृतानीति विद्यात् । द्वैविध्यप्रदर्शनस्य प्रयोजनं शिल्पान्यविकृतानि शंसेयुरित्यत्राविकृतानामेव प्रापणार्थम् ।

---

१ ग. घ. च. चनं वि° । २ च. °मे ' स गृणानः ' इत्यादिके । अ° । ३ ब. शस्त्वा पूर्व । ४ ग. घ. °स्या एका° । ५ घ. ङ. °सेयुरित्ये° । ६ ङ. झ. °यतानि° । ७ ब. ङ. च. °युः । शंसेयुरिति । ८ च घ. द्विधेऽस्या° । ९. °रित्यारभ्योक्ता° ।

**मैत्रावरुणस्याग्ने त्वं नो अन्तमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपावथ वालखिल्या विहरेत्।**

अथास्मिन्नवसरे वालखिल्या ऋचो विहरेत्। ताश्च 'अभिप्रवः सुराधसम्' इत्येवमाद्याः।

**तदुक्तं षोळशिना।**

तद्विहरणं षोडशिना व्याख्यातं 'पादान्व्यवधाय' इत्येवमादिना।

तस्यैव विशेषं वक्तुमाह—

**सूक्तानां प्रथमद्वितीये पच्छः।**

या वालखिल्यसंज्ञका ऋचस्ता अष्टौ सूक्तानि, तेषां ये प्रथमद्वितीये सूक्ते ते परस्परं पच्छो विहरेदित्यर्थः।

**तृतीयचतुर्थे अर्धर्चश ऋक्शः पञ्चमषष्ठे व्यतिमर्शं वा विहरेत्।**

अयमन्यो[2] विहारप्रकार उच्यते। व्यतिमृश्य व्यतिमृश्य वा विहरणं कर्तव्यं व्युत्क्रमेणेत्यर्थः।

तमेव विवृणोति—

**पूर्वस्य प्रथमामुत्तरस्य द्वितीययोत्तरस्य प्रथमां पूर्वस्य द्वितीयया।**

पूर्वस्य सूक्तस्य प्रथमामृचमुत्तरस्य सूक्तस्य द्वितीयया ऋचा विहरेत्। उत्तरस्य प्रथमामृचं पूर्वस्य द्वितीयया ऋचा विहरेत्।

एवं प्रथमद्वितीययोः सूक्तयोर्द्वयोर्द्वयोर्ऋचोर्विहार उक्तः। अथेदानीं तयोरेव सूक्तयोरन्यासामृचामेवंप्रकारस्य व्यतिमर्शविहारस्य प्रापणार्थमाह—

**तयोर्नानर्चा।**

ऋचामिति शेषः। तयोः सूक्तयोः। शिष्टानामप्यृचां मध्य एकैकामृचं व्युत्क्रमस्थामनेन प्रकारेण व्युत्क्रमस्थया पृथक्पृथग्विहरेदित्यर्थः।

**प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत्प्रथमद्वितीयाभ्यां प्रणुयात्तृतीयोत्तमाभ्यामवस्येत्तृतीयोत्तमाभ्यां प्रणुयात्।**

ऋग्व्यतिमर्श उक्तः। पादव्यतिमर्शश्च कर्तव्यः। स एतैश्चतुर्भिः सूत्रैरुच्यते। प्रथमद्वितीयाभ्यामित्येते शब्दा ऋग्द्वयापेक्षया कल्पनीयाः।

प्रथमद्वितीययोः सूक्तयोर्व्यतिमर्शविहार उक्तः। अथेदानीमुत्तरेषामाह—

**एवं व्यतिमर्शमर्धर्चश उत्तरे। एवं व्यतिमर्शमृक्श उत्तरे।**

व्यतिमर्शाधिकारे पुनर्व्यतिमर्शग्रहणं प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत्प्रथमद्वितीयाभ्यां प्रणुयादित्येवमादिनिवृत्त्यर्थम्। अतस्तृतीयचतुर्थयोः सूक्तयोः प्रथमेनार्धर्चेनाव-

---

१ क. ग. घ. ङ. च. यास्ता वा°। २ च. °न्योऽपि वि°।

स्येत् । द्वितीयेन प्रणुयात् । पुनश्च प्रथमेनावसाय द्वितीयेन प्रणुयादिति । इदं च ऋग्विषयमेव । पञ्चमषष्ठयोः प्रथमां शस्त्वोत्तरस्य द्वितीयां शंसेत् ।

पुनश्चैवम्—

**विपरिहारेद्वेवोत्तमे सूक्ते गायत्रे सर्वत्र ।**

ये वालखिल्यानां सप्तमाष्टमे सूक्ते तयोर्विपर्यासं कृत्वा शंसेत् । अष्टमं पूर्वं शस्त्वा पश्चात्सप्तममित्यर्थः । एवकारो विपरिहार एवात्र तयोः कर्तव्यो न विहारप्रतिगर इत्येवमर्थः । उत्तमवचनमष्टावेव सूक्तानि वालखिल्यशब्दवाच्यानीत्येवमर्थम् । गायत्रवचनमुत्तमायाः पङ्क्तेः पङ्क्तिशंसननिवृत्त्यर्थम् । अतोऽसावर्धर्चशः शंस्तव्या । सर्वत्रवचनमस्य विधेः पूर्वस्मिन्नपि प्रापणार्थम् ।

**इमानि वां भागधेयानीति प्रागुत्तमाया आहूय दूरोहणं रोहेत् ।**

वालखिल्याभ्य ऊर्ध्वमिमानि वां भागधेयानीत्येतत्सौपर्णसूक्तं शंसेत् । तस्य प्रागुत्तमाया ऋच आहूय दूरोहणं रोहेत् । आहावोऽयमपूर्वो विधीयते । दूरोहणमिति वक्ष्यमाणस्य[1] शंसनस्य संज्ञा । रोहेदिति शंसेदित्यर्थः ।

तच्छंसनमारोहणावरोहणस्वरूपमिति कृत्वा रोहेदित्युक्तं तदिदानीमुच्यते—

**हंसः शुचिषदिति पच्छोऽर्धर्चशस्त्रिपद्या चतुर्थमनवानमुक्त्वा प्रणुत्यावस्येत्पुनस्त्रिपद्याऽर्धर्चशः पच्छ एव सप्तमम् ।**

एतामृचमित्थं शंसेत् । प्रथमं पच्छः, द्वितीयमर्धर्चशः, तृतीयं त्रिभिः पादैरवसायोत्तमेन पादेन प्रणुत्य, चतुर्थमनवानमुक्त्वा प्रणवेनावस्येत् । एतदारोहणम् । अथावरोहणम् । पुनस्त्रिपद्येत्येवमादिनोक्तं पञ्चमम्, अर्धर्चशः षष्ठं, पुनः पच्छः सप्तमम् । एतद्दूरोहणं भवति । सप्तमवचनमियमेवर्क्सप्तकृत्वोऽभ्यस्ता दूरोहणमिति ज्ञापनार्थम् । एवकारः पौनर्वाचनिकः ।

**एतद्दूरोहणम् ।**

दूरोहणमिति प्रकृते पुनर्दूरोहणवचनं द्विविधं दूरोहणमस्तीति प्रदर्शनार्थम् । तेन स्वर्गकामस्य चतुरभ्यस्तैव दूरोहणं भवति । तथा च श्रुतिः—' अथ य एककामाः स्युः ' इत्यादिः ।

---

१ ख. ङ. च. झ. शस्त्वा द्वि° । २ च. वोऽयं पू° । ३ च. °ण विषयस्य । ४ च. °चनं नियमेन ऋ° । ग. ख. ङ. झ. °चनमेवमियमृक्स° ।

**आवां राजानाविति नित्यमैकाहिकम् ।**

दूरोहणानन्तरमस्य सूक्तस्योत्तमां शस्त्वाऽऽवां राजानाविति शंसेत्, अन्यदैकाहिकमर्थ-लुप्तं भवति । ऐकाहिकस्य नित्यवचनादनैकाहिकमनित्यमिति दर्शयति । तथा च श्रुतिः— 'तं यदि दर्प एव विन्देत्' इति ।

**इति नु हौण्डिनौ ।**

यावेतावुक्तौ विहारौ तौ हौण्डिनसंज्ञकावित्यर्थः ।

**अथ महावालभित् ।**

अथानन्तरं महावालभिन्नामैको विहारो वक्ष्यत इत्यर्थः ।

**एतान्येव षट् सूक्तानि व्यतिमर्शं पच्छो विहरेद्व्यतिमर्शमर्धर्चशो व्यतिमर्शं सूक्तशः ।**

वालखिल्यानामादितः षट्सूक्तानि[1] त्रिप्रकारं विहरेदित्यर्थः । एवकारः पौनर्वाचनिकः ।

**प्रगाथान्तेषु चानुपसंतान ऋगावानमेकपदाः शंसेत् ।**

वालखिल्यानां षट्सूक्तानामष्टाविंशतिः प्रगाथास्तेषामन्तेष्वनुपसंतानर्गावानमुक्त्वा[2] वक्ष्यमाणा एकपदाः शंसेत् । अनुपसंतानं चर्गावानं चानुपसंतानर्गावानम् । विवृत्तिरत्र च्छान्दसी । अनुपसंतानर्गावानशब्दयोर्द्वंद्वैकवद्भावः । तौ चैकपदानां शंसनक्रिया[3] विशेषणत्वेन संबध्येते । तेनानुपसंतानविशिष्टमृगावानविशिष्टं च प्रगाथे प्रगाथे समाप्त एकपदानामेकैकां शंसेदित्यर्थः । अनुपसंतानता चैकपदानामृगावानवचनादेवोत्तरैः प्रगाथैर्न विधातव्या भवति । अतः पूर्वैः प्रगाथान्तैरेव संबध्यते । तस्य चैकपदानां शंसनविशेषणत्वेनोपादानान्नायं संतानप्रतिषेधपरः, नाप्यवसानविधिपरश्च । अतो यः प्रगाथान्ते प्रणवः स त्रिमात्र एव भवति । ऋगन्तत्वात्प्रणवस्य प्राप्तिरस्ति । अवसानविध्यभावाच्चतुर्मात्रता[4] नास्तीति सिद्धम् ।

**इन्द्रो विश्वस्य गोपतिरिन्द्रो विश्वस्य भूपतिरिन्द्रो विश्वस्य चेततीन्द्रो विश्वस्य राजतीति चतस्रः ।**

एताश्चतस्रो दशमेऽहनि श्रुतावुत्पन्ना अप्येता आचार्येणात्रैव पठिताः ।

**एकां महाव्रतादाहरेत् ।**

'इन्द्रो विश्वं विराजति' इत्येतामित्यर्थः ।

---

१ घ. ङ. च. झ. °क्तान्यष्टा° । २ घ. ङ. च. झ. °मुक्तं व° । ३ च. याया वि° । ४ ङ. °ताऽस्ती° ।

**त्रयोविंशतिमष्टाक्षरान्पादान्महानाम्नीभ्यः सपुरीषाभ्यः ।**

महानाम्नीषु[1] पुरीषपदास्वपकर्षणेऽष्टाक्षरास्त्रयोविंशतिरेव पादाः सन्ति तान्सर्वानाहरेत् । तैः[3] सहाष्टाविंशतिरेकपदा भवन्ति* ।

**षोळशिनोक्तः प्रतिगरोऽन्यत्रैकपदाभ्यः ।**

विहृतान्तर्वर्तिनामेकपदानां विहृतप्रतिगरप्रतिषेधार्थमिदं सूत्रम् ।

**अवकृष्यैकपदा अविहरंश्चतुर्थं शंसेत्[4] ।**

एकपदाश्च वर्जयित्वा चतुर्थं शंसेत् । अविहरन्निति विस्पष्टार्थम् ।

**समानमन्यत् ॥ २ ॥**

स्तोत्रियानुरूपाविमानि वामित्येतत्समानं, पूर्वाभ्यां विहाराभ्यामित्यर्थः ॥ २ ॥

**ब्राह्मणाच्छंसिन इमानुकं भुवनासीषधामेति पञ्चायावाजं देवहितं सनेमेति स्तोत्रियानुरूपौ ।**

इमानुकमिति पञ्च द्विपदाः । अयावाजमित्येका द्विपदा । एतौ ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ ।

**अपश्चाच इन्द्रेति सुकीर्तिः ।**

इदं सूक्तं सुकीर्तिर्नाम वेदितव्यम् । अस्याः संज्ञायाः प्रवृत्तिनिमित्तं तदार्षत्वं न तच्छन्दवत्त्वमित्येतत्प्रतिपादनार्थं सूक्तादिग्रहणम् ।

**तस्यार्धर्चशश्चतुर्थीम् ।**

' युवं सुरामम् ' इत्यस्यानुष्टुप्त्वादेवार्धर्चशंसने प्राप्ते पुनरर्धर्चशंसनवचनं प्राप्तानुवादः स पुनः प्रदर्शनार्थः । एवंप्रकाराया अन्यशस्यमध्यगतायां अर्धर्चशः शंसनं स्वच्छन्दो-[5]न्यायेन शंसनं भवतीति ।

**अथ वृषाकपिं शंसेद्यथा होताऽऽज्याद्यां चतुर्थे ।**

' विहि सोतोः ' इत्येतत्सूक्तं वृषाकप्यार्षत्वाद्वृषाकपिरित्युच्यते । अस्य शंसनोपायः पार्ष्ठिके चतुर्थेऽहन्याज्याद्यां यथा होता शंसेत्तथा वृषाकपिं ब्राह्मणाच्छंसी शंसेत् । तस्यां[6] ये धर्मास्त इह कर्तव्या इत्यर्थः । अर्धर्चशंसनं विग्राहस्त्रिरभ्यासो न्यूङ्खो निनर्दः प्रतिगरश्चेति तस्यां धर्माः[7] । तत्र विग्रहः सर्वाज्याद्यायाः सामान्यधर्मः । अर्धर्चशंसनं च

---

* घ.—सपुरीषाभ्य इतिवचनसार्थक्याय पुनरुक्तपदानां त्याग इति देवत्रातः ।

---

१ च. झ. °षु सपु°° । २ क. ग. घ. ङ. च. °स्वपि क° । ३ घ. ङ. ज. तैः षष्ठ° । ४ च. °त् । एतानि षट्सूक्तान्यविहरंश्चतुर्थरूपकं शंसेत् । ए° । ५ झ. °याः स्व° । ६ च. तस्या । ७ च. °र्माः । विग्राहः । ८ क. च न तत° । ङ. च त° । च. चास्या ।

न तस्या एव धर्मः । त्रिरभ्यासश्च तादृश एव । न्यूङ्खनिनर्दावपि न केवलं तस्या एव, उत्तरासामपि साधारणत्वात् । तयोरतिदेशे तु येन यत्रातिदेशः कृतस्तस्य वैशेषिकधर्मास्त एवातिदिश्येरन्न तत्र प्रयुज्यमानाः सामान्यधर्मा अपि । एवं सिद्धे यद्धोतृग्रहणं करोति तस्येदं प्रयोजनं चतुर्थेऽहन्याज्याद्यायां ये धर्माः प्रयुज्यन्ते साधारणा वैशेषिकाश्च ते सर्वत्रातिदिश्येरान्निति । एतच्च होतृशब्दस्य कर्तृविशेषवाचित्वात्कर्तुश्च प्रयोगानुबन्धभूतत्वाल्लभ्यते । एवं च त्रिरभ्यासोऽपि प्राप्नोति[3] तत्कुत उक्तं होतृग्रहणं प्रयोगप्रत्यभिज्ञानार्थमिति । तेनाऽऽज्याद्याया आद्यो यः प्रयोगस्तावन्मात्रादेवातिदेशे सिद्धे पुनरभ्यासस्य प्रापकं नास्तीति सिद्धम् ।

## पङ्क्तिशंसं त्विह ।

पङ्क्तित्वादेव पङ्क्तिशंसने प्राप्ते पुनर्वचनमाज्याद्यायां प्रयुज्यमानत्वादर्धर्चशंसनमपि प्राप्नोतीति तन्निवृत्त्यर्थम् । तुशब्दो विशेषद्योतकः । अयमत्र विशेषः पङ्क्तिशंसनमिति । इहेति प्रसिद्धोऽयमर्थ इति दर्शयति[4] । तस्मादयं वृषाकपिः पङ्क्तिश्छन्दास्तस्मादिह पङ्क्तिशंसनमेवेति । अनेनैतत्साधितं भवति अतिदेशेनान्यच्छन्दःशंसनमन्यच्छन्दसो न प्राप्यत इति ।

## अप्रणवान्तश्च प्रतिगरो द्वितीये पाङ्क्तावसाने ।

आज्याद्याया अतिदेशे सति न्यूङ्खनिनर्दविकृतः प्रतिगरोऽपि प्राप्त एव । तत्रार्धर्चशःशस्यत्वात्प्रतिगरस्य च प्रणवान्तत्वेन पठितत्वात्तत्र प्रणवान्त[5] एवासौ संबध्यते । इह पुनः पङ्क्तिशंसनत्वान्न्यूङ्खादिविकृतः प्रतिगरोऽवसाने संपद्यत इत्यप्रणवान्त इत्युच्यते । अप्रणवान्तश्च प्रतिगर इत्येतावतैव सिद्धे द्वितीये पाङ्क्तावसान इति वचनं प्राप्तोऽयमर्थ[6] इति दर्शयति । यस्मादस्मिन्नवसाने प्रणवो नास्ति तस्मादत्रास्मिन्नवसाने[7] प्रणवान्त एव प्रतिगर इति प्राप्तिविवेकस्येदं प्रयोजनं योऽयं न्यूङ्खादिविकृतः प्रतिगरः स प्राकृत एवेति प्रतिपत्तव्यमिति । तेनैतत्साधितं भवति—प्राकृतकार्यकरत्वात्प्राकृतस्य पुनः प्रयोगो न कर्तव्य इति ।

## तस्मादूर्ध्वं कुन्तापम् ।

तस्माद्वृषाकपेरूर्ध्वं कुन्तापं शंसेत् । तस्मादूर्ध्वमितिवचनान्माध्यंदिने[8] वृषाकपौ प्रविष्टे तदनन्तरं कुन्तापस्यासति[10] प्रवेशे तृतीयसवनेऽपि तस्य प्रयोगो[11] नास्तीति गम्यते ।

---

१ क. ग. घ. ङ. झ. कृत्स्नस्य । २ घ. च सर्वेऽत्रा° । ३ झ. °ति न तं° । ४ ग. घ. ङ. च. झ. °ति । यस्मा° । ५ ङ. झ. °न पाठि° । ६ घ. ङ. च. झ. °णव ए° । ७ ङ. °दन्यस्मि° । ८ ग. झ. °नेऽप्र° । ९ च. प्राप्ते वि° । १० च. °न्तापः स्यादस° । ११ च. प्रवेशो ।

**तस्याऽऽदितश्चतुर्दश विग्राहं निनर्दं शंसेत् ।**

तस्य कुन्तापस्याऽऽदितश्चतुर्दश ऋचो विगृह्य विगृह्य निनर्द्य निनर्द्य शंसेत् ।

विग्राहाः प्रागुक्ताः । निनर्दो यस्मादपूर्व इति तस्य स्वरूपनिदर्शनायाऽऽह—

**तृतीयेषु पादेषूदात्तमनुदात्तपरं यत्प्रथमं तं निनर्देत् ।**

तृतीयेषु पादेष्वादितो यदक्षरं तदनुदात्तीकृत्य ब्रूयात् । तस्मात्परं यत्तद्द्वितीयं तदुदात्तं कुर्यात् । एतदुक्तं भवति—तृतीयेषु पादेषु प्रथममादित इत्यर्थः । आदितो ये द्वे अक्षरे तयोः पूर्वमनुदात्तं यथा भवेत्तस्मात्परं द्वितीयमुदात्तं यथा भवेत्तथा निनर्देन्नितरां ब्रूयादित्यर्थः । तदेवमुच्चारणं निनर्दशब्देनोच्यत इत्यर्थः ।

**तदपि निदर्शनायोदाहरिष्यामः । इदं जना उपश्रुत । नराशंस स्तविष्यते । षष्टिं सहस्रा नवतिं च कौरम आरुशमेषु दद्महोम् ३ ।**

षकारोऽनुदात्तष्टिकार उदात्तः, अन्यदेकश्रुतिः ।

**ओथामो दैवोमित्यस्य प्रतिगरः ।**

प्रतिगरेऽप्यादितो यदक्षरद्वयं तयोः पूर्वमनुदात्तमुत्तरमुदात्तं कृत्वा ब्रूयात् । एतत्पाठादेव लभ्यते । अयं प्रतिगरः प्रणवेऽवसाने प्राकृत एवास्य प्रतिगर इति । निनर्दसहितस्यार्धर्चस्येत्यर्थः ।

**चतुर्दश्यामेकेन द्वाभ्यां च विग्रहः ।**

' उप वो नर एमसि ' इत्येषा चतुर्दशी सेयं पङ्क्तिस्तस्याः प्रथमोऽर्धर्चस्त्रिपात्तत्र विग्राहे क्रियमाण एवं भवति पूर्वमेकेन विगृह्य ततो द्वाभ्यामवस्येदित्यर्थः ।

**शेषोऽर्धर्चशः ।**

चतुर्दश्या ऋचो यः शेषः सोऽर्धर्चशः शंस्तव्यः । पङ्क्तिशंसने प्राप्त इदमुच्यते ।

**एता अश्वा आप्लवन्त इति सप्ततिं पदानि ।**

सप्ततिवचनं शाखान्तरे क्वचित्षट्सप्ततिपदानि सन्तीति प्रदर्शनार्थम् ।

**अष्टादश वा ।**

एतावन्ति वा पदानि शंसेत् ।

तान्येतानीत्याह—

**नवाऽऽद्यानि ।**

आदितो नव पदानि ।

---

१ च. °र्दोऽयमपू° । २ घ. यद्वा । ३ क. °वे तस्मा° । ४ च. °रेष्वादि° । ५ क. लक्ष्यते ।

**अलाबुकं निखातकमिति सप्त यर्दी हनत्कथं हनत्पर्याकारं पुनः पुनरिति चैते ।**

एते च द्वे । एतान्यष्टादश पदानि संपाद्य शंसेत्सप्तर्तिं वेति विकल्पः ।

**विततौ किरणौ द्वाविति षळनुष्टुभः ।**

षड्ग्रहणं शाखान्तरे भूयस्यः[1] सन्तीति ज्ञापनार्थम् । अनुष्टुब्ग्रहणं विस्पष्टार्थम् ।

**दुंदुभिमाहननाभ्यां जरितरोथामो दैव कोशबिले जरितरोथामो दैव रजनिग्रन्थेर्धानीं जरितरोथामो दैवोपानहि पादं जरितरोथामो दैवोत्तरां जनीमां जन्यां जरितरोथामो दैवोत्तरां जनीं वर्त्मन्यां जरितरोथामो दैवेति प्रतिगरा अवसानेषु ।**

प्रणवेषु प्राकृता एव ।

**इहेत्थ प्रागपागुदगिति चतस्रो द्वेधाकारं प्रणवेनासंतन्वन् ।**

चतस्र इतिवचनं पादशः पठिता अपि नाष्टावेकपदाश्चतस्र एवैता द्विपदा द्वेधाकारं पठिता अपीति प्रदर्शनार्थम् । ताः पच्छः शंस्तव्याः प्रणवेनासंतन्वन् । अत्राऽऽर्थिकत्वादवसानस्य त्रिमात्रा एव प्रणवा भवेयुः । असंतन्वन्निति संतानप्रतिषेधादत्र प्रणवसद्भावे सिद्धे प्रणवेनेतिवचनमासां ये चत्वारः प्रणवास्तैः सर्वैः संतानो न कर्तव्य इत्येवमर्थम् । तेनैतत्साधितं भवति—प्रवह्लिकानामन्त्यायाः[2] यः प्रणवस्तेनाजिज्ञासेनीनां[3]माद्यायाः[4] संतानो भवतीति ।

**अलाबूनि जरितरोथामो दैवो३म् । पृषातकानि जरितरोथामो दैवो३म् । अश्वत्थपलाशं जरितरोथामो दैवो३म् । पिपीलिकावटो जरितरोथामो दैवो३मिति प्रतिगराः प्रणवेषु ।**

अवसानेषु प्राकृता एव ।

**भुगित्यभिगत इति त्रीणि पदानि सर्वाणि यथानिशान्तम् ।**

सर्वाणि यथानिशान्तमिति वचनादत्रोत्तमेऽपि पदे प्रणवो न कर्तव्य इति गम्यते । तेनात्र त्रीणि पदानि यथानिशान्तं शंस्तव्यानि ।

---

१ च. भूयांसि । २ च. °नाभिज्ञातेऽन्त्याना° । ३ ग. घ. ङ. झ. °सेन्याना° । ४ ग. घ. ङ. च. झ. °माद्यया सं° ।

श्वा जरितरोथामो दैव पर्णशदो जरितरोथामो दैव गोशफो जरितरोथामो दैवेति प्रतिगरा वीमे देवा अक्रंसतेत्यनुष्टुप् ।

अनुष्टुब्ग्रहणं विस्पष्टार्थम् ।

पत्नी यीयप्स्यते जरितरोथामो देव होता विष्टीमेन जरितरोथामो दैवेति प्रतिगरौ ।

द्वितीयप्रतिगरः प्रणवेऽप्यप्रणवान्त एव पाठसामर्थ्यात् ।

आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयान्निति सप्तदश पदानि ओं ह जरितरोथामो दैव तथा ह जरितरोथामो दैवेतिप्रतिगरौ व्यत्यासं मध्ये ।

मध्यशब्देन मध्यवर्तीनि पदान्यभिधीयन्ते । व्यत्यासमिति तेषु पञ्चदशसु पदेष्वेतौ प्रतिगरौ क्रमेण व्यत्यस्य प्रयोक्तव्यावित्यर्थः । एतौ मध्य इतिवचनादाद्ये पदे प्राकृत एव प्रतिगरो भवेत् । उत्तमे तु प्रणवो विहित एव प्रतिगरत्वेन ।

प्रणव उत्तमः ।

उत्तमे पदे प्रणव एवात्र प्रतिगरो भवेदित्यर्थः ।

त्वमिन्द्र शर्मारिणेति भूतेच्छदः ।

भूतेच्छद इत्यासामृचां नामधेयम् ।

तिस्र एता अनुष्टुभो यदस्या अंहुभेद्या इत्याहनस्याः ।

आहनस्या इति नामधेयम् ।

आज्याद्ययोक्ताश्चतुर्थे ।

ता आहनस्याः ' आग्निं न स्ववृक्तिभिः ' इत्यनयर्चा व्याख्याताः[1] । सा यथा शंस्तव्या, एवमेता अपीत्यर्थः ।

कर्पृनरो यद्ध प्राचीरजगन्तेति चैते ।

एते अप्यृचावेतयैव व्याख्याते इत्यर्थः ।

ई ३ इ इ इ इ ई[2] ई ३ इ इ इ इ इ ई ३ इ इ इ किमयामिदमाहो ३ ३० ३ ३० ३ ३० ३ मोथामो दैवोमित्यासां प्रतिगरः ।

आसां दशानामृचामयं प्रणवेषु[3] प्रतिगरो भवति । अवसाने प्राकृत एव ।

---

१ च. °ताः य° । २ क. ङ. इ इ ३ । ३ च. °नेषु प्राकृता ए° ।

दधिक्राव्णो अकारिषमित्यनुष्टुप्सुतासो मधुमत्तमा इति च तिस्रः ।

चशब्दादिमा अप्यनुष्टुभ एव ।

अवद्रप्सो अंशुमतीमतिष्ठदिति तिस्रः ।

एतास्त्रिष्टुभः पच्छः शंस्तव्याः ।

अच्छाम इन्द्रमिति नित्यमैकाहिकम् ॥ ३ ॥

उक्तार्थमेतत् ॥ ३ ॥

अथाच्छावाकस्य प्रव इन्द्राय वृत्रहन्तमायेति स्तोत्रियानुरूपौ ।

एताः षड्द्विपदा अच्छावाकस्य स्तोत्रियानुरूपौ ।

अथैवयामरुदुक्तो वृषाकपिना ।

'प्र वो महे मतयो यन्तु विष्णवे' इत्येतत्सूक्तमेवयामरुन्नामकं तद्वृषाकपिना व्याख्यातम् । यथा वृषाकपिः शंस्तव्यस्तथैवयामरुन्नामकमपीति । नात्र पङ्क्तिशंसनम् । अतिजागतोऽयमेवयामरुत्, पङ्क्तिशंसनं पुनः पञ्चपदास्वेव पङ्क्तिष्वित्युक्तम् । वृषाकप्यतिदेशः स्त्वक्षरलाघवादिदमप्युक्तमतिदेशेनान्यच्छन्दसः शंसनमन्यच्छन्दसो न प्राप्नोतीति । इममेवाभिप्रायं भगवान्सूत्रकारः स्वयमेव प्रकटयन्प्रणवान्तमेव प्रतिगरं पठितवानाचार्यः । तस्य पाठस्य भ्रान्तिमूलता कल्पयितुमयोग्या, अविगानात् ।

ओ ३ उ॰ उ॰ उ॰ उ॰ उ॰ ओ ३ उ॰ उ॰ उ॰ उ॰ उ॰ ओ ३ उ॰ उ॰ उ॰ मदे मधोर्मदस्य मदिरस्य मदैवो ३ उ॰ ३ उ॰ ३ उ॰ ३ मोथामो दैवोमित्यस्य प्रतिगर ऋतुर्जनित्रीति नित्यान्यैकाहिकानि ।

नित्यैकाहिकशब्दयोः प्रयोजनमुक्तम् ।

एवमुक्थानि यत्र यत्र द्विपदासु स्तुवीरन् ।

अत्रोक्थशब्दः शिल्पविषयः श्रुतौ तथा प्रयोगदर्शनात् 'एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्याः' इत्यादौ । एवं शिल्पानि भवन्ति । षाष्ठिकात्षष्ठादह्नोऽन्यत्रापि यत्र यत्र होत्रकाणां सर्वेषां तृतीयसवने द्विपदासु यदि च्छन्दोगाः स्तुवीरन् । एतदुक्तं भवति—एकाहाहीनसत्रेषु यस्मिन्कस्मिंश्चिदहनि तृतीयसवने होत्रकाणां सर्वेषां यदि द्विपदासु स्तुवीरंश्छन्दोगास्तत्र सर्वत्राहन्येवं शिल्पानि कर्तव्यानीति । एकस्य होत्र-

१ च. अप्यानु° । २ क. ग. घ. ङ. च. °व्य एव° ।

कस्य द्वयोर्वा होत्रकयोर्यदा द्विपदासु च्छन्दोगाः स्तुवीरंस्तदैकस्य द्वयोर्वा शिल्पानि कर्तव्यानि भवन्ति नैवं सर्वेषामपीति । कुत एतल्लभ्यत एकस्य द्वयोर्वा द्विपदास्तवने शिल्पान्येवं न भवन्तीति । एतदतो लभ्यते—होत्रकाणां द्विपदास्वित्यतो होत्रकाणामितीदं बहुवचनमुक्तमिहानुवर्तते । तस्यैतत्प्रयोजनं यदा सर्वेषां द्विपदास्तवनं तदैव शिल्पान्येवं कर्तव्यानि भवन्ति ।

**नित्यशिल्पं त्विदमहः ।**

इदं षष्ठमहर्नित्यशिल्पं भवति । शिल्पैरविनाभूतमित्यर्थः । नित्यवचनात्तदतिदिष्टानामप्ययं धर्मो भवतीति गम्यते ।

**विश्वजिच्च ।**

एतदपि नित्यशिल्पं भवति ।

शिल्पानां प्रवृत्तौ होत्रकाणां सर्वेषां तृतीयसवने द्विपदास्तवनं निमित्तमित्युक्तम् । षष्ठविश्वजितौ नित्यशिल्पावित्येतदप्युक्तम् । एवं स्थिते षष्ठविश्वजितौ यद्यग्निष्टोमसंस्थौ स्यातां यदि वा तृतीयसवने होत्रकाणां सर्वेषां द्विपदास्तवनं न स्यात्तदा कथं तयोर्नित्यशिल्पत्वमापादनीयमिति तत्र निर्वाहमाह—

**तौ चेदग्निष्टोमौ यदि वोक्थ्येष्वद्विपदासु स्तुवीरन्माध्यंदिन एवोर्ध्वमारम्भणीयाभ्यः प्रकृत्या शिल्पानि शंसेयुः ।**

यद्येवं तदा माध्यंदिन एव सवन आरम्भणीयाभ्य ऊर्ध्वं प्रकृत्या विहारन्यूङ्खादिवर्जितानि शिल्पानि शंसेयुः । माध्यंदिन एवेत्यवधारणं यद्येकस्य द्वयोर्वा तृतीयसवने द्विपदासु स्तुवीरन्न सर्वेषां तथाऽपि माध्यंदिन एव सवने सर्वे शंसेयुरित्येवमर्थम् ।

**बार्हतान्येव सूक्तानि वालखिल्यानां मैत्रावरुणः ।**

यदा माध्यंदिने शिल्पानि शस्यन्ते तदैतावदनेनेति त्रयाणां नियमः क्रियते । वालखिल्यानां यानि बार्हतानि षट् सूक्तानि तान्येव मैत्रावरुणः शंसेत्, नान्यथैव किंचिच्छिल्पमित्यर्थः ।

**सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम् ।**

'तस्मादूर्ध्वं कुन्तापम्' इत्यनेन कुन्तापस्य वृषाकप्यनन्तरवर्तितायां प्राप्तायां तन्निवृत्त्यर्थं पङ्क्तिशंसनवचनम् । यावान्वृषाकपिः पङ्क्तिशंसनार्हस्तावदेव शंसेत्, न तत्संबन्धिकुन्तापमपीत्यर्थः ।

---

१ क. °न्दोगादिस्तु° । २ क. नैव । ३ क. ग. °न्येव न । ४ घ. च. °वत्येवेति । ५ घ. च. °त्या न्यू° । ६ घ. °दिविहार° । च. दिविकार । ७ ग. नान्यत्किंचि° । घ. ङ. झ. नान्यं कं चि° । च. नान्यन्न किंचि° । ८ क. ग. °नन्यं कु° ।

**द्यौर्न य इन्द्रेत्यच्छावाकः ।**

इदं सूक्तमच्छावाक आरम्भणीयाया ऊर्ध्वं शंसेत् । अस्मिन्पक्ष इदमप्यस्य शिल्पं भवतीति ।

**प्रत्येवयामरुदित्येतदाचक्षते ।**

एतत्सूक्तं प्रत्येवयामरुदिति श्रुतौ प्रसिद्धमित्यर्थः ।

**होतैवयामरुतमाग्निमारुते पुरस्तान्मारुतस्य पच्छः समासमुत्तमे पदे ।**

अस्मिन्पक्ष आग्निमारुते शस्त्रे मारुतस्य सूक्तस्य पुरस्तादेवयामरुतं होता शंसेत् । पच्छः । पच्छःशंसनविधानं सर्वाश्चैवाऽऽचतुष्पादा[1] इत्यर्धर्चशंसने प्राप्ते पच्छः शंसने पञ्चपदत्वाद्द्वे द्वे पदे अतिरिच्येते इति तदर्थमिदमुच्यते समासमुत्तमे पदे, इति । उत्तमे पदे समस्य प्रणुयादित्यर्थः । होतृग्रहणमच्छावाकनिवृत्त्यर्थम् । अत इदमवगम्यते—अच्छावाकसंबन्धमप्येतत्सूक्तमागन्तुकत्वेनास्मिञ्शस्त्रे विधीयते न मारुतनिविद्धानीयत्वादिति । तेनैतत्साधितं भवति—धाय्यानन्तरं प्रवेशादस्याऽऽहावो[2] मारुतस्य च निविद्धानीयत्वादिति ।

**षष्ठे त्वेव पृष्ठ्याहन्यहरहः शस्यस्यैकभूयसीः शस्त्वा मैत्रावरुणो दूरोहणं रोहेत् ।**

एवं माध्यंदिने सवने शिल्पेषु नीयमानेषु पार्ष्ठिके षष्ठेऽहन्ययं विशेषः, दूरोहणमपि रोहेदिति । एवकारोऽवधारणार्थः । अस्मिन्पक्षे षष्ठ एवाहनि दूरोहणं रोहेन्न विश्वजितीत्यवधारणार्थः । पृष्ठ्याधिकारे पुनः पृष्ठ्यग्रहणादिदं दूरोहणं पूर्वस्माद्दूरोहणादन्यद्दूरोहणमिति ज्ञायते । यदि पूर्वविहितस्यैवावधारणं ततो विश्वजिति व्यावृत्तिर्विधित्सिता स्यात्, तदा तस्य पार्ष्ठिक एव संभवात्पुनः पृष्ठ्यग्रहणं न कुर्यात् । करोति च । अतो ज्ञायते दूरोहणान्तरमेतदिति । अनेनैतत्साधितं भवति—अस्य दूरोहणस्याऽऽहावविध्यभावादाहावो न कर्तव्य इति । अहरहःशस्यस्य पञ्चर्चत्वात्तिस्रः शस्त्वेत्येतावतैव सिद्ध एकभूयसीरितिवचनं संपातसूक्तेऽप्येतस्य न्यायस्य प्रापणार्थम् ।

**संपातसूक्त एकाहीभवत्सु ।**

अस्मिन्षष्ठेऽहन्येकाही भवति सति संपातसूक्ते ‘ कथामहामवृधत् ’ इत्यस्मिन्दूरोहणं रोहेत्तस्याद्या ऋच एकभूयसीः शस्त्वा । एकाहीभवत्स्वितिबहुवचनं यदा पुनरिदमहरहीनेषु चाऽऽद्यं भवति तदा तत्र तायमानरूपाणामभावादनेकाहे[3]ऽप्येकाहवद्भवन्ति[4] । तत्र यदि माध्यंदिने शिल्पानि तदाऽहरहःशस्यस्याभावात्संपातसूक्त एव दूरोहणं कर्तव्यमित्येव-

---

१ च. °तुष्पदा । २ च. °शादाहावस्याभावो । ३ घ. च. °काहा अप्ये ४ घ. च. °वन्ति । त° ।

मर्थम् । सत्रेषु माध्यंदिने होत्रकाणां शस्त्राण्येवं भवन्ति—स्तोत्रियानुरूपौ कस्तमिन्द्रेति । कद्वानप प्राच इन्द्रेत्यारम्भणीया । सद्योह जात इत्यहरहःशस्यम् । आ सत्यो यात्विन्द्र इत्यहीनसूक्तम् । एवं मैत्रावरुणस्य ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ कन्नव्यो अतसीनामिति । कद्वान्ब्रह्मणा ते ब्रह्मयुजेत्यारम्भणीया । अस्मा इदु प्र तवस इत्यहीनसूक्तम् । उदु ब्रह्माणीत्यहरहःशस्यम् । एवं ब्राह्मणाच्छंसिनः । अथाच्छावाकस्य स्तोत्रियानुरूपौ कदून्वस्याकृतमिति । कद्वानुरुं नो लोकमनुनेषि विद्वानित्यारम्भणीया । शासद्वह्निरित्यहीनसूक्तम् । अभितष्टे वेत्यहरहःशस्यम् । एवमेतानि षट् प्रतीकानि चतुर्विंशादिष्वहःसु भवन्ति । षळहेषु षळहप्रकृतिषु चायं विशेषो भवति—अहीनसूक्तस्थाने संपातसूक्तानि भवन्ति । मैत्रावरुणस्यैवाऽऽत्वामिन्द्रेति प्रथमचतुर्थयोरह्नोः । यं न इन्द्रेति द्वितीयपञ्चमयोः । कथामहामवृधदिति तृतीयषष्ठयोः । एवं ब्राह्मणाच्छंसिनः । इन्द्रः पूर्भिद एक इद्यस्तिग्मशृङ्ग इत्येकैकं पूर्ववत् । एवमच्छावाकस्याप्येतानि सूक्तानि भवन्ति । इमामृणिच्छन्ति त्वा शासद्वह्निरित्येवमेतान्येतेष्वहःसु सत्रविषये शस्त्राणि भवन्ति । एकाहीभावे कद्वतामारम्भणीयानामहरहःशस्यानामभावः । अतः संपातसूक्ते दूरोहणमित्युक्तं भवति ।

**न ह्येकाहीभवत्स्वहरहःशस्यानि नाऽऽरम्भणीया न कद्वन्तः ।**

एकाहीभवत्स्विति प्रकृते पुनर्वचनमधिकारार्थम् । वक्ष्यमाणो विधिः सात्रिकेष्वहःस्वेकाहीभवत्स्विति वेदितव्यम् । एतेष्वहःस्वेकाहीभवत्स्वहरहःशस्यान्यारम्भणीयाः कद्वन्तश्च न सन्ति । हिशब्दः प्रसिद्धौ । प्रसिद्धश्चायमर्थो यद्गणधर्म[2] एकाहेषु न प्रवर्तन्त[3] इति । अतस्तुल्यन्यायानां तार्क्ष्यजातवेदस्यादीनामेकाहीभवत्सु प्रवृत्तिप्रतिषेधः सिद्धो भवति ।

**कद्वतां स्थाने नित्यान्प्रगाथाञ्शस्त्वा संपातानेव संपातवत्स्वहीनसूक्तानीतरेषु ततोऽन्त्यान्यैकाहिकानि ।**

सात्रिकेष्वहःस्वेकाहीभवत्स्वेवं शस्यं भवति । कद्वतां स्थाने नित्यानैकाहिकान्प्रगाथाञ्शस्त्वा पृष्ठ्याभिप्लवप्रकृतिषु संपाताञ्शंसेयुः । इतरेषु चतुर्विंशादिप्रकृतिषु प्रगाथानन्तरमहीनसूक्तानि शंसेयुः । तत उभयेष्वहःस्वन्त्यान्यैकाहिकानि सूक्तानि शंसेयुः । माध्यंदिने सवने होत्रका इति नित्यानां निवर्तकेषु कद्वत्सु प्रतिषिद्धेषु प्राप्ता एव नित्याः प्रगाथाः किमिति ते पुनर्विधीयन्ते । यत्पुनर्विधानं यदा पुनरेतेषु सामप्रगाथा एकाहेषु प्राप्नुवन्ति तदा तैर्नित्यानां बाधो न स्यादित्येवमर्थम् । किंचान्यत्प्रगाथानन्तरं मैत्रावरुणस्यापि संपातोऽहीनसूक्तं वा भवेन्नैकाहिकमित्ययमेव च क्रमः सिध्येदित्येवमर्थं च । एवं हि सत्रेषु मैत्रावरुणस्य क्रमः प्रगाथानन्तरमहरहः शस्यं ततः संपातोऽहीनसूक्तं चेति ।

---

१ क. °सूक्ते स्था° । २ घ. च. °धर्मा ए° । ३ घ. च. °र्तन्त इ° । ४ च. °पूर्वं प्र° ।

तत्राहरहःशस्यं पूर्वस्यैकाहिकस्य स्थाने विहितं तत्प्रतिषिध्यत इति पूर्वमेवैकाहिकं प्रतिप्रसूतं स्यात् । अतस्तदपनीय तत्स्थाने संपातोऽहीनसूक्तं वा भवेत् । अन्त्यमेवैकाहिकं प्रतिप्रसूतमस्त्वित्ययं यत्नः क्रियते । एवं चेदन्त्यानां विधानं मन्दफलं भवेत् । अस्तु, तथाऽप्युत्तरार्थं कर्तव्यमेव ।

**संपातवत्सु तु सर्वस्तोमेषु प्राकृते वैकाहेऽहीनसूक्तान्यादितस्तृतीयानि ।**

तुशब्दो विशेषविध्यर्थः । अयमस्मिन्सूत्र उपरितने च सूत्रे विशेषः सर्वार्थोऽयं सूत्रद्वयोक्तो विधिरित्येकाहीभवतामन्येषां च साधारण इत्यर्थः । यदा पुनः संपातवन्त्यहानि सर्वैस्त्रिवृदादिभिस्त्रयस्त्रिंशान्तैः षड्भिः स्तोमैर्युक्तानि भवन्ति, प्राकृतो वैकाह एभिः स्तोमैर्युक्तो भवति तदाऽहीनसूक्तान्यादित इतरेषां सूक्तानां भवन्ति । आदित इति, पुरस्तादित्यर्थः । तृतीयानि च भवन्ति । तृतीयवचनं प्रकृते[1]र्द्विसूक्तत्वान्निमित्तवशेन प्राप्तस्यापि संपातस्याहीनसूक्तस्य वा लोपः स्यादिति समुच्चयसिद्ध्यर्थम् । अत्र क्रमः—अहीनसूक्तमहरहः शस्यं संपात इति सत्रेषु मैत्रावरुणस्य । इतरयोरहीनसूक्तं संपातोऽहरहः शस्यमिति विशेषः । एकाहीभवत्सु मैत्रावरुणस्येतरयोश्च न विशेषः, अहीनसूक्तं संपातोऽन्त्यमैकाहिकमिति । यदा पुनः प्रकृतिभूतो ज्योतिष्टोमः सत्रमहीनमेकाहं वा प्राप्त[2]ः, यदा प्रथमस्य तूर्ध्वं चतुर्थात्सर्वस्तोमोऽतिरात्र इति सर्वस्तोमश्च भवति तत्रायं क्रमः—सर्वेषां च स्वं स्वमहीनसूक्तं तत ऐकाहिके च द्वे द्वे सूक्ते इति पूर्वयोरच्छावाकस्याहीनसूक्तं भूय इ[3]दभितष्टीयम् । एवमहर्गणप्राप्तावैकाहिकत्वेऽहीनसूक्तानि द्वे द्वे चैकाहिके सर्वेषामिति ।

**सामसूक्तानि सप्रगाथानि सर्वपृष्ठेषु पृष्ठानि ।**

आदितस्तृतीया[4]नि चोभयं निवृत्तम् । सामसूक्तानि पुरस्तात्सूक्तानाम[5]तिदेशविधानादादित इतिनिवृत्तम् । एकयोगनिवर्तनादन्यदपि निवृत्तम् । यदा पुनः संपाताहीनसूक्तै[6]काहिकानि त्रिप्रकाराण्यहानि सर्वपृष्ठानि भवन्ति तदा सामसूक्तानि भवन्ति । तेषां स्थानं स्वरूपं चोत्तरत्र वक्ष्यते । तेष्वेव शस्त्रेषु शाक्वरवैरूपरैवतानि सामानि च पृष्ठकार्ये भवन्ति तेषां सामप्रगाथाश्च भवन्ति । तदेतत्सामसूक्तानि पृष्ठानि च तानि सप्रगाथानीत्येतत्त्रयं सर्वपृष्ठनिमित्तं विधीयते । अस्मिन्नेव सूत्रेऽयं च विधिरेकाहीभवतामन्येषां च साधार[7]णः । एवमत्र क्रमः—संपाताहःसु शाक्वरादीनां स्तोत्रियानुरूपाः सामप्रगाथाः कद्बन्त आरम्भणीयाः सामसूक्तान्यहीनसूक्तान्येतावत्सर्वेषां समानम् । ततोऽहरहःशस्यसंपातौ मैत्रावरुणस्येतरयोः संपाताहरहःशस्ये इति । अहीनाहःस्वेवं भवति—सामसूक्तेभ्योऽनन्तरमहरहः-

---

१ च. °कृतौ द्विसू° । २ च. °प्तः, त° । ३ च. इत्यभि । ४ घ. ङ. च. °यानीति चो° । ५ घ. च. झ. °नामिति दे° । ६ घ. ङ. च. °कैरैका° । ७ क. रणाः । ए° ।

शस्यमहीनसूक्तं मैत्रावरुणस्येतरयोरहीनसूक्ते अहरहः शस्ये इति । विश्वजिति तु विशेषः— अनुरूपेभ्य ऊर्ध्वं वामदेव्यादीनां योनिशंसनामिति प्रकृतौ ज्योतिष्टोमेऽहर्गणमध्यगते सामसूक्तान्यहीनसूक्तानि सर्वेषाम् । ततोऽहरहःशस्यमन्त्यमैकाहिकं मैत्रावरुणस्य । इतरयोः पूर्वे ऐकाहिके । ततोऽहरहःशस्ये इति । एवं त्रिप्रकारेष्वहःसु सर्वपृष्ठेषु माध्यंदिने सवने होत्रकाणां शस्त्राणि भवन्ति । एषामेवं त्रिप्रकाराणामह्नामेकाहीभावे सर्वपृष्ठत्वे सत्येव शस्यं भवति । कद्वतां स्थाने नित्याः प्रगाथास्ततः सामसूक्तान्यहीनसूक्तानि संपाता अन्त्यान्यैकाहिकानीति संपाताहःसु । अहीनाहःसु तान्येव संपातवर्जितानि त्रीण्येव सूक्तानि । ज्योतिष्टोमिके तु सामसूक्तान्यहीनसूक्तानि द्वे द्वे चैकाहिके इति सर्वेषामविशेषः । ततोऽन्त्यान्यैकाहिकानीत्येतदुत्तरार्थमित्युक्तमस्मिन्सूत्रे पूर्वस्मिंश्च सूत्र उपकरोति । प्रकृतेर्द्विसूक्तत्वात्तदन्त्यैकाहिकैर्विनाऽपि द्विसूक्तत्वासिद्धेरेकाहीभवत्स्वप्यहःस्वन्त्यानामपि लोपे प्राप्ते तेषामलोपार्थं तद्वचनम् ।

**पृष्ठ्ये संस्थाः ।**

वक्ष्यन्त इति शेषः । संस्थाग्रहणं परप्रत्ययत्वात्संस्थानियतेः स्वशास्त्रोक्तैः प्रायिकत्वप्रतिपत्त्यर्थम् ।

**अग्निष्टोमः प्रथमं षोळशी चतुर्थमुक्थ्या इतरे ।**

पृष्ठ्ये एवं संस्था भवन्तीत्यर्थः ।

**इति पृष्ठ्यः । प्रत्यक्षपृष्ठः ।**

इत्येवंगुणविशिष्टः प्राकृतो यः पृष्ठ्यः स अयुजेषु रथंतरपृष्ठः । युक्षु बृहत्पृष्ठः । तृतीयादिषु वैरूपादिभिः समुच्चितपृष्ठो यः स प्रत्यक्षपृष्ठसंज्ञकः पृष्ठ्यो भवतीत्यर्थः ।

**अन्यैः परोक्षपृष्ठः ।**

एतेभ्योऽन्यैः सामभिर्यत्र पृष्ठकार्यं क्रियते पृष्ठ्ये स परोक्षपृष्ठसंज्ञको भवति ।

**एतैर्वोपसृष्टैः ।**

उपसृष्टैरिति । ऋगन्तरसंबन्धैरित्यर्थः । एतैर्बृहद्रथंतरादिभिः स्वयोनिभ्योऽन्ययोनिसंबन्धैः पृष्ठकार्यं यत्र पृष्ठे क्रियते स च परोक्षपृष्ठः ।

---

१ क. ग. घ. ङ. झ. °क्तेह° । २ ग घ. च. °त्येवं श° । ३ क. ङ. °सिद्धेरे° । ४ घ. ङ. झ. °क्ते प्रा° । ५ क. °रे । एवंसंस्था पृष्ठ्यो भ° । घ. ङ. झ. °रे । एवं संस्था भ° । ६ च. °संस्थः पृष्ठ्यो भवति । इ° । ७ घ. ङ. झ. °र्थः । पृष्ठ्यो भवति । इ° । ८ घ. ङ. च. झ. °ष्टः प्रकृ° । ९ ङ. झ. °पृष्ठ्यः । १० ङ. झ. °त्पृष्ठ्यः । तृ° । ११ घ. ङ. च. झ. °पृष्ठ्यो यः । १२ घ. °पृष्ठ्यो स । १३ ग. °बद्धैः पृ° ।

**वैरूपादीनामभावे पृष्ठ्यस्तोमः ।**

यदि बृहद्रथंतरे एव केवले क्रियेते न वैरूपादयस्तदा पृष्ठ्यस्तोमसंज्ञो भवति ।

**पवमानभाव आपक्वर्यपृष्ठ्यः ।**

यदि माध्यंदिने पवमाने रथंतरादीनि क्रियेरन्न पृष्ठस्थाने तदाऽऽपक्वर्यपृष्ठसंज्ञो भवति ।

**तनूपृष्ठ्यो होतुश्चेच्छ्यैतनौधसे ॥ ४ ॥**

यदि होतुः पृष्ठे निष्केवल्यस्य स्थाने श्यैतं वा नौधसं वा कृत्वाऽन्यत्र बृहदादीनि क्रियेरंस्तदा तनूपृष्ठो नाम भवेत् । एवमनेकधा पृष्ठविकल्पा उक्ताः शास्त्रान्तरोक्ताश्च सन्ति, तेषु सर्वेषु बृहदादीनां यथास्थानमक्रियायामस्वयोनिभावं वा दृष्ट्वा यथाविधि योनिशंसनं कर्तव्यम् ॥ ४ ॥

**अभिजिद्बृहत्पृष्ठः ।**

ज्योतिष्टोमेन सह चतुर्दशाहानि व्याख्यातानि । इदानीं पञ्चदशमहरुच्यते । अभिजिन्नाम स बृहत्पृष्ठो भवति । पृष्ठानां रथंतरादीनां परप्रत्ययानां विधानस्य प्रयोजनं[4] छन्दोगप्रत्ययमित्यत्र सूत्रे वक्ष्यते ।

**उभयसामा यद्यपि रथंतरं यज्ञायज्ञीयस्य स्थाने ।**

इह स्थाने त्रिविधं छन्दोगानामुभयसामत्वं भवति । बृहद्रथंतरयोरन्यतरन्माध्यंदिने पवमाने भवति ब्रह्मसाम्नि वाऽग्निष्टोमसाम्नि वा । तत्रास्माकं पवमानभाव एव । सर्वत्रोभयसामत्वं साधयितुमत्रायं यत्नः कृतः । एतदुक्तं भवति सर्वत्र बृहद्रथंतरयोरन्यतरस्य पवमानभाव एवोभयसामत्वं भवतीति । अभिजिति तु यदि पृष्ठस्थाने बृहद्भवति रथंतरं चाग्निष्टोमस्थाने तदाऽप्यत्रोभयसामत्वं भवति । इदमत्र पृष्ठविधानस्य प्रयोजनं यदि पुनर्विपरीतं तदाऽप्यनेनैवोभयसामत्वं भवतीति ।

**पिबवांस्त्विह सामप्रगाथः ।**

इहग्रहणाद्वाचनिकोऽयमर्थ इति दर्शयति ।

**पिबा सोमं तमु ष्टुहीति मध्यंदिनः ।**

तमु ष्टुहीत्यनेन साहचर्यात्पिबा सोममित्यस्य भारद्वाजस्य ग्रहणं नान्यस्य ।

---

१ क. ब. ट. क्रियते । २ क. ख. °रादि क्रि° । ३ च. पृष्ठ्यवि° । ४ च. °नं छान्दोग्यम°। ५ ग. ब. ङ. च. झ. °पृष्ठ्यस्था° ।

**तयोरैकाहिके पुरस्तादन्ये वा शंसेयुः ।**

तयोः सूक्तयोः पुरस्तादैकाहिके ' जनिष्ठा उग्र इन्द्रस्य नु वीर्याणि ' इत्येते, अन्ये वाऽनैकाहिके ये केचन तत्कार्ययोग्ये इत्यर्थः । एवं द्विपू( सू )क्तो मध्यंदिनो विहितो भवति पूर्वस्य च विधेर्निरपेक्षत्वात् । तेनैकसूक्तमेव विहितं भवति । अतः सामर्थ्या-द्वाचनिकोऽयं विकल्प इति निश्चिनुमः ।

**एते एवेति गौतमः सप्तदशत्वात्पृष्ठस्य ।**

एवं स्थित एकसूक्तपक्षे न्यायानुगुण्यमस्तीति गौतम आह । एते एव ' पिबा सोमं तमु ष्टुहि ' इत्येते एव कर्तव्ये नैकाहिके अन्ये वेति ।

अयमत्र न्यायः सप्तदशत्वात्पृष्ठस्येति पृष्ठस्य सप्तदशत्वमेकसूक्तत्वे यथा हेतुस्तथोप-पादयितुमाह—

**यावत्यो यावत्यः कुशानां नवतो दशतो वा निष्के-वल्ये तावतिसूक्ता मध्यंदिनाः स्युरिति महान्यायः ।**

कुशा नाम च्छन्दोगानां स्तुत्याऽऽवृत्तिसंख्यानार्थानि काष्ठानि तासां नवतो वा विभज्य-मानानां यावत्यो निष्केवल्यस्तोमे पूर्णा भवन्ति तावतिसूक्ता माध्यंदिना भवेयुः । तावतिसूक्तास्तावत्सूक्ता इत्यर्थः । तावन्ति सूक्तानि येषु माध्यंदिनेषु ते तावतिसूक्ता माध्यंदिना इत्युच्यन्ते । अयं न्यायः प्राचुर्येण सर्वेष्वहःसु दृष्ट इति महान्याय इत्युक्तम् । अत्र व्यभिचाराशङ्का न कर्तव्या । यत्पुनर्मध्यमे छान्दोमिके चतुश्चत्वारिंशे स्तोमे पञ्च सूक्तानि दृष्टानि, तत्तु वाचनिकमिति परिहर्तुं शक्यत एव । अत्रापि द्विसूक्तत्वं वाचनि-कमेवेत्यस्याव्यभिचारिता युक्ता । न्यायव्युत्पादनस्य प्रयोजनं माध्यंदिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्यमित्यत्र वक्ष्यते ।

**मरुत्वतीयस्योत्तमे विपरीते ।**

' पिबा सोममभि ' इत्यस्योत्तमे ऋचौ व्यत्यस्य शंसेत् । उत्तमां शस्त्वोपोत्तमां शंसेदित्यर्थः ।

**चातुर्विंशिकं तृतीयसवनम् ।**

अन्यद्धोतुरैकाहिकं होत्रकाणां सर्वत्र सात्रिकमेव ।

---

१ च. °र्थाद्वाच° । २ छ. °त्पृष्ठस्य । ३ च. °त्पृष्ठस्ये° । ४ क. ग. घ. °वन्ति सू° । ५ क. ग. घ. ङ. °वन्ति सू° ।

उक्तोऽभिजिदथेदानीं स्वरसामानो वक्ष्यन्ते—

**अभिप्लवत्र्यहः पूर्वः स्वरसामानः ।**

अभिप्लवस्य यः पूर्वस्त्र्यहस्तेनातिदिष्टानि वक्ष्यमाणगुणविशिष्टानि त्रीण्यहानि स्वरसामसंज्ञानि भवन्ति ।

**स्वराणि त्विह पृष्ठानि ।**

स्वरसंज्ञकानि सामान्येतेष्वहःसु पृष्ठानि भवन्ति । एतदेवैषु स्वरसामशब्दस्य प्रवृत्तिनिमित्तम् ।

**तेषां स्तोत्रिया यज्जायथा अपूर्व्यमत्स्यपायि ते मह एमेनं प्रत्येतनेति ।**

यथासंख्येन तेषामेते स्तोत्रिया भवन्ति । अधिकारादेव तेषामित्यस्यार्थस्य सिद्धौ सत्यां तेषामितिवचनमुत्तरार्थम् ।

**आद्यो वा सर्वेषाम् ।**

यज्जायथा अपूर्व्येत्ययमाद्यः स्तोत्रियः स एव वा त्रिषु स्वरसामसु स्तोत्रियो भवति ।

**वयं घत्वा सुतावन्त इति तिस्रो बृहत्यो यस्ते साधिष्ठोऽवस इति षळनुष्टुभ इत्यनुरूपाः ।**

एकां बृहतीं गृहीत्वा द्वे अनुष्टुभौ च गृहीत्वैकोऽनुरूपो भवति । एवमपरौ चानुरूपौ । अत्र तेषामित्यनेन संबन्धः । तेषां स्वराणां यथासंख्येनैतेऽनुरूपा भवन्तीति ।

**स्तोत्रिये यथा युक्ता बृहती तथाऽनुरूपे ।**

स्तोत्रिये[2] यत्स्थाने बृहती यत्स्थाने चानुष्टुभावनुरूपे च तत्स्थान एवैताः कर्तव्या इत्यर्थः ।

**स्थायीन्येतानि यथा बृहद्रथंतरे ॥ ९ ॥**

यथा बृहद्रथंतरे पृष्ठ्याभिप्लवयोस्तदतिदिष्टेषु चाहःसु पृष्ठत्वेन योनिशंसनरूपेण वा स्थायिनी नित्ये एवं स्वरसामसु स्वराणि नित्यानीत्यर्थः ॥ ९ ॥

**विषुवान्दिवाकीर्त्यः ।**

विषुवानित्येकोनविंशमहस्तदिदानीमुच्यते विषुवान्दिवाकीर्त्यो भवति । अयं विधिः कर्मणि निष्प्रयोजनः । उदिते प्रातरनुवाकविधानात्तस्य चाग्निष्टोमसंस्थत्वादग्निष्टोमस्य

---

१ क. ङ. °णि त्र्यह° । २ च. °ये परस्था° । ३ म. घ. ङ. च. झ. पृष्ठ्यत्वे° ।

चाहन्येव समापनीयत्वात्कर्मणश्च कीर्तयतो विषयत्वाच्च । अतस्तद्विधायकब्राह्मणस्य तत्साधनभूतानां शस्त्रादीनां च द्विरेवाध्ययनं कर्तव्यमित्येवमर्थोऽयं यत्नः कृतो भगवताऽऽश्वलायनाचार्येणेति मन्तव्यम् ।

**उदिते प्रातरनुवाकः ।**

अनुवक्तव्य इति शेषः ।

**पृथुपाजा अमर्त्य इति षड् धाय्याः सामिधेनीनाम् ।**

अस्मिन्नहनि सामिधेनीनामुपोत्तमायाः प्रागेताः षडृचो धाय्या भवन्ति । धाय्याग्रहणं स्थानलाभार्थम् । सामिधेनीग्रहणं शस्त्रधाय्यानिवृत्त्यर्थम् ।

**सौर्यः सवनीयस्योपालम्भ्यः ।**

सुत्याधिकारादेव सवनीयत्वे सिद्धे सवनीयग्रहणं सवनीयस्योपालम्भनं कृत्वा पश्चात्सौर्य आलभ्य इत्येवमर्थम् ।

**सोमापौष्णो वा ।**

अयं वा पशुरुपालम्भ्यः पूर्वो वेति विकल्पः ।

**समुद्रादूर्मिरित्याज्यं त्यं सुमेषं कया शुभेति च मरुत्वतीयम् ।**

एकविंशाह्नीनस्तोमेऽपि विषुवत्यनयोः सूक्तयोः समुच्चितयोरेव मरुत्वतीयत्वसिद्ध्यर्थो चशब्दः ।

**महादिवाकीर्त्यं पृष्ठम् ।**

महादिवाकीर्त्यमिति सामनाम ।

**विभ्राड्बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ यदि बृहद्रथंतरे पवमानयोः कुर्युर्योनी एनयोः शंसेत् ।**

उत्तरविवक्षार्थोऽयमनुवादः ।

**रथंतरस्य पूर्वाम् ।**

पूर्वशिष्टत्वात्समासे च पूर्वनिपातत्वाद्बृहतो योनिः पूर्वं शंस्तव्येत्येतदाभासनिवृत्त्यर्थं सूत्रम् । एतत्सार्वत्रिकम् । अनयोर्योनिशंसनप्राप्तावस्मिन्नहनि निमित्तक्रमादेवैषोऽर्थः सिद्ध एवेति ।

---

१ ...ऽऽलम्भं कृ° । २ क. ख. ङ. °याणि° । ३ क. पूर्वं सूत्र° । ख. ङ.

**आद्ये भवतोऽन्याभिरपि संनिपाते ।**

अन्याभिर्वैरूपादीनां योनिभिः सह यदा बृहद्रथंतरयोर्योनी शस्येते तदैतयोर्योनी शस्त्वाऽन्येषां योनीः शंसेत् । अयमपि विधिः सार्वत्रिक एव ।

**उत्तमास्त्विह सामप्रगाथः ।**

इन्द्रमिद्देवतातय इत्येषः ।

**नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तिस्रो यस्तिग्मशृङ्गोऽभि त्यं मेषमिन्द्रस्य नु वीर्याणीति ।**

नृणामु त्वेत्येवमादीनि निष्केवल्यस्य सूक्तानि ।

**एतस्मिन्नैन्द्रीं निविदं शस्त्वा शंसेदेवोत्तराणि षडुदिवश्चिदस्य सुत इत्वमेष प्रपूर्वार्बुषामदः प्र मंहिष्ठाय त्यमूष्विति ।**

एतस्मिन्नित्यनूच्यमाने सूक्तं समाप्य निवित्स्यात्तन्निवर्त्य[1] सूक्तमध्ये निविदः प्रापणार्थमेतस्मिन्नित्युच्यते । ऐन्द्रीमिति विशेषणमत्रानैन्द्र्यपि निविदस्तीति ज्ञापनार्थम् । तेन दूरोहणस्यापि निवित्त्वं साधितं भवति । तथा च श्रुतिरस्ति 'एषा ह वा अत्र निवित्' । निविदिति दूरोहणस्य निवित्वे सति प्रयोजनम् 'एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति तावतीरुत्तराः शंसति' इत्युक्तसंख्याने 'हंसवती न संख्येया' इति । निविदं शस्त्वोत्तराणि षडित्युच्यमाने सूक्तशेषस्याशंसनमाशङ्क्येत[2] तन्निवृत्त्यर्थं शंसे देवेत्युक्तम् । शंसेदेव सूक्तशेषमुत्तराणि च षट्सूक्तानीत्युक्तं[3] भगवता सूत्रकारेण । षड्ग्रहणमेकविंशाद्धीनस्तोमेऽपि विषुवति सूक्तहानिर्मा भूदित्येवमर्थम् । उत्तरग्रहणं प्रदर्शनार्थम् । अतः पूर्वेषामुत्तरेषां[4] च हीनस्तोमेऽपि विषुवति सूक्तहानिर्नास्तीति सिद्धम् ।

**इह तार्क्ष्यमन्ततः ।**

अस्मिन्नहनि[5] निष्केवल्यसूक्तेष्वेवान्ततस्तार्क्ष्यं शंसेत् । अतोऽत्र निविद्धानीयत्वमप्यस्य भवतीति गम्यते । ततोऽत्र तार्क्ष्यस्य पृथगाह्वानं न भवतीति । अन्यत्र तु सूक्तानन्तर्भावात्तेभ्यश्चान्यदनन्तरमित्याहावो[6] भवति । त्यमूष्वित्यत्र हीनपादग्रहणात्सर्वत्र तार्क्ष्यं सूक्तमेव भवति ।

**तस्यैकां शस्त्वाऽऽहूय दूरोहणं रोहेत् ।**

तस्य तार्क्ष्यस्यैकामृचं शस्त्वाऽऽहूय दूरोहणं रोहेच्छंसेत्पूर्ववत् ।

---

१ ग. न्निवर्त्य । २ क. ख. °र्थं दे° । ३ व. छ. झ. सूक्तं शे° । ४ ङ. °षां चाही° । ५ च. °ते । अतोऽ । ६ व. ङ. च. झ. °न्तर्याभावा° ।

**इति निष्केवल्यं विकर्णं चेद्ब्रह्मसामोर्ध्वमनुरू-पात्तं वो दस्ममृतीषहमभि प्र वः सुराधसमिति ब्राह्मणाच्छंसी श्यैतनौधसयोर्योनी शंसेत् ।**

यदि ब्राह्मणाच्छंसिनः स्तोत्रे विकर्ण[1] साम कुर्युस्तदा ब्राह्मणाच्छंस्यनुरूपादूर्ध्वं 'तं वो दस्ममृतीषहम्' इति नौधसयोनिम् । 'अभि प्र वः सुराधसम्' इति श्यैतयोनिं च शंसेत् । श्यैतस्य पूर्वनिपातोऽल्पाच्तरस्वात् ।

**नौधसस्य पूर्वां श्यैतस्योत्तराम् ।**

नौधसस्य पूर्वामित्येतावतैव सिद्धे श्यैतस्योत्तरत्वे पुनस्तस्योत्तरवचनं 'तं वो दस्ममृतीषहम्' इति नौधसयोनिं पूर्वमुक्त्वा 'अभि प्र वः सुराधसम्' इति पश्चादुक्त्वा श्यैतनौधसयोर्योनी इति व्युत्क्रमेण साम्नो निर्देशं[2] कृतवानतस्तद्भ्रान्त्युपनिवृत्त्यर्थं[3] पूर्वामुत्तरामिति चोक्तवान् । या पूर्वोक्ता सा नौधसयोनिः, योत्तरा सा श्यैतस्येत्ययमर्थः सिद्धो भवति । शंसने च नौधसस्य योनिं पूर्वं शंसेत्पश्चाच्छ्यैतस्येत्ययमर्थोऽत्रैव साधयितुमुभयोर्ग्रहणं कृतमिति सिद्धम् ।

**एतद्धोत्रकाणां योनिस्थानं यच्च प्रगाथ आह्वानमेताभ्यस्तत्पञ्चाहावपरिमितत्वात् ।**

यत्प्रगाथे प्रकृतिप्राप्तमाह्वानं तद्योनिभ्य एव भवति न प्रगाथेभ्य इत्यर्थः । एवं चेद्वचनादेवायमर्थः सिध्यति[4] किं हेतुवचनेनेति । हेतुवचनस्येदं प्रयोजनं, पञ्चाहावातिरेकभयादेवेदमन्यदीयमाह्वानमन्यस्योच्यते वचनबलादित्येतद्दर्शयितुमिति ।

**उत्तमेनाऽऽभिप्लविकेनोक्तं तृतीयसवनम् ।**

'षष्ठस्य सावित्राभवे तृतीयेन' इत्यादिना ।

**ऐकाहिकौ तु प्रतिपदनुचरौ ।**

नाऽऽभिप्लविकौ 'विश्वो देवस्य नेतुः' इत्याद्यावित्यर्थः ।

**भासं च यज्ञायज्ञीयस्य स्थाने ।**

भासं नाम सामविशेषः । तदत्र कर्तव्यमित्यर्थः ।

**पृक्षस्य वृष्णो अरुषस्य नू सह इति स्तोत्रियानुरूपौ ।**

भासस्येत्यर्थः ।

**मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा ।**

इमौ वा पूर्वौ[5] वेति विकल्पः ।

---

१ च. °र्णं ब्रह्मसा° । २ च. °म्नोऽतिदेशं । ३ च. °द्भ्रान्त्यपनुत्त्यर्थं । ४ च. °मिच्छति । ५ ग. घ. ङ. झ. पूर्वो वे° ।

**अन्यासु चेदेवंलिङ्गास्वतोऽनुरूपः ।**

उक्ताभ्योऽन्यासु[1] मूर्धलिङ्गासु चेद्भासः क्रियेत तदा भासस्तोत्रियं गृहीत्वा 'मूर्धा दिवो नाभिः' इत्ययमेवानुरूपः कर्तव्य इत्यर्थः ।

**आवृत्ताः स्वरसामानः ॥ ६ ॥**

आवृत्ताः प्रतिलोमा इत्यर्थः । स्वरसाम्नामुत्तमः प्रथमो मध्यमो मध्यम[2] आद्योत्तम[3] इत्येषां पुनर्वचनं नवरात्रपूरणार्थं नाहरन्तरसिद्ध्यर्थमिति ॥ ६ ॥

**विश्वजितोऽग्निं नर इत्याज्यम् ।**

विश्वजिन्नाम विंशमहरुच्यते । तस्मिन्नहनि विश्वजिति 'अग्निं नरो दीधितिभिः' इति सूक्तमाज्यं भवति ।

**चतुर्विंशेन मध्यंदिनः ।**

निष्केवल्यमरुत्वतीये चतुर्विंशेन व्याख्याते इत्यर्थः ।

अत्र विशेषमाह—

**वैराजं तु पृष्ठं सन्यूङ्खम् ।**

अत्र वैराजं नाम साम पृष्ठस्थाने भवति । तस्य च 'पिबा सोममिन्द्र मन्दतु त्वा' इति विराजस्तोत्रियानुरूपौ भवतः । तासां मध्यमेषु पादेषु न्यूङ्खश्च भवतीति वैराजं पृष्ठं सन्यूङ्खमित्युक्तम् ।

**बृहतश्च योनिं प्राग्वैरूपयोन्याः ।**

चतुर्विंशातिदेशादेव बृहतः क्रियमाणस्य योनिशंसने प्राप्ते पुनर्वचनं योनिशंसनस्थ निमित्त*द्वये सत्यपि सकृदेवास्य योनिं शंसेदित्येवमर्थम् । प्राग्वैरूपयोन्या इत्येतस्मिन्क्रमे सिद्धेऽपि पुनर्वचनं बृहतश्च योनिमित्येतावत्युच्यमाने योन्यन्तरानिवृत्तिशङ्का स्यादिति तदाशङ्कानिवृत्त्यर्थम् ।

**होत्रकाणां पृष्ठानि शाक्वरवैरूपरैवतानि ।**

होत्रकशस्त्रस्तोत्रेष्वेतानि सामानि भवन्तीत्यर्थः । अतस्तेषां योनयोऽस्मिन्नहनि होत्रकाणां शस्त्रेषु स्तोत्रिया[4] भवन्ति । अनुरूपश्च तस्य स्तोत्रियस्य स्वकीयो भवति ।

**ते योनीः शंसन्ति ।**

त इति विशेषणं पृष्ठवन्तोऽपृष्ठवन्तश्च[5] होत्रकाः सन्तीति होत्रकद्वैविध्यप्रतिपादनद्वारेण द्विविधो विश्वजित्सर्वपृष्ठोऽसर्वपृष्ठश्चेति प्रदर्शयति । तथा चतुर्विंशमहाव्रताभिजिद्विश्वजिदि-

---

* घ.—अत्रोक्तमेकम् । यत्पवमाने तस्य योनिरनु०नामन्यत्र शंसेदिति प्राक्तनमपरम् ।

---

१ च. °न्यास्ववेंलि° । २ च. °ध्य आ° । ३ च. द्योऽन्तत इ° । ४ क. ग. घ. ङ. ञ. °हतोक्ति° । ५ घ. ङ. ञ. °वतोऽपृ° ।

त्यसर्वपृष्ठग्रहणं कुर्वन्नपि भेदेन विश्वजिद्ग्रहणं करोति । तदपि दर्शयत्यसर्वपृष्ठो विश्वजिद्स्तीति । अतस्ते पृष्ठवन्तो होत्रका योनीः शंसन्ति ।

**वामदेव्यस्य मैत्रावरुण उक्ते ब्राह्मणाच्छंसिनः ।**

उक्ते इति । श्यैतनौधसयोर्योनी इत्यर्थः ।

**काले यस्याच्छावाकः ।**

वामदेव्यकाले ययोरेते योनी इति प्रदर्शनार्थमाह ।

**ऐकाहिकौ स्तोत्रियावेतयोर्योनी ।**

'कया नश्चित्र आभुवत्' 'तरोभिर्वो विदद्वसुम्' इत्येते इत्यर्थः ।

**ता अन्तरेण कद्वतश्चैतेषामेव पृष्ठानां सामप्रगाथान् ।**

ता योनीः कद्वतः प्रगाथांश्चान्तरेण मध्य इत्यर्थः । एतेषां शाक्वरवैरूपरैवतानां सामप्रगाथाञ्शंसेयुरेकैकमेकैकः । 'सामसूक्तानि सप्रगाथानि' इत्यत्र सामसूक्तानां च सामप्रगाथानां च सर्वपृष्ठेषु प्राप्तिरुक्ता । इह[1] तेषां मध्ये सामसूक्तानां स्वरूपं स्थानं चोच्यते । अन्येषां स्थानमेव, स्वरूपस्यान्यत्रोक्तत्वात् ।

**सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि पुरस्तात्सूक्तानामुक्थं तृतीयसवनमुत्तमेन पृष्ठ्याह्नैकाहिकौ तु प्रतिपदनुचरौ बृहद्वेदग्निष्टोमसाम त्वमग्ने यज्ञानामिति स्तोत्रियानुरूपाविति नवरात्रः ।**

योऽयमभिजिदादिर्विश्वजिदन्तोऽहःसमूह उक्तः । स नवरात्रसंज्ञो वेदितव्यः (स[*]चाभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्चेति नवरात्रः ।)

**सर्वेऽग्निष्टोमाः ।**

सर्वग्रहणं स्वरसामसूत्तरयोरप्यग्निष्टोमत्वसिद्ध्यर्थम् । अभिप्लवप्रकृतित्वात्तयोरुक्थ्यसंस्थताऽऽशङ्क्येतेति ।

**उक्थ्यानेके स्वरसाम्नः ।**

एवं केचिच्छाखानुसारिण इच्छन्तीत्यर्थः ।

**द्वितीयमाभिप्लविकं गौरायुरुत्तरम् ।**

तृतीयमाभिप्लविकमित्यर्थः । संज्ञाप्रसङ्गादयमपि संज्ञाविधिरुच्यते ।

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थः ग. च. पुस्तकस्थः ।

---

१ घ. च. °त्यत्र ह° । २ घ. ङ. °द्वन्तः प° । ३ घ. च. इहैते° ।

**त्र्यहक्लृप्ते पूर्वस्मात्त्र्यहात्सवनशो यथान्तरं गौरायुरुत्तरात् ।**

यदि गोआयुषी त्र्यहक्लृप्ते भवतस्तदैवं भवतः, पूर्वस्मादाभिप्लविकत्र्यहात्सवनं सवनमादाय यथान्तरं यथाक्रमेणेत्यर्थः । एवं गौर्भवति । प्रथमात्प्रातःसवनं, द्वितीयान्माध्यंदिनं सवनं, तृतीयात्तृतीयसवनमिति । एवमुत्तरादाभिप्लविकात्त्र्यहात्सवनशो यथान्तरमायुरित्यर्थः ।

**षळहक्लृप्ते युग्मेभ्यो गौरयुजेभ्य आयुः ।**

षळहक्लृप्ते ते एव तदैवं भवतः । अभिप्लवस्य युग्मेभ्योऽहोभ्यः सवनशो यथान्तरं गौः कल्प्यः । अयुजेभ्य आयुरिति पूर्ववत् । एवं त्रिप्रकारा गोआयुषोरुत्पत्तिः ।

**दशरात्रे ।**

अधिकारोऽयम् । एतद्विदमित्यस्मात्प्राग्यद्वक्ष्यते तद्दशरात्र इति वेदितव्यम् । वक्ष्यमाणानि च दशाहानि दशरात्रसंज्ञानि भवन्तीत्युभयमत्रोच्यते ।

**पृष्ठ्यः षळहः पूर्वत्र्यहः पुनश्छन्दोमाः ।**

प्रथमं तावत्पृष्ठ्यः षळहो भवति । ततः पृष्ठ्यस्यैव यानि त्रीणि पूर्वाण्यहानि तेषां त्रयाणां च्छन्दोमा इति संज्ञा । एतानि दशरात्रे नवाहानि । पुनर्ग्रहणं किमर्थम् । स एव पूर्वत्र्यहः पुनरावर्तते तस्यान्यत्वमत्र नास्तीति ज्ञापनार्थम् । तेनेदं साधितं भवति—स्वरसाम्नामाभिप्लविकत्वे सत्यप्यैकाहिक एव सामप्रगाथस्त्रिष्वप्यहःसु भवति नाऽऽभिप्लविक इति ।

**न त्वत्र स्थायि वैरूपं तृतीये ।**

अत्रेति च्छन्दोमप्रत्ययार्थमुच्यते । तेनात्र च्छन्दोमेषु तृतीयेऽहनि वैरूपं साम न स्थायि भवति । अनित्यमित्यर्थः । एतदुक्तं भवति—यदि [1]पृष्ठस्थाने तत्कुर्युस्तदा स्तोत्रियत्वेन शंसेत, [2]यदि स्थाने न तत्कुर्युर्योनिशंसनमपि न कुर्यादिति । असत्यत्रग्रहणे दशरात्राधिकारात्तस्य तृतीयेऽहनि वैरूपस्यानित्यता प्रसज्येतातस्तन्निवृत्त्यर्थमत्रग्रहणम् ।

**प्रथमस्य च्छान्दोमिकस्य द्विषूक्तो मध्यंदिनः ।**

दशरात्राधिकारा[3]च्छान्दोमिकस्येति विशेषणम् । द्विषूक्तवचनं संसवेऽपि द्विषूक्ततासिद्ध्यर्थम् । तेनात्र ' उद्धरेदितराणि ' इत्ययमेव पक्ष [4]आश्रयणीय इति ।

---

१ घ. ङ. झ. पृष्ठ्यस्था° । २ च. °दि तत्स्थाने न कुर्युः । ३ ङ. °राच्छन्दो° । ४ च. आरम्भणी° ।

वैषुवते निविद्धाने पूर्वे च ।

'त्वं सुमेषं कया शुभा' इति च मरुत्वतीयम् । 'अभि त्यं मेषमिन्द्रस्य नु वीर्याणि' इति निष्केवल्यम् ।

द्वितीयस्य शंसा महान्महश्चित्वमिन्द्र पिबा सोममभि तमस्य द्यावापृथिवी महाँ इन्द्रो नृवदिति मरुत्वतीयम् ।

द्वितीयस्य च्छान्दोमिकस्येत्यर्थः ।

अपूर्व्या पुरुतमानि तां सुते कीर्तिं त्वं महाँ इन्द्र यो ह दिवश्चिदस्य त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यं तृतीयस्येन्द्रः स्वाहा गायत्साम तिष्ठा हरी प्रमंदिन इमा उत्वेति मरुत्वतीयम् ।

छान्दोमिकस्येत्यनुवर्तते ।

सं च त्वे जग्मुरिति सूक्ते आ सत्यो यात्वहं भुवं तत्त इन्द्रियमिति निष्केवल्यमायाहि वनसेमा नु कं बभ्रुरेक इति द्विपदा सूक्तानि पुरस्ताद्वैश्वदेवसूक्तानाम् ।

एतानि सूक्तानि लक्षणतो द्वैपदान्येव, तत्किमर्थमेषां द्विपदावचनमिति । अस्येदं प्रयोजनं समाम्नायस्य बलीयस्त्वज्ञापनार्थम् । तेनैतत्साधितं भवति—याश्चतुष्पदावत्समाम्नाये पठ्यन्ते द्विपदाः 'पवस्व सोम मन्दयन्परिप्रधन्वेन्द्राय सोम' इत्येवमाद्यास्तासां ग्रावस्तोत्रे चतुष्पदावदेव स्तवनं भवति । याः पुनर्द्विपदावदेव समाम्नायन्ते तासामध्यासवदित्युक्तमिति । वैश्वदेवसूक्तानामिति कर्मधारयः समासो वैश्वदेवानि च तानि सूक्तानि चेति । अतस्त्रिष्वहःस्वेतानि यथाक्रमेण भवन्ति । तथा च व्यूहळस्य प्रथमे छान्दोमिके वक्ष्यति 'नित्यानि द्विपदासूक्तानि' इति सर्वेषु च्छान्दोमिकेषु प्राप्तानीति[1] दर्शयति ।

इति नु समूह्ळः ॥ ७ ॥

दशरात्रोऽधिकृतः । तत्र नवाहान्युक्त्वा 'इति नु समूह्ळः' इत्युपसंहृतवानाचार्यः । तेनैतज्ज्ञायते समूह्ळव्यूह्ळौ नवरात्रावपि स्त इति । दशममहर्वक्ष्यते, तच्च साधारणं द्वयोः । तेन समूह्ळो व्यूह्ळश्च दशरात्रो भवति । नवरात्र(त्रो) दशरात्र इत्युभयथा व्यवहारोऽस्त्येव[2] । उभयथाव्यवहारेऽपि नवैवाहानि विक्रियन्ते दशमं तु तुल्यमेवेति सिद्धम् ॥ ७ ॥

---

१ च. प्राप्नोतीति । २ झ. °मं तूमयत्र तु° ।

**व्यूह्ळश्चेत्पृष्ठ्यस्योत्तरे त्र्यहे मध्यंदिनेषु गायत्रांस्तृचानुपसंशस्य तेषु निविदो दध्यात् ।**

यदि व्यूह्ळो दशरात्रस्तदा पूर्वस्मादयं विशेष उच्यते[1] । पृष्ठ्यस्योत्तरे त्र्यहे मध्यंदिनेषु सूक्तेषु गायत्रांस्तृचानुपसंशस्य तेषु तृचेषु निविदो दध्यात् । गायत्रग्रहणं गायत्रेष्वप्यहःसु सवनच्छन्द इति दर्शयितुम् । अतोऽत्र गायत्र्याः सवनच्छन्दस्त्वान्निविदतिपत्तौ गायत्र एवान्यस्मिंस्तृचे निविद्धेया । अन्यत्रापि निविदतिपत्ताविवं भवति । यत्सवनच्छन्दस्तत्सवनच्छन्दस्कं सूक्तमाहृत्य तस्मिन्निविद्धेया नातिपन्नच्छन्दस्के सूक्त इति । उपसंशस्येतिवचनं तृचानामेतेषां सूक्तत्वेन स्वातन्त्र्यनिवृत्त्यर्थम् । इतरथा 'तृचानेव याज्ञिकाः सूक्तमाहुः' इतिस्मरणात्सूक्तान्येव सूक्तस्थानेष्वहीनेष्विति परिभाषया च स्वतन्त्रत्वं स्यात् । ततश्च[2] हीनस्तोमेषु तृचवर्जनमन्यस्योद्धारः स्यात् । इष्यते च तृच[3]सहितस्यान्त्यस्य सूक्तस्यालोपः[4] । संसवे च तृचसहितात्सूक्तादेव पुरस्तादावापो न केवलतृचादेवेतीत्येवमपि लभ्यते । तृचानामसत्यपि सूक्तत्वे तृचेष्वेव निविद्धेयेत्येवमर्थं 'तेषु निविदो दध्यादित्युक्तम् ।' तेनैकां[5] तृच इत्येवं निविद्धेया भवति ।

**इमं नु मायिनं हुवे त्यमु वः सत्रासाहं मरुत्वाँ इन्द्रमीढ्वस्तमिन्द्रं वाजयामस्ययं ह येन वा इदमुप नो हरिभिः सुतमिति ।**

एते षट् तृचाः ।

**त्रैष्टुभान्येषां तृतीयसवनानि ।**

एषामह्नां तृतीयसवनानि त्रैष्टुभानि भवन्ति । इदमपि सवनच्छन्दस्त्वेन[6] विधीयते । प्रयोजनमपि पूर्ववदेव द्रष्टव्यम् ।

**चतुर्थेऽहन्या देवो यातु प्र द्यावेति वासिष्ठं प्र ऋभुभ्यः प्रशुक्रैत्विति वैश्वदेवं वैश्वानरस्य सुमतौ क ईं व्यक्ता अग्निं नर इत्याग्निमारुतमष्टादशोत्तमे विराजः ।**

विराड्वचनं विराज एवैता ऋचो नाऽऽसां विराड्धर्मो न्यूङ्ख इति ।

**द्विपदा एकादश मारुत एकविंशतिर्वैश्वदेवसूक्ते ।**

द्विपदा इति[7] शेषः । द्विपदावचनमुक्तप्रयोजनम् ।

---

१ च. °ते । उभयत्र पृ° । २ च. °तश्चाही° । ३ ग. ङ. झ. °च संहि° । ४ घ. ङ. च. °पः । शंसने च । ५ च. °नैकतृ° । ६ च. °न न वि° । ७ ग. घ. ङ. झ. °ति विशे° ।

**पञ्चमस्योदुत्य देवः सविता दमूना इति तिस्रो मही द्यावापृथवी इह ज्येष्ठे इति चतस्र ऋभुर्विभ्वा स्तुषे जनमिति वैश्वदेवं हविष्पान्तं वपुर्नु तदग्निर्होता गृहपतिः स राजेति तिस्र इत्याग्निमारुतमुत्तमा वैश्वदेवसूक्ते साध्यासोत्तमा जातवेदस्ये ।**

ऋच्यध्यस्यत इत्यध्यासः । समाप्तार्थायामृचि यस्यामुक्तार्थ इव यः पूर्वपादसदृशः पादो विधीयते सोऽध्यास इति विद्यात् ।

**सर्वत्राध्यासानुपसमस्य प्रणुयात् ।**

उपसमासो नामाकृत्वा प्रणवं * यथर्गक्षरमेव संधाय वचनम् । ऋगन्ते तु प्रणवः कर्तव्यः । एवं सर्वत्रवचनं प्रकरणादुत्कृष्याप्ययं विधिः प्रवर्तत इत्येवमर्थम् । सर्वत्रवचनं कारणमन्तरेणाप्यस्य विधेः प्राप्त्यर्थम् । साध्यासानामचतुष्पादत्वादर्धर्चशंसननिवृत्त्यर्थं वचनम् ।

**षष्ठस्योदुत्य देव इति गार्त्समदं किमु श्रेष्ठ उप नो वाजा इति त्रयोदशाऽऽर्भवं चतस्रश्च वैश्वदेवसूक्ते तृचमन्त्यमुद्धरेदिति वैश्वदेवम् ।**

किमु श्रेष्ठ इति त्रयोदशर्चः, उप नो वाजा इति चतस्रः, एताः सप्तदशर्चं आर्भवं भवति । समूहे + त्रीणि वैश्वदेवसूक्तानि तेषामन्त्यं तृचमुद्धरेत्स्वस्त्यात्रेय इतिसंज्ञकम् ।

**अहश्च कृष्णं मध्वो वो नाम सप्रत्नथेत्याग्निमारुतमिति पृष्ठ्यः ॥ ८ ॥**

उक्त इति शेषः । उक्तानुसंकीर्तनं पृष्ठ्यस्यापि समूहळ्व्यूहळव्यवहारसिद्ध्यर्थम् ॥ ८ ॥

**अथ च्छन्दोमाः ।**

अथानन्तरं व्यूहळस्य च्छन्दोमा अधिक्रियन्त इति संबन्धः ।

**समुद्रादूर्मिरित्याज्यमा वायो भूष शुचिपा उप नः प्रयाभिर्यासि दाश्वांसमच्छानो नियुद्भिः शतिनीभिरध्वरं प्रसोता**

---

* ग. यथाऽन्त्यमक्षरमे° इति पाठान्तरम् । + ग.—इदमित्था, ये यज्ञेन स्वस्ति नो मिमीता ।

---

१ ग. घ. ङ. ञ. °म् । सा° । २ ग. घ. ङ. ञ. °तुष्पद° । ३ ग. घ. ङ. ञ. °शर्चम् । उ° ।

जीरो अध्वरेष्वस्थाद्ये वायव इन्द्र मादनासो या वां शतं नियुतो याः सहस्रमित्येकपातिन्यः प्रयद्वां मित्रावरुणा स्पूर्धन्ना गोमता नासत्या रथेनाऽऽनो देव शवसा याहि शुष्मिन्प्रवो यज्ञेषु देवयन्तो अर्चन्प्रक्षोदसा धायसा सस्र एषेति प्रउगम् ।

एकपातिन्यौ द्वौ[1] तृचौ ।

**माध्यंदिने सूक्ते विपरिहृत्येतरयोर्निविदो दध्यात् ।**

मध्यंदिने भवं माध्यंदिनम् । निष्केवल्यमरुत्वतीययोः सूक्ते इत्यर्थः । मरुत्वतीये निष्केवल्ये च ये सूक्ते ते पूर्वोत्तरे कृत्वेतरयोरुत्तरीकृतयोर्निविदो दध्यात् । अन्त्ये[2] निविदं दध्यादित्युत्तरयोरेव निविदि प्राप्तायामितरयोरितिवचनं संसवेऽप्यनुद्धार एवास्मिन्दशरात्रे भवतीत्येवमर्थम् । अतस्त्रिषूक्तताऽप्यस्मिन्दशरात्रे भवतीति निविदतिपत्तौ चान्यस्मिन्[3]नागत एव निविद्धेया ।

**एवमुत्तरयोश्चतुर्थपञ्चमे ।**

अत्रापीतरयोरित्यनुवर्तते । प्रयोजनं च पूर्ववत् । एवमुत्तरयोरपि च्छन्दोमयोश्चतुर्थ[4]पञ्चमे सूक्ते विपरिहृत्योत्तरीकृतेष्वेव निविदो दध्यात् ।

**अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवाऽयं देवाय जन्मन इति तृचा ऐभिरग्ने दुव इति वैश्वदेवम् ।**

पूर्वाणि त्रीणि सूक्तानि तृचा एव ।

**नित्यानि द्विपदासूक्तानि ।**

वैश्वदेवसूक्तानामित्यस्य कर्मधारयत्वाद्द्विपदासूक्तानां त्रिषु च्छन्दोमेषु समूह्ळेष्वपि[5] प्राप्तानामनेन व्यूह्ळेषु प्राप्तिरुच्यते[6] ।

**वैश्वानरो अजीजनदित्येका स विश्वं प्रति चाक्लृपदृतूनुत्सृजते वशी । यज्ञस्य वय उत्तिरन् । वृषापावक दीदिह्यग्ने वैश्वानर द्युमत् । जमदग्निभिराहुतः । प्रयद्वस्त्रिष्टुभं दूतं व इत्याग्निमारुतम् ॥ ९ ॥**

वैश्वानरीयं सूक्तं तृचमाद्या[7] चातुर्मास्येषु कल्पजा । उत्तरे अत्रैवाऽऽम्नाते 'स विश्वं वृषापावके' इत्येते ॥ ९ ॥

---

१ च. प्रथमौ । २ च. अन्ते । ३ ग. घ. ङ. झ. चास्मि° । ४ घ. झ. °तुःप° । ५ ग. घ. ङ. च. ह्ळेऽपि । ६ ग. घ. ङ. च. झ. °ह्ळे प्रा° । ७ ग. °तृचं कल्पजस्तृच आद्या ।

द्वितीयस्याग्निं वो देवमित्याज्यं कुविदङ्ग नमसा ये वृधासः पीवो अन्नाँ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्रा इत्येकपातिन्य उशन्ता दूता नदभाय गोपा यावत्तरस्तन्वो यावदोज इत्येका द्वे च प्रति वाँ सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्माण इन्द्रोपयाहि विद्वानूर्ध्वो अग्निः सुमतिं वस्वो अश्वेदुतस्या नः सरस्वती जुषाणेति प्रउगम्।

आद्यस्तृच एकपातिन्यः। द्वितीये एका द्वे च।

हिरण्यपाणिमूतय इति चतस्रो मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचौ देवानामिदव इति वैश्वदेवम्।

प्रथमं चतुर्ऋचः[2]। ततो द्वे सूक्ते तृचौ[3] चतुर्थं सूक्तम्।

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्। अजस्रं घर्ममीमहे। दिवि पृष्टो अरोचताग्नि-र्वैश्वानरो महान्। ज्योतिषा बाधते तमः। अग्निः प्रत्नेषु धामसु कामो भूतस्य भव्यस्य। सम्राळेको विराजति। क्रीळं वः शर्धोऽग्ने मृळेत्याग्निमारुतम् ॥ १० ॥

प्रथमः कल्पजस्तृचः। इतरे सूक्ते ॥ १० ॥

तृतीयस्यागन्म महेत्याज्यं प्रवीरया शुचयो दद्रिरे ते सत्येन मनसा दीध्याना दिवि क्षयन्ता रजसः पृथिव्यामा विश्ववाराऽश्वि-नागतं नोऽयं सोम इन्द्र तुभ्यं सुन्व आतु प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देव-यन्तो हवन्त आ नो दिवो बृहतः पर्वतादा सरस्वत्यभि नो नेषि वस्य इति प्रउगम्।

दद्रिरेते इति प्रयोगपाठः।

एकपातिन्य उत्तमः।

उत्तमस्तृच एकपातिन्यः।

---

१ च. °तीयस्त्वेका। २ च. °र्ऋचम्। त°। ३ क. ग. घ. ङ. ञ. °चौ। ऋ°।

**दोषो आगात्प्रवां महिद्यवी अमीति तृचा-विन्द्र इषे ददातु नस्तेनो रत्नानि धत्तने-त्येका द्वे च ये त्रिंशतीति वैश्वदेवम् ।**

दोषो आगादिति पार्ष्ठिके षष्ठेऽहन्यनुचरत्वेन पठितेह[1] सूक्तत्वायोच्यते[2] । द्यावापृथिवीयं तृच एव ' इन्द्र इषे ददातु न ' इत्येका[3] ' तेनो रत्नानि धत्तन ' इति द्वे आभवं समाहार्यम् ।

**वैश्वानरो न ऊतय आ प्रयातु परावतः। अग्निर्नः सुष्टुतीरुप। वैश्वानरो न आगमदिमं यज्ञं सजूरुप। अग्निरुक्थेन वाहसा। वैश्वानरो अङ्गिरोभ्यः स्तोम उक्थं च चाकनत्। ऐषु द्युम्नं स्वर्यमत्। मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतम् ॥ ११ ॥**

वैश्वानरीयं सूक्तं कलाजस्तृचः ॥ ११ ॥

**दशमेऽहनि ।**

यदित ऊर्ध्वं वक्ष्यते तद्दशमेऽहनीत्येवमधिकारो भवति ।

**अनुष्टुभां स्थानेऽग्निं नरो दीधिति-भिररण्योरिति तृचमाग्नेये क्रतौ ।**

आग्नेये क्रतौ या अनुष्टुभः प्रातरनुवाकेऽनूच्यन्ते तासां सर्वासां स्थानेऽयं तृचो भवति । क्रतुग्रहणं प्रातरनुवाक एवायं विधिः स्यान्नान्यत्रेत्येवमर्थम् ।

**उषा अपस्वसुस्तम इति पच्छो द्विपदां त्रिरुषस्ये ।**

क्रतावित्यनुवर्तते, पच्छो द्विपदां इत्यस्य शस्यविषयत्वात् । पच्छ इतिवचनमनुवचनेऽप्यत्र प्रापणार्थम् । या उषस्ये क्रतावनुष्टुभस्तासां सर्वासां स्थान एतां द्विपदां त्रिष्कृत्वो ब्रूयात् ।

**आ शुभ्रायातमश्विनास्वश्वेति तृचमाश्विने क्रतौ ।**

क्रतुग्रहणमाश्विने शस्त्र एवं मा भूदित्येवमर्थम् । अतो ज्ञायते दशममहरतिरात्रसंस्थमेकाहीभूतमस्तीति । तथा च शाखान्तरे दृष्टम् ।

**स्तोकसूक्तस्य द्वितीयतृतीययोः स्थानेऽग्ने घृतस्य धीतिभिरुभे सुश्चन्द्रसर्पिष इत्येते ।**

प्रकृतेऽपि स्थानग्रहणे पुनः स्थानग्रहणं दशमेऽहन्यनुष्टुभां स्थान इत्यस्य सूत्रस्यानीप्सितार्थप्रतिपादकत्वशङ्कानिवृत्त्यर्थम् ।

---

१ घ. ङ. च. झ. °ठिता इह । २ घ. ङ. च. झ. °च्यन्ते । द्या° । ३ ग. घ. ङ. झ. °त्येकां ते° । ४ च. °द्यामित्य° ।

दशमेऽहनि या अनुष्टुभस्तासां सर्वासां स्थानेऽन्या ऋचः कर्तव्या इति यद्ययमर्थः स्यात्तदा यासां स्थाने या उक्तास्तासां सर्वासां स्थाने ता भवन्ति । यासां नोक्तास्तासामन्या अन्वेषणीयाः स्युः । एवं सति प्रथमेनैव सूत्रेण गतार्थत्वात्पुनरपि स्थानग्रहणप्रपञ्चोऽनर्थकः स्यात् । कृतश्च प्रपञ्चः । अतो ज्ञायतेऽस्य प्रपञ्चस्यायमर्थ इति । यासां स्थानेऽन्या विधीयन्ते तासामेव स्थाने ता एव भवन्ति । अन्यासामनुष्टुभामेव प्रयोगः कर्तव्य इति पुनः पुनः स्थानग्रहणं कृतमिति सिद्धम् ।

**इदमापः प्रवहतेत्येतस्याः स्थान आपो अस्मान्मातरः शुन्धयन्त्विति अछा वो अग्निमवसे प्रत्यस्मा इति तृचयोः स्थानेऽच्छा नः शीरशोचिषं प्रतिश्रुताय वो धृषदिति तृचावच्छावाकः ।**

अच्छावाकग्रहणमाश्विने शस्त्रेऽच्छा वो अग्निमवस इत्यस्योद्धारो मा भूदित्यतोऽप्यदिमहरेकाहीभूतमतिरात्रसंस्थमस्तीति ज्ञापितं भवतीति ।

**परि त्वाऽग्ने पुरं वयमित्येतस्याः स्थानेऽग्ने हंसि न्यत्रिणमित्युत्तिष्ठतावपश्यतेत्येतस्याः स्थान उत्तिष्ठन्नोजसा सहेत्युरु विष्णो विक्रमस्वेति घृतयाज्यास्थाने भवा मित्रो न शेव्यो घृतासुतिरिति ।**

घृतयाज्याहणमियमेव घृतयाज्याऽस्मिन्नहनि नियमेन भवतीति । अनेन प्रकारेणास्मिन्नहन्यन्यतरश्चेत्ययं पक्षो न प्रवर्तत इति साधितं भवति ।

**अहरहश्चाहर्गणेषु यत्रैतदहः स्यात् ।**

न केवलं दशम एवाहनि घृतयाज्याया उभयतो यागपक्षः किं तर्हि सत्रेष्वहीनेषु च यस्मिन्नहर्गणे दशममहरस्ति तस्मिन्नहरहश्चायमेव घृतयाज्याविधिर्भवति[1]। अहरहरिति । सर्वेष्वहःस्वित्यर्थः । एतदुक्तं भवति—यस्मिन्नहर्गणेऽविवाक्यमस्ति तस्मिन्सर्वेष्वहःसु घृतयाज्यायाः सौम्यस्योभयतो यागपक्ष एव नियम्यते ।

**सिनीवाल्या अभ्यस्येदित्येके ।**

सिनीवाल्या ये याज्यानुवाक्ये उक्ते ते अनुष्टुभौ सत्यावभ्यासेनान्यत्वमापादयेदित्येके मन्यन्ते । अभ्यासे चानुवाक्यायां चतुरक्षराभ्यासो याज्यायामष्टाक्षराभ्यासः कर्तव्य इति । [ *श्रुतावेव प्रसिद्धम् । अन्त्यानामष्टाक्षराणामभ्यासः । ]

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थश्चपुस्तकस्थः ।

---

१ घ. च. °श्चेदित्य° । २ घ. °हः सर्वेश्चा° ।

**नास्मिन्नहनि केनचित्कस्यचिद्वि-वाच्यमविवाक्यमित्येतदाचक्षते ।**

अस्मिन्नहनि केनचित्कर्त्रा कस्मैचित्कर्त्रे मन्त्रः कर्म वा न विवाच्यं नाऽऽख्यातव्यमित्यर्थः । कुतः । यस्मादेतदहरविवाक्यमिति श्रुतावेव प्रसिद्धम् । परस्परमविवेचनीयमेतस्मिन्नहनीत्यविवाक्यमिदमहर्भवति ।

**संशये बहिर्वेदि स्वाध्यायप्रयोगः ।**

यदि कस्यचित्कर्तुः स्वपदार्थकरणेऽज्ञानसंशयविपर्ययाः स्युस्तदा किं कर्तव्यमिति तत्राऽऽह—बहिर्वेदि स्थित्वा तस्याज्ञानाद्यपनयनार्थमध्ययनेनान्येन[1] स्वाध्यायप्रयोगः कर्तव्यः । कर्मणि संशयश्चेत्तद्विधायकशास्त्रं ब्राह्मणप्रयोगशास्त्रं[2] वा पठेत् । मन्त्रे मन्त्रः पठितव्यः ।

एवं बहिर्वेद्यध्ययनेन यदि संशयादिर्नात्येयात्तदा—

**अन्तर्वेदीत्येके ।**

एवं चेदन्तर्वेदि स्थित्वैवं पठितव्यमुपदेष्टव्यम् ।

**न व्यञ्जनेनोपहितेन वाऽर्थः ।**

एवमपि संशयो यदि नापेयात्तदा व्यञ्जनेन वोपहितेन वा प्रतिरुद्धोऽर्थः कर्म वा मन्त्रो वा साधयितव्यः । व्यञ्जनं नाम व्यज्यते सूच्यते येन तद्व्यञ्जनम् । उपहितं नाम च्छलोक्तिः । अयमप्येवंप्रकारः[3], नाहमस्मै वदामीत्येवंप्रकारः । एतदुक्तं भवति—अन्तर्वेदि स्वाध्यायप्रयोगेणापि तेषामर्थो यदि न सिध्येत्तदा केनचित्सूचकेन शब्देन तदर्थं ब्रूयान्न वाचकेनेत्यर्थः । अथवोपहितेन च्छलोक्त्या वा तेषामर्थः साधयितव्य इति । न व्यञ्जनेनेत्यत्र नेति व्यवच्छिद्य योजना । पूर्वोक्तेन यदि संशयो नापेयात्तदा व्यञ्जनेनोपहितेनेति[4] ।

**प्रत्यसि त्वा प्रायश्चित्तं जुहुयुः ।**

उक्तानामन्यतमेनोपायेनार्थः साधयितुं न शक्यते यदि तदा विधिमुखेनैव[5] तदर्थं साधयित्वा सर्वप्रायश्चित्तं जुहुयुः । स्वस्वशास्त्रविहितं विशिष्टं प्रायश्चित्तमस्ति चेत्तद्वा[6] जुहुयुः ।

**अग्ने तमद्याश्वं न स्तोमैरित्याज्यम् ।**

सूक्तार्थे[7] विहितत्वात्सूक्तमेव भवति ।

---

१ ध. °नानेन । २ च. °ह्मणं प्र° । ३ ग. °मप्येवं° । ४ ग. °तेन वेति । ५ ग. घ. ङ. ञ. °मुख्यैनै° । ६ क. च. °तदा जु° । ७ च. सूक्तकार्ये वि° ।

**पञ्चाक्षरेण विग्रहो दशाक्षरेण वाऽऽत्वा रथं यथोतय**
**इत्येतस्याः स्थाने त्रिकद्रुकेषु महिषो यवाशिरमिति ।**

आद्याया उद्धार उत्तरे द्वे भवतः । अनुचरादि सर्वं समानम् ।

**सखाय आशिषामहीति तिस्र उष्णि-**
**हो मरुत्वाँ इन्द्रेति मरुत्वतीयम् ।**

एतास्तिस्र एकं सूक्तम् । मरुत्वाँ इन्द्र वृषभ इत्येकम् । एवं द्विसूक्तं मरुत्वतीयम् । उष्णिग्ग्रहणं विस्पष्टार्थम् ।

**कया नश्चित्र आभुवदित्येतासु रथं-**
**तरं पृष्ठं तस्य योनिं शंसेत् ।**

उत्तरंविवक्षार्थमेतत् ।

**बृहतश्च गाणगारिर्दशरात्रे युग्मान्वयत्वात् ।**

इदं सामान्यतो दृष्टमात्रम् ।

**तार्क्ष्येणैकपदा उपसंशस्य ऋगावानमेकपदाः**
**शंसेदिन्द्रो विश्वस्य गोपतिरिति चतस्रः ।**

तार्क्ष्यानन्तरमेकपदामृगावानं शंसेत् । तार्क्ष्यस्योत्तमेन प्रणवेन प्रथमामेकपदामुपसंतनु-यात् । उपसंशस्येतिवचनं तार्क्ष्यस्यैकपदाभिः सहैकतासिद्ध्यर्थम् । अतस्तार्क्ष्यसंबन्धे सत्ये-कपदाभ्यः पृथगाहावो न कर्तव्यः । असति तु तार्क्ष्ये एकपदाभ्य एवाऽऽहावः कर्तव्य इत्येतत्साधितं भवति । पुनरेकपदाग्रहणं तार्क्ष्याभावेऽप्येकाहेष्वेकपदानां प्रापणार्थम् ।

**उत्तमयोपसंतानः ।**

उत्तमयैकपदया सूक्तादेराहाव उपसंतनुयात् ' इन्द्रो विश्वस्य राजतो३शोंसावो३म् ' इति ।

**य इन्द्र सोमपातम इति षळुष्णिहो**
**युध्मस्य त इति निष्केवल्यम् ।**

उक्तार्थमेतत् ।

**तत्सवितुर्वृणीमह इत्येतस्याः स्था-**
**नेऽभि त्यं देवं सवितारमोण्योरिति ।**

आद्यायाः स्थान एषा भवति । कविमित्यर्धर्चान्तः । अस्य हि स्वयशस्तरमित्यादि समानम् ।

---

१ ङ. च. °दा ऋगा° ।

**ऋभुक्षण इत्यार्भवं पश्वानतायुमिति द्वैपदं समिद्धमग्निं समिधा गिरा गृण इति तृचश्च द्विप्रतीकं जातवेदस्यम् ।**

द्विप्रतीकवचनं द्विपदासूक्तानामसति वचने निविद्धानीयत्वं नास्तीति ज्ञापयितुम् । अत 'आयाहि वनसा सह' इत्यादीनामाहावो न कर्तव्यः । तेभ्यः परस्ताद्वैश्वदेवसूक्तादिष्वेवाऽऽहावः कर्तव्य इति सिद्धम् ।

**चतुर्थेन व्यूळ्हस्येतराणि सूक्तानि ।**

वैश्वदेवाग्निमारुतयोरार्भवजातवेदस्यादन्यानि[1] सावित्रादीनि यानि सूक्तानि तानि[2] व्युह्ळस्य चतुर्थादह्न आहर्तव्यानीत्यर्थः । होतुरुक्तादन्यदैकाहिकम् । होत्रकाणां सात्रिकमेव सर्वमहीनसंपाताभावात्[3] । माध्यंदिनेऽयं विशेषः—आरम्भणीयाभ्य ऊर्ध्वं मैत्रावरुणस्य 'सद्यो ह जातः' इत्यहरहःशस्यमन्त्यमैकाहिकमेव 'आत्वामिन्द्र' इति । ब्राह्मणाच्छंसिनः पूर्वमैकाहिकम् 'इन्द्रः पूर्भिदुदु ब्रह्माणि' इत्यहरहःशस्यम् । अच्छावाकस्य भूय इदिति पूर्वमैकाहिकमहरहःशस्यमभितष्टेवेति ।

**वामदेव्यमग्निष्टोमसामाग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपावग्निष्टोम इदमहः ।**

अग्निष्टोमसंस्थमहर्भवतीत्यर्थः ।

**ऊर्ध्वं पत्नीसंयाजेभ्यः ॥ १२ ॥**

॥ १२ ॥

**गार्हपत्ये जुह्वतीह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्नेवाट्स्वाहावाळिति ।**

गार्हपत्योऽत्र शालामुखीयः । तत्र सर्वे होत्रादयो जुह्वति । पत्नीसंयाजान्तादह्नः[4] संस्थित इति वक्तव्ये यत्पत्नीसंयाजेभ्य ऊर्ध्वमिति ब्रवीति तज्ज्ञापयति दशमस्यैवाह्न एतदङ्गमिति ।

**आग्नीध्रीय उपसृजं धरुणं मातरं धरुणो धयन् । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति ।**

अत्रापि होत्रादयः सर्वे कर्तारो जुह्वति । इदं होमद्वयं ब्राह्मणेऽप्युक्तं तत्रैको होमकर्ता, इतरे जुह्वतं समन्वारभन्त एवं वा जुहुयात्, सूत्रानुसारेण वा ।

---

१ घ. झ. ङ. °स्यान्या°। २ ग. °त्राणि या°। ३ च. °हीनं सं°। ४ च. °जान्तत्वाद°।

**सदः प्रसृप्य मानसेन स्तुवते ।**

अस्मिन्काले छन्दोगाः सदः प्रसृप्य मानसेन स्तुवते । मानसं नाम स्तोत्रविशेषः । सदः प्रसृप्यति परकर्तृकविधानं यत्रैते स्तुवते तत्रैवोत्तरं कर्म होत्राऽपि कर्तव्यमित्येवमर्थम् । अतः ' सदस्येवाध्वर्यवित्याह्वयीत ' इत्यादि सर्वं कर्तव्यम् ।

**यर्हि स्तुतं मन्येताध्वर्यवित्याह्वयीत ।**

यदा छन्दोगैः स्तुतं मन्यते होता मानसत्वादप्रत्यक्षो स्तुतिरिति यस्मिन्स्तुतं मन्यत इत्युक्तं तदाऽध्वर्यो इत्याह्वानं कुर्यात् ।

**हो होतारतीतरः ।**

इतरोऽध्वर्युर्हो होतरिति प्रत्याह्वानं करोति ।

**आऽयं गौः पृश्निरक्रमीदित्युपांशु तिस्रः पराचीः शस्त्वा व्याख्यास्वरेण चतुर्होतॄन्व्याचक्षीत ।**

तिस्र इतिवचनं[1] स्तुत्याधारत्वे[2] सत्यप्यासां स्तोत्रियधर्मनिवृत्त्यर्थम् । तेनाध्वर्यो इत्ययमाहावः शस्त्राङ्गमेव भवति न स्तोत्रियाङ्गम् । अतः शस्त्रस्य मध्यमस्वरत्वादध्वर्यो इत्यपि मध्यमस्वरो भवति नोपांशुस्वरः । पराचीरित्यभ्यासनिवृत्त्यर्थम् । व्याख्यास्वरो नाम मध्यमस्वरः । चतुर्होतार इति ' तेषां चित्तिः स्रुक् ' इत्येवमादेः ' मन उपवक्ता ' इत्येवमन्तस्य मन्त्रस्य नाम, तं व्याचक्षीत वाक्ये वाक्येऽवसाय ब्रूयादित्यर्थः ।

**देवा वा अध्वर्योः प्रजापतिगृहपतयः सत्रमासत ।**

एवं चतुर्होतृसंज्ञस्य मन्त्रस्योत्पत्तिवाक्यमिदमुक्त्वा चतुर्होतॄन्व्याचक्षीत ।

**ॐ होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसितेऽवसिते दशसु पदेषु ।**

ओं होतस्तथा होतरित्येतौ प्रतिगरौ तेषां चित्तिरित्यादिषु दशसु पदेषु भवतः । तत्र पूर्वेषु पञ्चसु पूर्वो भवति, उत्तरेषूत्तर इति विभागोऽर्थाल्लभ्यते । दशसु पदेष्विति-वचनाद्दशस्वेव पदेषु चतुर्होतृसंज्ञेष्वेतौ प्रतिगरौ भवतः, न प्रतिपत्तिवाक्ये न ग्रहसंज्ञे च मन्त्र इति । उत्तरयोस्तलुब्रह्मोद्ययोरपवर्जनवचनादेव[3] प्रतिगराभावः । अत्राऽऽहावो यस्तत्र हो होतरिति प्रतिगरः । सार्पराज्ञीनां शंसतिचोदितत्वात्प्राकृतावेव प्रतिगरौ तावुपांशु कर्तव्यौ । उत्तमेऽर्धर्चे यः प्रणवस्तेनावसानमर्थात्कल्प्यते[4] । उत्तरस्यानृक्त्वादपदसमाम्नातत्वाच्च । तेनासौ त्रिमात्र एव भवति । प्रणवान्तश्च तत्र प्रतिगरः ।

---

१ च. °क्षात्स्तुति° । २ घ. च. °नं सुत्या° । ङ. झ. °नं सुत्या° । ३ च. °पञ्चजन° । ४ घ. च. °र्थाल्लभ्यते ।

तेषां चित्तिः स्रुगासी३त् । चित्तमाज्यमासी३त् । वाग्वेदिरासी३त् । आधीतं बर्हिरासी३त् । केतो अग्निरासी३त् । विज्ञातमग्नीदासी३त् । प्राणो हविरासी३त् । सामाध्वर्युरासी३त् । वाचस्पतिर्होताऽऽसी३त् । मन उपवक्ताऽऽसी३त् ।

अयं चतुर्होत्राख्यः ।

ते वा एतं ग्रहमगृह्णत । वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम्ना द्यां गच्छ । यां देवाः प्रजापतिगृहपतय ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्याम इति ।

'ते वा एतम्' इत्यादिः 'तामृद्धिं रात्स्यामः' इत्यन्तो ग्रहसंज्ञो मन्त्रः ।

अपव्रजत्यध्वर्युः ।

अस्मिन्नवसरेऽध्वर्युरपगच्छति ।

अथ प्रजापतेस्तनूरितर उपांश्वनुद्रवति ।

ग्रहमन्त्रस्य मध्यमस्वर एव प्रकृतत्वात् । अथानन्तरं प्रजापतेस्तनूरितरो होताऽनुद्रवत्युपांशु । प्रजापतेस्तनूरिति मन्त्रसंज्ञा ।

ब्रह्मोद्यं च ।

ब्रह्मोद्यं चोपांश्वेवानुद्रवति ।

अन्नादा चान्नपत्नी च भद्रा च कल्याणी चानिलया चापभया चानाप्ता चानाप्या चानाधृष्या चाप्रतिधृष्या चापूर्वा चाभ्रातृव्या चेति तन्वः ।

एते तनुसंज्ञका मन्त्राः ।

अग्निर्गृहपतिरिति हैक आहुः सोऽस्य लोकस्य गृहपतिर्वायुर्गृहपतिरिति हैक आहुः सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहाः । येषां वै गृहपतिं देवं विद्वान्गृहपतिर्भवति राध्नोति स गृहपती राध्नुवन्ति ते यजमानाः । येषां वा अपहतपाप्मानं देवं विद्वान्गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हतेऽप ते यजमानाः पाप्मानं घ्नते ।

ब्रह्मोद्यसंज्ञका मन्त्राः ।

---

१ च. ख्यः पदसमूहः । ते ।

**अध्वर्यो अरात्स्मेत्युच्चैः ।**

एतत्प्रियवाक्यं तदुच्चैर्वक्तव्यम् ।

**एषा याज्या ।**

यदेतत्प्रियवाक्यं तदेवमेवावस्थितं याज्या भवति ।

**एष वषट्कारः ।**

एवं वषट्कारश्चाऽऽगूश्च न कर्तव्या ।

**नानुवषट्करोत्युक्तं वषट्कारानुमन्त्रणम् ।**

तदिह कर्तव्यमिति शेषः ।

**अरात्स्म होतरित्यध्वर्युः प्रत्याह ।**

एतदुक्तं भवति दशममहः परिसमाप्तम्, अतो वयमरात्स्म । अध्वर्यो समृद्धा वयमित्यर्थः । होत्रैवमुक्तोऽध्वर्युरपि तमेवार्थमनुमोदते सत्यमेवमरात्स्म होतरिति ।

**मनसाऽध्वर्युर्ग्रहं गृहीत्वा मनसा भक्षमाहरति ।**

मनसा क्रियमाणमन्येन न शक्यते ज्ञातुमिति संविज्ञानार्थमिदमुच्यते ।

**मानसेषु भक्षेषु मनसोपह्वानभक्षणे ।**

अध्वर्युणैवं कृते स्वयमप्येवं करोति । अध्वर्युग्रहणादन्ये प्रतिप्रस्थात्रादयोऽपि भक्षाहरणं कुर्वन्ति । तेष्वेवोपहवयाचनं भवतीति ज्ञायते ।

**मनसाऽऽत्मानमाप्यायौदुम्बरीं समन्वारभ्य वाचं यच्छन्त्या नक्षत्रदर्शनात्तत्रानधरान्पाणींश्चिकीर्षेरन् ।**

तत्रौदुम्बर्यान्वारम्भणे पाणीनधरान्कर्तुं नेच्छेयुः । औदुम्बर्या अग्रप्रदेशे समन्वारभेरन्नित्यर्थः ।

**दृश्यमानेष्वध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशाद्युवन्तामिन्द्रा पर्वता पुरोयुधेति जपन्तः ।**

दृश्यमानेषु नक्षत्रेष्वध्वर्युप्रधानाः परस्परं समन्वारब्धाः सर्पन्त्या तीर्थदेशप्राप्तेः 'युवन्तामिन्द्रा पर्वता' इत्येतामृचं सकृत्सर्वे जपन्तः ।

**अध्वर्युपथेनेत्येके ।**

अयं सर्पणस्य मार्गविधिः । अध्वर्युपथो नाम हविर्धानाग्नीध्रीययोर्मध्यं तेन वा प्रसर्पन्ति ।

---

१ घ. ङ. झ. °रक्षां कु° ।

**दक्षिणस्य हविर्धानस्याधोऽक्षेणेत्येके ।**

अक्षस्याधस्ताच्चक्रयोर्मध्येनेत्यर्थः । एक इति द्विरुक्तेः प्रयोजनमस्य सर्पणस्य मार्गान्तरमप्यस्तीति प्रदर्शनार्थम् ।

**प्राप्य वरान्वृत्वा वाचं विसृजन्ते यदिहोनमकर्म यदत्यरीरिचाम प्रजापतिं तत्पितरमप्येत्विति ।**

तीर्थदेशं प्राप्य तत्राभिमतान्वरान्कामानित्यर्थः । वृत्वा प्रार्थयित्वा । ततो वाचं विसृजन्ते 'यदिहोनम' इत्यनेन मन्त्रेण । अस्यायमर्थः—अस्मिन्नहनि कर्मण्यूनमतिरिक्तं वा कृतवन्तो वयं तत्सर्वं प्रजापतिं पितरं पालयितारं गच्छत्विति ।

**अथ वाचं निह्नवन्ते वागैतु वागुपैतु वागुपमैतु वागिति ।**

निह्नवन्ते नमस्कुर्युरित्यर्थः । अस्माभिर्विसृष्टा न गच्छतु, अस्मानेव पुनः प्रविशत्वित्यर्थः ।

**उत्करदेशे सुब्रह्मण्यां त्रिराहूय वाचं विसृजन्ते ।**

ततः सर्वे होत्रादय उत्करदेशे स्थित्वा सुब्रह्मण्योमिति त्रिराहूय वाचं विसृजन्ते ।

**नित्यस्त्विह वाग्विसर्गः ।**

यदुक्तो वाग्विसर्गमन्त्रो भूर्भुवःस्वरिति तेनात्र वाग्विसर्गः कर्तव्यः ।

**एतावत्सात्रं होतृकर्मान्यत्र महाव्रतात् ।**

एतावदित्येतत्परिमाणमित्यर्थः । सत्रे भवं सात्रम् । होतृशब्देन होता तत्पुरुषाश्चोच्यन्ते । तेषां कर्म होतृकर्म । प्रथमं तावच्चतुःसंस्थो ज्योतिष्टोम उक्तः, ततः सत्राणामित्यधिकृत्य चतुर्विंशादीन्यविवाक्यपर्यन्तान्यहान्युक्तानि । महाव्रतं चान्यत्र वक्ष्यते । यदत्र सत्राणामित्यधिकृत्य त्रयोविंशतिरहान्युक्तानि साङ्गोपाङ्गानि तस्य सर्वस्य[1] सत्राङ्गत्वज्ञापनार्थमित्येतावत्सात्रं होतृकर्मेत्युपसंहरति । एतावदेव सात्रं होतृकर्म न शास्त्रान्तरमवेक्षणीयम् । नापि सत्रेषु पुनः प्रकृत्यतिदेशोऽपेक्षणीय[2] इति । अत्र होतृकर्मेति विशेषणं ब्रह्मणो ब्रह्मपुरुषाणां शास्त्रान्तरोक्तमस्ति चेत्तदपि कर्तव्यमित्यर्थम् । सत्राणामित्यधिकृत्य त्रयोविंशतिमेवाहान्युक्त्वा महाव्रतमनुक्त्वैवैतावत्सात्रं होतृकर्मेत्युक्ते महाव्रतस्यासात्रत्वप्रसङ्गः स्यात्, तन्निराकरणार्थमन्यत्र[3] महाव्रतादित्युक्तम् ' अतो महाव्रतमपि सात्रमेवेत्युक्तं भवति ।

**तदेषाऽभियज्ञगाथा गीयते। अतिरात्रश्चतुर्विंशं षळहावभिजित्स्वराः । विषुवान्विश्वजिच्चैव च्छन्दोमा दशमव्रतम् ।**

---

१ च. °र्वस्यात्रा° । २ च. °मपेक्ष° । ३ ङ. झ. °कर्षणा° ।

**प्रायणीयश्चतुर्विंशं पृष्ठ्योऽभिप्लव एव च। अभिजित्स्वरसामानो विषुवान्विश्वजित्तथा। छन्दोमा दशमं चाह उत्तमं तु महाव्रतम्। अहीनैकाहः सत्राणां प्रकृतिः समुदाह्रियते। यद्यन्यधीयते पूर्वधीयते तं प्रातिग्रामन्त्यहानि पञ्चविंशतिर्यैर्वै संवत्सरो मितः। एतेषामेव प्रभवस्त्रीणि षष्टिशतानि यदिति।**

पञ्चविंशतिरिति ज्योतिष्टोमेन सहितस्य सत्रेष्वपि प्रवृत्तिरस्तीति सात्रिकैः सह गृह्यते। संवत्सर इति गवामयनमुच्यते। कथं पञ्चविंशत्या षष्ट्यधिकानि त्रीणि शतानि पूर्यन्त इति तदुपपादयति—एतेषामेव प्रभव इति। अभ्यासादिना संख्यापूरणार्थं प्रभव इत्युच्यते।

**तद्ये केचन च्छान्दोग्ये वाऽऽध्वर्यवे वा हौत्रामर्शाः समाम्नाता न तान्कुर्यादकृत्स्नत्वाद्धौत्रस्य।**

छन्दोगानां शास्त्रं छान्दोग्यम्। तथाऽऽध्वर्यवमेवेत्युक्तम् 'एतावत्सात्रं होतृकर्म' इति। तत्राऽऽध्वर्यवे छान्दोग्ये वा वेदे ये केचन हौत्रामर्शाः पदार्था दृष्टाः कर्तव्यतया ते न कर्तव्याः। हौत्रामर्शा इति। हौत्राभासा इत्यर्थः। कुतः। अकृत्स्नत्वाद्धौत्रस्य। तौ हि वेदौ हौत्रस्य न विधायकौ, अन्यपरत्वात्तयोः। अतस्तत्र ये समाम्नाताः पदार्थास्तेऽनर्थका वा भवन्तु, तत्सापेक्षेणापि वा प्रयोगशास्त्रान्तरेण सार्थका वा भवन्तु। सर्वथा तावदाश्वलायनसूत्रप्रयोगे ते न कर्तव्या एवेति निश्चिनुमः। अकृत्स्नत्वादिति हेतुवचनाद्यत्र कृत्स्नं हौत्रमाध्वर्यवेषु विहितं दर्शपूर्णमासनिरूढकौकिल्यादिषु तत्र तत्कर्तव्यमेवेति सिद्धम्।

**छन्दोगप्रत्ययं स्तोम स्तोत्रियः पृष्ठं संस्थेति।**

तद्ये केचनेत्यस्यापवादः सूत्रद्वयम्। स्तोमादयश्छन्दोगप्रमाणा इत्यर्थः।

**अध्वर्युप्रत्ययं तु व्याख्यानं कामकालदेशदक्षिणानां दीक्षोपसत्प्रसवसंस्थोत्थानानामेतावत्त्वं हविषामुच्चैरुपांशुतायां हविषां चाऽऽनुपूर्व्यम्।**

एतत्सर्वमध्वर्युप्रत्ययमध्वर्य्वधीनमित्यर्थः। व्याख्यानं परिज्ञानम्। काम्यत इति कामः फलम्। कालः 'शरदि वाजपेयेन' इत्यादिः। देशः प्राचीनप्रवणादिः। दक्षिणा द्वादशशतादि। दीक्षैका, तिस्रो वा 'तिस्र उपसदः' इत्युपसदश्च। तत्रैव प्रसवः सुत्या। संस्था समाप्तिः। उत्थानं प्लाक्षं प्रस्रवणं प्राप्योत्थानमित्यादि। हविषामेतावत्त्वमियत्ता।

---

१ ङ. झ. °वाऽतिति°। २ ग. झ. ङ. °नं प्लक्षप्र°।

हविषामेवोच्चैस्त्वमुपांशुत्वं च । हविषां चाऽऽनुपूर्व्यं देवतानां क्रमः, हविःशब्देन देवतोच्यते । एतत्सर्वमध्वर्युप्रत्ययम् । छन्दोगप्रत्ययानामध्वर्युप्रत्ययानां सतामस्मच्छास्त्रे यदभिधानं तस्येदं प्रयोजनं यद्यस्मच्छास्त्रे विशेषविधिस्तेषां सामान्यविधिस्तदाऽस्मदीय एव विधिः संग्राह्य इति प्रयोजनम् ।

**एतेभ्य एवाहोभ्योऽहीनैकाहान्पश्चात्तरान्व्याख्यास्यामः ॥ १३ ॥**

यान्येतानि पञ्चविंशतिरहान्युपदिष्टान्येतेभ्य एवाहोभ्योऽहीनैकाहान्पश्चात्तरान्व्याख्यास्यामः । पश्चात्तरानिति तरप्प्रत्ययो ब्रह्मचारिधर्मव्यवहितत्वात् । ‘ सिद्धैरहोभिरह्नामतिदेशः ’ इत्यस्मिन्सूत्रेऽयमेवार्थो वक्ष्यते, तत्किमर्थमयमेवार्थ उच्यते । तस्येदं प्रयोजनम् । ‘ एतद्विदं ब्रह्मचारिणम् । ’ इत्यत्रैतच्छब्देनाहीनैकाहानामपि ग्रहणार्थम् । इतरथा तेषामसंविधानादेतच्छब्देन ते न गृह्येरन्नतस्तदर्थमत्राप्युक्तम् ॥ १३ ॥

**एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्यानुक्रोशिने प्रब्रूयादुत्तरमहः ।**

यान्येतानि महाव्रतवर्ज्यान्यनुक्रान्तान्यहानि तानि मन्त्रब्राह्मणसूत्राध्ययनेन तदर्थज्ञानेन च विदित्वा तेषामह्नामेकाहाहीनसत्रभन्नेन यो वेद स एवैतद्विद् उच्यते । ब्रह्मचारिग्रहणं यो ब्रह्मचारी विद्यां समाप्य स्नानं कर्तुं न शक्नोति, द्वादश वर्षाण्यध्ययनं कुर्वन्नपि न किंचिद्ग्रहीतुं शक्नोति, तमपि ब्रह्मचारिणमेतद्विदमप्येतानि व्रतानि ग्राहयित्वैतान्वेदभागानध्याप्याऽऽश्रमं स्वसामर्थ्यानुगुणं प्रवेष्टुं शिक्षेतेत्येवमर्थम् । अनिराकृतिनमनुत्सृष्टाध्ययनम् । एवंविधं ब्रह्मचारिणं व्रतं ग्राहयित्वा संवत्सरावमं कालं चारयित्वा ततस्तस्मै ब्रह्मचारिणेऽनुक्रोशिन आत्मगुणयुक्तायोत्तरमहर्महाव्रतं प्रब्रूयात्प्रथमं ब्रूयादित्यर्थः । अहरधिकारे पुनरहर्ग्रहणस्येदं प्रयोजनं तदहर्विधायकं वेदभागमर्थावगमनपर्यन्तमनुष्ठानयोग्यं ग्राहयितव्यमिति ।

**महानाम्नीरग्रे ।**

महाव्रतानुवचनात्पूर्वं महानाम्नीभ्यो व्रतादेशनादिश्रवणान्तं कृत्वाऽनन्तरे संवत्सरे महाव्रतं ग्राहयित्वा ततोऽनन्तरे संवत्सर उपनिषद इति क्रमः ।

**उदगयने पूर्वपक्षे श्रोष्यन्बहिर्ग्रामात्स्थालीपाकं तिलमिश्रं श्रपयित्वाऽऽचार्याय वेदयीत ।**

आचार्येणानुक्तं श्रोष्यन्ब्रह्मचार्युदगयन आपूर्यमाणपक्षे ग्रामाद्बहिर्निष्क्रम्य शुचौ देशे

१ ग. °र्वमाध्वर्यवम् । २ च. संनिधा° । ३ च. °वर्जान्य° । ४ च. °द्विदित्युच्य° । ५ च. शिक्षयीते° । ६ क. ङ. °णं तं ग्रा° । झ. °णं तद्ग्राह° । ७ व. °चारेणा° ।

होष्यन्धर्मेण पार्वणवत्तिलमिश्रं स्थालीपाकं नवभ्यो देवताभ्यस्तूष्णीं निर्वापप्रोक्षणे कृत्वा श्रपयेत्, तत आचार्याय वेदयीत विज्ञापयीतेत्यर्थः ।

विदिते व्रतसंशयान्पृष्ट्वा लघुमात्राञ्चेदापत्कारिताः स्युरन्वारब्धे जुहुयादग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । तस्मै जुहोमि हविषा घृतेन मा देवानां मोमुहद्भागधेयं मो अस्माकं मोमुहद्भागधेयं स्वाहा या तिरश्ची निपद्यतेऽहं विधरणी, इति । तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा । यस्मै त्वा कामकामाय वयं सम्राड्यजामहे । तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा । अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ स्वाहा । असूयन्त्यै चानुमत्यै च स्वाहा । प्रदात्रे स्वाहा । व्याहृतिभिश्च पृथक् ।

विदिते शृतः स्थालीपाक इत्यवगते व्रतसंशयान्व्रतापराधान्पृच्छेत् । ते यदि पृष्टा लघुमात्रात्कारणात्प्रवृत्तिनिमित्तादापत्कारिताश्चेदग्नावग्निरित्यादिभिर्जुहुयान्न प्रायश्चित्तान्तरं कर्तव्यम्[1] [* लघुमात्राश्चेदितिपाठे लघुमात्राश्चेद्भवन्ति व्रतापराधा इत्यर्थः । अथ चेत्कामकृतां महान्तश्च व्रतापराधा] गुरुप्रमाणकं प्रवृत्तिकारणं बुद्धिपूर्वं वा करोत्यपराधांस्तत्तदनुरूपं प्रायश्चित्तं कारयित्वा पुनर्व्रतमादिश्य ततः संवत्सरे पूर्ण एवं श्रावयेत् । विदित इति वचनं शृतः स्थालीपाक इति विदित एव व्रतसंशयप्रश्नप्रवृत्त्यर्थम् । अन्वारब्धे ब्रह्मचारिण्याचार्यो जुहुयादग्नावग्निरित्येवमादिभिरत्रैव पठितैर्मन्त्रैर्व्याहृतिभिश्च । पृथगिति समस्तव्याहृतिनिवृत्त्यर्थम् ।

हुत्वाऽऽहैतं स्थालीपाकं सर्वमशानेति ।

हुत्वेतिवचनमेतैर्मन्त्रैर्हुत्वा स्विष्टकृतेऽवदाय तमहुत्वैव निधाय ब्रूयात्संप्रेषितव्यमित्येवमर्थम् । एतं स्थालीपाकं सर्वमशानेत्यत्र संप्रैषः[2] । ततश्चैरुशेषं[3] ब्रह्मचारी सर्वमश्नीयात् ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तकस्थः ।

---

१ क. ग. ङ. च. झ. °म् अथचेद्गुरु° । २ घ. संप्रेषमि° ३ ग. °श्च हुतशे° ।

**भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत्त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छकेयं तेन शकेयं तेन राध्यासमिति ।**

मुक्तवन्तामिति वचनं न केवलमशने संप्रैष एवाशनमपि कर्तव्यमेवेत्येवमर्थम् । उपस्थापयेदित्युपतिष्ठस्वाऽऽदित्यमिति ब्रूयादित्येवमर्थम् । ततो ब्रह्मचार्यद्भिः पूर्णाञ्ज[1]लिनाऽऽदित्यं मन्त्रेणोपातिष्ठेत ।

**समाप्य संमील्य वाचं यच्छेत्कालमभिसमीक्षमाणो यदा समयिष्यादाचार्येण ।**

समाप्यवचनमुपस्थानमन्त्रं समाप्यानन्तरं संमील्य वाचं यच्छेन्न कालविक्षेपं कुर्यादित्येवमर्थम् । वाग्यमनं कुर्वन्यस्मिन्काल आचार्येण* सह समवायो भवेत्तं कालं मनसा ध्यायन्वाग्यमनं कुर्यात् ।

अयं स काल इत्याह—

**एकरात्रमध्यायो[2]पपादनात् ।**

एकरात्रं कालमेवाऽऽसित्वाऽनन्तरे दिवस आचार्येण सह समवायं गमिष्यामीति ध्यायेत् । कुतः । अध्यायो[3]पपादनात् । अध्यायः स्वाध्यायो महानाम्नीमन्त्र इत्यर्थः । तस्यो[4]पपादनात् । उप[5]पादनमन्यसुपेत्य तस्याध्ययनस्य वादनं शिष्यमुपादायाध्यापनमित्यर्थः । एतदुक्तं भवति—य एकरात्राध्ययनेन महानाम्नीरध्येतुं शक्नोति स एकरात्रं ध्यायन्वाग्यमनं कुर्यादिति ।

**त्रिरात्रं वा नित्याध्यायेन ।**

त्रिरात्रं चैवमासीत यो नित्याध्यायेनाध्येतुं शक्नो[6]ति स त्रिरात्रमेवाऽऽसित्वा चतुर्थेऽहन्याचार्येण समवायं गच्छेदित्यर्थः ।

**तमेव कालमभिसमीक्षमाण आचार्योऽहतेन वाससा त्रिःप्रदक्षिणं शिरः समुखं वेष्टयित्वाऽऽहैतं कालमेवंभूतोऽस्वपन्भवेति ।**

तमेव कालं प्रतिपद्यमान आचार्यो यः कालो ब्रह्मचारिणा संकल्पित इत्यर्थः । अह-

---

* ग. सह संवासः ।

---

१ घ. लिर्मन्त्रेणाऽऽदत्यमुप° । २ च. °पवाद° । ३ घ. ङ. च. झ. °पवाद° । ४ घ. ङ. च. झ. °पवाद° । ५ घ. ङ. च. झ. पवाद° । ६ ग. घ. ङ. च. झ. °ति । अध्ययनमध्यायः, नित्यमध्यायः, नित्यं संततमित्यर्थः । एतदुक्तं भवति—यो बहुभिरेवाहोभिरध्येतुं शक्नोति स ।

तेनानिवसितेन धौतेन वाससा ब्रह्मचारिणः शिरो मुखेन सहितं त्रिःप्रदक्षिणं वेष्टयित्वा यथा न तद्वासः पतेत्तथोपायं कृत्वा ब्रूयादाचार्यः । एतं कालमिति संकल्पितप्रदर्शनार्थ-त्वादेकरात्रं कालमेवंभूतोऽस्वपन्भवेति त्रिरात्रं कालमिति वा ।

**तं कालमस्वपन्नासीत ।**

यः संकल्पितः कालस्तस्मिन्काले सर्वदाऽस्वपन्भवेद्ब्रह्मचारी ततो गुरुः स्विष्टकृदादि-होमशेषं समापयेत् ।

**अनुवक्ष्यमाणेऽपराजितायां दिश्यग्निं प्रति-**
**ष्ठाप्यास्मिन्नुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः**
**कृत्वा वत्सतरीं प्रत्यगुदगसंश्रवणे बद्ध्वा ।**

आचार्याय वेदर्थतिति शेषः । द्वितीये चतुर्थे वा दिवसे प्रातः आचार्योऽनुवक्ष्यति । तस्मिन्ननुवक्ष्यमाणे सत्यपराजितायां दिशि बहिर्ग्रामाच्छुचौ देश उल्लेखनादि कृत्वाऽग्निं प्रतिष्ठाप्य तस्योत्तरतोऽस्यादीन्निधाय तस्यैव च प्रत्यगुदग्यो देशस्तस्मिन्वत्सतरीं बध्नाति । यथाऽग्निसमीप उच्यमानः शब्दो वत्सतर्या न सम्यक्श्रूयते तथा बध्नीयात् । एतावत्कर्म ब्रह्मचारिणः स्वभूतः कश्चित्करोति । एतावति कृत आचार्याय वेदयीत ।

**पश्चादग्नेराचार्यस्तृणेषूपविशेदपराजितां दिशमभिसमीक्षमाणः ।**

एवं प्रागग्रेषु तृणेषूपविशेत् ।

**ब्रह्मचारी लेपान्परिमृज्य प्रदक्षिणमग्निमा-**
**चार्यं च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशे-**
**त्तृणेष्वेव प्रत्यग्दक्षिणाभिसमीक्षमाणः ।**

मुखगतांल्लेपाञ्शरीरगतांश्च शोधयित्वाऽग्निमाचार्यं च प्रदक्षिणं कृत्वाऽऽचार्यं विधि-वदुपसंगृह्य पश्चादाचार्यस्योपविशेत्तृणेष्वेव प्रागग्रेषु प्रत्यग्दक्षिणां दिशमभिसमीक्षमाणः ।

**पृष्ठेन पृष्ठं संधाय ब्रूयान्मनसा महानाम्नीर्भो ३ अनुब्रूहीति ।**

पृष्ठं नाम शरीरस्य बाहिः प्रदेशः । ब्रह्मचारी स्वपृष्ठदेशेनाऽऽचार्यस्य पृष्ठदेशं संनि-धायाऽऽसित्वा मनसैवं ब्रूयान्महानाम्नीर्भो अनुब्रूहीति ।

**पुनः पृष्ट्वाऽनुक्रोशिने संमील्यैवानुब्रूयात्सपुरीषपदास्त्रिः ।**

अस्मिन्नपि काले व्रतसंशयान्पृष्ट्वा पूर्ववच्चेद्ब्रूयात्स्वयमपि संमील्यैव ताः पुनर्नवर्चः, नव च पुरीषपदानि ताः सर्वास्त्रिरनुब्रूयात् । [ * ' विदा मघवन् ' इत्याद्या नवर्चः । ' एवाह्येवैवाहि ' इत्यादीनि नव पुरीषपदानि च त्रिर्ब्रूयात् । ]

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थश्च पुस्तकस्थ एव ।

---

१ क. ग. ङ. च. झ. तन्न स्वि° । २ च. °वसाति

**अनूच्योन्मुच्योष्णीषमादित्यमीक्षयेन्मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे ।**

इतिकाराध्याहारेण सूत्रच्छेदः । सर्वत्र णिच्प्रत्ययप्रयोगे 'आदित्यमुपतिष्ठस्व' 'आदित्यमीक्षस्व' 'पिण्डमशान' इत्येवमादिसंप्रैषं ब्रूयात् ।

**मित्रस्य वश्चक्षुषाऽनुवीक्ष इति दिशः संभाराः । पुनरादित्यं मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं चक्षुर्हेतुर्ऋच्छत्विति । भूमिमुपस्पृशेदग्न इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वति । मा ते व्योम संदृशि । भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः स्तुषे जनं सुव्रतं नव्यसीभिः कया नश्चित्र आभुवदिति तिस्रः स्योना पृथिवि भवेति । समाप्य समानं संभारवर्जम् ।**

यदिदं महानाम्न्यध्ययनमुक्तं तत्समाप्योत्तरयोरपि महाव्रतोपानिषदाख्ययोर्व्रतमनुयुज्य[1] श्रवणान्तं महानाम्नीव्रतेन समानरूपं कर्तव्यम् । अयमेव तयोर्विशेषः पूर्वस्मात् । संभारवर्जमिति[2] । संभारो नाम 'श्रोष्यन्बहिर्ग्रामात्' इत्यारभ्य 'पुनरादित्यं मित्रस्य त्वा चक्षुषा' इत्येवमन्तं वर्जयित्वेत्यर्थः । एतदुक्तं भवति—महाव्रतोपानिषदाख्ययोर्व्रतमनुयुज्य[3] श्रवणान्तं संवत्सरादूर्ध्वमुदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वा श्रवणमेव कर्तव्यं नान्यद्धोमादीनि ।

**एष द्वयोः स्वाध्यायधर्मः ।**

एष एव महाव्रतोपानिषदोर्वेदभागयोरध्ययनविधिः । यो महानाम्नीनामध्ययनविधिरुक्तो व्रतमनुयुज्य संवत्सरावमं[4] चारयित्वोदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वाऽऽचार्यसकाशाच्छ्रुत्वाऽनुप्रवचनीयं कृत्वा ततोऽध्ययनं [ *कर्तव्यमिति । एतदनयोरप्यध्ययने ] संपादनीयमित्यर्थः ।

**आचार्यवदेकः ।**

अयमपि विशेषो महाव्रतोपनिषदोरध्ययने भवति । यद्येकोऽधीयीत[5] । यथाऽऽचार्योऽपराजितां दिशमभिसमीक्षमाणो ब्रूयादेवमेकश्चेच्छिष्यस्तामेव दिशमभिमुखोऽधीयीत । यदि

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थो घ. च. पुस्तकस्थः ।

१ च. °ज्य श्राव° । २ क. ग. घ. ङ. झ. °र्जनमि° । ३ °ज्य श्राव° । ४ घ. ङ. च. झ. °यं च कृ° । ५ क. °त तथाऽऽ ।

द्वौ बहवो वा तदा नायं नियम आदरणीयः । अत एव ज्ञायते—एको द्वौ बहवो वाऽधीयीरन्निति । अध्ययन एवायं नियमः श्रावणे त्वेक एव । व्रतादेशनादेरनुप्रवचनीयान्तसंस्कारस्य तन्त्रासिद्धौ प्रमाणाभावात् ।

**फाल्गुनाद्याश्रवणाया अनधीतपूर्वाणामध्यायः ।**

एष[1] महानाम्न्यादीनामध्ययनकाल उच्यते । श्रवणमात्रमेवं कृत्वा पूर्वमनधीतवन्तो ये तेषामयं कालः । फाल्गुनमासमारभ्य श्रावण्याः पौर्णमास्या यः कालः स तेषामध्ययनकालः ।

**तैष्याद्यधीतपूर्वाणामधीतपूर्वाणाम् ॥ १४ ॥**

**इत्याश्वलायनश्रौतसूत्रोत्तरषट्के द्वितीयोऽध्यायः ॥ २ ॥**

येऽधीतपूर्वास्तेऽस्मिन्कालेऽधीयीरन् । श्रावणी पौर्णमासी परावधिस्तैषी पौर्णमासी पूर्वावधिर्यस्य कालस्य स काल इति । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ १४ ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायामष्टमोऽध्यायः ।

---

अथ उ० तृतीयोऽध्यायः ।

---

**उक्तप्रकृतयोऽहीनैकाहाः ।**

उक्तो ज्योतिष्टोम एकाहाहीनसत्राणां प्रकृतिभूतः । उक्तानि पञ्चविंशतिरहानि सात्त्रिकाणि । एतेभ्य एव सात्त्रिकेभ्योऽहोभ्योऽहीनैकाहा व्याख्यायन्त इत्युक्तम् । इदानीं तानेकाहाहीनान्वक्तुकामेनाऽऽचार्येणोक्तप्रकृतयोऽहीनैकाहा इत्युक्तम् । तस्यायमर्थः—उक्ता प्रकृतिर्येषां त इम उक्तप्रकृतयोऽहीनैकाहाः । प्रकृतिः प्रकारो न रूपान्तरमित्यनर्थान्तरम् । ज्योतिष्टोमो हि सर्वेषामेकाहाहीनसत्राणां प्रकृतिरिति प्रसिद्धम् । तदतिदिष्टानि च सात्त्रिकाणि चतुर्विंशतिरहान्यहीनैकाहानां प्रकृतित्वेनेष्यन्ते । तदेतदुभयमस्मिन्सूत्रे प्रकृतिशब्देन गृह्यते । एतदुक्तं भवति—इत उत्तरं द्वयोरध्याययोरेकाहाहीना वक्ष्यन्ते । ते च ज्योतिष्टोमसरूपाः सात्त्रिकाहःसरूपाश्चेति । एतत्सूत्रप्रयोजनं वक्ष्यमाणानां संज्ञाकरणं तेषां चोभयप्रकृतित्वकथनं चेति । अहीनशब्दस्य पूर्वनिपातः पूर्वेण पदेन संधौ क्रियमाणे प्रश्लेषलाभादक्षरलाघवार्थः ।

**सिद्धैरहोभिरह्नामतिदेशः ।**

एकाहाहीना वक्ष्यन्त इत्युक्तं ते चोभयप्रकृतय इत्युक्तम् । तत्रानेन सूत्रेण सात्त्रिकप्रकृतीनां लक्षणमुच्यते । एकाहाहीनेषु येषामह्नां प्राक्सिद्धैरहोभिरतिदेशोऽस्ति तानि सात्त्रिकाहः-

---

१ च. एषां म° ।

प्रकृतीनीति । अहोभिरह्नामतिदेश इत्येवमुक्तेऽपि प्राक्सिद्धैरेवाहोभिः सात्रिकैरतिदेश इति गम्यत एव किमर्थं सिद्धैरित्युच्यते । तस्येदं प्रयोजनम् । यत्र वक्ष्यमाणं कर्म प्राक्सिद्धाहर्नामनामितया वक्ष्यतेऽनेनेदमित्यतिदेशवचनं नास्ति तत्रापि तन्नामनामितयैव तत्प्रकृतित्वज्ञापनार्थम् । तेनैवं सूत्रार्थः—अत्र वक्ष्यमाणानामह्नां विधानावस्थायामेव प्राक्सिद्धैरहोभिर्ग्रहणं क्रियते, तन्नामनामितया सिध्यत्युत्तरकाले वा । यत्रातिदेशवचनमस्त्यनेनेदमिति तत्रोभयत्र तान्येव प्रकृतिरिति सूत्रार्थः । अह्नामिति वचनं सुत्यानामेवायमतिदेशो न दीक्षोपसदामित्येवमर्थम् । तेनैषु दीक्षोपसदः स्वकीया एव नियमेन भवन्तीति सिद्धम् ।

**अनतिदेशे त्वेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणस्तेन शस्यमेकाहानाम् ।**

तत्रैकाहो ज्योतिष्टोमो द्वादशशतदक्षिण इत्येतावता प्रागुक्तस्य चतुःसंस्थस्य सोमयागस्यानुवादं कुर्वन्नप्राप्तानामनाम्नामिह संबन्धं दक्षिणाविशेषसंबन्धं च विदधाति सूत्रस्योत्तरेण भागेन । एकाहानां मध्ये ये सात्रिकैरहोभिर्नातिदिश्यन्ते तेष्वेकाहेष्वेवंविशिष्टेन ज्योतिष्टोमेनातिदेशो विधीयते । अनतिदेश इति वचनमेकाहेषु येषु यावन्तोऽतिदेशाविषयस्तेष्वहःस्वेवास्य विधेः प्राप्तिप्रदर्शनार्थम् । तेनानिरुक्तादिष्वपि ज्योतिष्टोमप्राप्तेरपवाद एव चतुर्विंशादीनामवयवातिदेश इति सिद्धम् । तुशब्दो विशेषविध्यर्थः । एकाहेष्वयं विशेषो भवति ज्योतिष्टोमप्राप्त्यपवादः सात्रिकातिदेश इति । शस्यग्रहणं वचनान्तरानपो* दितधर्मप्रदर्शनार्थम् । तेन दीक्षोपसद ऐकाहिका एव भवन्ति न ज्यौतिष्टोमिका इति सिद्धम् ।

**गोआयुषी विपरीते द्व्यहानाम् ।**

अनतिदेश इति वर्तते । येषां द्व्यहानामतिदेशो नास्ति तेषां गोआयुषी विपरीते व्यत्यस्ते प्रकृतिर्वेदितव्ये । अनतिदेशवचनमहीनद्व्यहनिवृत्त्यर्थम् । तत्र तत्राह्नां संख्याः संख्याताः । 'षडहान्ता अभिप्लवात्' इत्यतिदेशवचनमस्ति । तेनैकाहद्व्यहा वरुणप्रघासस्थाने द्व्यहः, द्वयोर्मासयोर्व्युष्टिद्व्यह इत्युदाहरणम् । बहुवचनमसमाम्नातद्व्यहप्रदर्शनार्थम् ।

**त्र्यहाणां पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहो वा ।**

पूर्व इति शेषः । अत्राप्यनतिदेश इति वर्तते । अनतिदेश इतिवचनस्य बहुवचनस्य च पूर्ववदेव प्रयोजनम् ।

---

* क. निरस्तधर्म ।

---

१ क. ग. °ध्ये यैः सा° । २ क. ग. घ. ङ. झ. न ज्योति° । ३ च. °कृतेर्वे° ।

एवंप्रायाश्च दक्षिणा अर्वागतिरात्रेभ्यः ।

एवंप्राया इति द्वादशशतप्राया इति गम्यते प्रकृतत्वात् । अस्मिन्नेव प्रकरणेऽतिरात्रवचनेन ज्योतिरादयोऽतिरात्रा गृह्यन्ते बहुवचननिर्देशात् । तेनायमर्थः—ज्योतिरादिभ्योऽतिरात्रेभ्योऽर्वाग्य एकाहा अहरन्तरेणातिदिष्टा अनतिदिष्टाश्च ते सर्वे द्वादशशतदक्षिणा वेदितव्याः । प्रायवचनम् 'अन्वहं पञ्चाशच्छो दक्षिणाः सोमचमसो दक्षिणा' इत्येवमाद्यादिभिर्विशेषविहिताभिरसमुच्चयार्थम् ।

साहस्रास्त्वतिरात्राः ।

तुशब्दोऽर्वागपि ज्योतिरादिभ्यो योऽतिरात्रस्तस्यापि सहस्रदक्षिणत्वप्रापणार्थः ।

द्व्यहाह्रयहाश्च ।

अर्वागतिरात्रेभ्य इत्यनेनानातिदेश इत्यस्य निवृत्तत्वादस्मिन्सूत्रेऽहीनैकाहद्व्यहाह्र्यहाश्च सहस्रदक्षिणा वेदितव्याः । अत एवोत्तरसूत्रेऽहीनग्रहणं कृतम् ।

ये भूयांसस्त्र्यहादहीनाः सहस्रं तेषां
त्र्यहे प्रसंख्यायान्वहं ततः सहस्राणि ।

त्र्यहाद्भूयांसो येऽहीनाश्चतुरहादयस्तेषु दक्षिणापरिमाणज्ञानमनेनोपायेन क्रियते । आदितस्त्र्यहे सहस्रमिति कृत्वा ततः परतो यावन्त्यहानि तेषु प्रत्यहं[2] सहस्रमिति कृत्वा चतुरहे सहस्रद्वयं पञ्चाहे सहस्रत्रितयं षडहे सहस्रचतुष्टयमित्येवं परिमाणक्लृप्तिः ।

समावत्त्वेव दक्षिणा नयेयुः ।

समावदिति । सममित्यर्थः । दक्षिणापरिमाणज्ञानोपाय उक्तस्तासां नयनेऽयं विशेषः । यस्मिन्नहीने यावत्यो दक्षिणाः प्राप्तास्ताः समं विभज्यैकैकं विभागमहन्यहनि दद्यात् ।

अतिरिक्तास्तूत्तमेऽधिकाः ।

एवं[3] संविभागे क्रियमाणे या अतिरिच्यन्ते ता उत्तमेऽहनि दातव्याः । अधिका इतिवचनात्स्वभागलब्धाभिः सह दातव्या इति गम्यते ।

अतिदिष्टानां स्तोमपृष्ठसंस्थान्यत्वादनन्यभावः ।

यान्यहानि स्तोमपृष्ठसंस्थाभिः संबद्धान्येवोत्पत्तिभूमावुत्पन्नानि तानि यदि कदाचिदतिदिष्टानि तेषु चातिदिष्टेषु च्छन्दोगवशादध्वर्युवशाद्वा स्तोमादीनामन्यत्वं यदि स्यात्तथाऽप्यस्माकं तान्येवाहानीति कृत्वा शस्यकल्पनं भवतीत्यर्थः । वेदे[4] ह्येवोत्पत्तिभूमावुत्पन्नानीत्यर्थः ।

---

१ ग. °द्याभि° । २ ग. घ. ङ. झ. °हं साह° । ३ ग. च. °वं समवि° । ४ च. °वेदादेवो° ।

## नित्या नैमित्तिका विकाराः ।

स्तोमादीनामन्यत्वेऽप्यह्नामन्यत्वं नास्तीत्युक्तं तथाऽपि स्तोमादिनिमित्ता ये नैमित्तिका विकारास्ते नित्यास्तेष्वप्यहःसु कर्तव्या इत्यर्थः ।

## माध्यंदिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्यम् ।

माध्यंदिने सवने होतुरयं विशेषो भवति । निष्केवल्यस्तो*मकारितमेव शस्यं भवति निष्केवल्यमरुत्वतीययोः । तच्च पूर्वोक्तम् । 'यावत्यो यावत्यः कुशानां नवतो दशतो वा' इत्यनेन न्यायेन सूक्तावापः सूक्तोद्धारो वा कर्तव्य इत्यर्थः । निष्केवल्यमरुत्वतीययोर्मध्यंदिनशब्देनैव ग्रहणे सिद्धेऽपि सवनवाचिनो माध्यंदिनशब्दस्य ग्रहणं सोमातिरेकनिमित्तेऽपि शस्त्रे निष्केवल्यस्तोमकारितशस्यस्य प्रापणार्थम् । तत्र त्वृग्भिरेव निष्केवल्यस्तोमातिशंसनं स्वस्तोमातिशंसनं च कर्तव्यं न सूक्तेन । यदि स्वस्तोमाधिको निष्केवल्यस्तोमस्तदा तस्मादप्यतिशंसनं कर्तव्यम् । यदा हीनस्तदा स्वस्मादतिशंसनमिति निष्केवल्यस्तोमकारितमिति पाठः कर्तव्यो न निष्केवल्ये स्तोमकारितमिति ।

## तत्रोपजनस्तार्क्ष्यवर्जमग्रे सूक्तानाम् ।

निष्केवल्यमरुत्वतीययोर्निष्केवल्यस्तोमकारितं शस्यमित्युक्तं तत्र स्तोमविवृद्धावुपजनस्थानमुच्यते । निविद्धानीयानां सूक्तानां पुरस्तादावापो भवतीत्यर्थः । तेषामपि निविद्धानीयत्वं भवति । निष्केवल्ये तु तार्क्ष्यं वर्जयित्वा निविद्धानीयानामेव सूक्तानां पुरस्ताद्भवति । सूक्तानां पुरस्ताद्विधाने क्रियमाणे तार्क्ष्यवर्जमितिवचनात्तार्क्ष्यस्य पादग्रहणेऽपि सूक्तत्वं गम्यत एव । सूक्तानामिति बहुवचनमविवक्षितम् । यस्मिन्नहनि यत्सूक्तमवगतं तस्मात्पुरस्तादित्यर्थः ।

## हानौ तत एवोद्धारः ।

स्तोमहानावपि निष्केवल्यमरुत्वतीययोरनेकसूक्तत्वे यावत्यो यावत्य इत्यनेन न्यायेन सूक्तानां पूर्वं पूर्वमुद्धरेत् । असत्यपि हानावितिवचनेऽस्यार्थस्य सिद्धौ सत्यां हानावितिवचनं निष्केवल्यमरुत्वतीयाभ्यामन्यत्रापि स्तोमहानौ सत्यामवगतस्यैव सूक्तस्य पुरस्तादुद्धारो भवतीत्येवमर्थम् ।

---

* क.—स्तोमप्रयुक्तम् ।

---

१ च. °वल्ये स्तो° । २ च. तत्र । ३ ग. घ. ङ. झ. °वल्ये स्तो° । च. °वल्यस्य स्तौ° । ४ ग. च. स्तोकारितशं° । ५ च. °वल्ये स्तो° । ६ च. °वल्यस्तो° । ७ च. °स्तादेवाऽऽवा° ।

**येऽर्वाक्त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेषु ।**

ये त्रिवृतोऽर्वागेकस्तोमादयोऽष्टपर्यन्ताः स्तोमास्तेषु क्रियमाणेषु सर्वेषु सवनेषु होतुर्होत्रकाणां च सूक्तस्थानेषु सर्वेषु तृचा एव कर्तव्याः । तृचा एवेत्यवधारणमस्य विधेः सर्वार्थत्वाय ।

**यथा नित्या निविदोऽभ्युदियात् ॥ १ ॥**

'हानौ तत एवोद्धारः' इत्यनेन सूत्रेण सूक्तानां पुरस्तादुद्धारो विहितः । तृचा एव सूक्तस्थानेष्वित्यप्युक्तम् । तेनान्त्यास्तृचा एव गृह्यन्त इत्येवं प्राप्तम् । एवं वचनसामर्थ्यादन्त्ये तृचे गृह्यमाणे यथा नित्या निविदो भवेयुस्तथा तमेवान्त्यं तृचमभ्युदियादभ्युपगमयेदित्यर्थः । नित्यशब्देनात्र स्वरूपनित्यत्वं स्थाननित्यत्वं चोच्यते । स्थानं चात्र 'एका तृचेऽर्धा युग्मासु' इत्यादि गृह्यते । एतदुक्तं भवति—हीनस्तोमेषु सूक्तस्यान्त्यतृचात्पूर्वास्वृक्षु ध्रियमाणासु तत्स्थानान्निविदमादायान्त्ये तृचे सवनानुसारेणैका तृचेऽर्धा युग्मास्वित्यनेन विधिना तां निविदं दध्यादिति वचनमन्तरेण निविदां पूर्वोक्तस्थानत्वे सिद्धे यन्नित्यशब्देन पूर्वोक्तस्थानत्वं विदधाति तज्ज्ञापयति वचनादृते स्वस्थानं निविदो न जहतीति । तेन सूक्तमुखीयाद्यर्थे ऋचां वृद्धिहेतवो निविदो न चालयन्ति स्वस्मात्स्थानादिति सिद्धम् ॥ १ ॥

**उक्तानि चातुर्मास्यानि ।**

उक्तानुकीर्तनं वक्ष्यमाणेषु सोमेषूपक्रमकालप्रभृतिचातुर्मास्यशरीरस्य सर्वस्य पर्वसंबन्धस्यापर्वसंबन्धस्य च प्रापणार्थं संज्ञार्थं च ।

**सोमान्वक्ष्यामः पर्वणां स्थाने ।**

संज्ञाप्रभृतिचातुर्मास्यशरीरे सर्वस्मिन्प्राप्ते विशेष उच्यते । पर्वणां स्थाने सोमाः कर्तव्याः ।

**अयूपकानेके ।**

ये पर्वस्थाने विहिताः सोमास्तानयूपकान्यूपरहितानेके शाखिन इच्छन्ति । अपर्वसंबद्धोऽयूपवानेव सोमः कर्तव्यः । यथाऽग्निष्टोम ऐन्द्राग्नस्थान इति ।

**परिधौ पशुं नियुञ्जन्ति ।**

अयूपकेषु सोमेषु परिधौ पशुनियोगः कर्तव्यः । तत्र दक्षिणे परिधावुत्तरे वा कर्तव्यो न मध्यमे, उपचारविरोधात् । तत्र यूपधर्मा न कर्तव्याः । एवं ह्यत्र वचनं परिधौ पशुं

---

१ ग. ङ. झ. प्राप्त ए° । २ च. °यस्तृचा वृ° । ३ घ. °प्रकृति° । ४ ङ. झ. धर्माः कर्त° ।

नियुञ्जन्तीति, नैवं परिधिर्यूपो भवतीति । तेन परिहित एव परिधौ पशुनियोगः कर्तव्यः । पशोरनपगमोपायश्च कर्तव्य एव ।

**वैश्वदेव्या स्थाने प्रथमं पृष्ठ्याहर्जनिष्ठा उग्र उग्रो जज्ञ इति मध्यंदिन ऐकाहिका होत्राः सर्वत्र प्रथमसांपातिकेष्वहःस्वेकाहीभवत्सु ।**

एतानि षडहिकानि प्रथमसांपातिकानि[1] 'पृष्ठ्याभिप्लवयोः प्रथमे चतुर्थे च स्वरसामसु च प्रथमं[2] छन्दोमेषु प्रथमम्' इति । एतानि षडहाकान्येकाहेषु[3] यत्र यत्रातिदिश्यन्ते तत्र सर्वत्र माध्यंदिने सवने होत्रका ऐकाहिकशस्या भवन्ति । ज्योतिष्टोमिकशस्या इत्यर्थः । अस्य प्रयोजनं मैत्रावरुणाच्छावाकयोः 'सद्यो ह जातः' इत्यस्य 'भूयः' इत्यस्य चानुद्धारः । इतरथा 'एवा त्वामिमामूषु' इत्यनयोः संपातयोः संपातत्वेनात्यैकाहिकत्वेन[4] च प्राप्तौ तद्दैवतमन्यं पूर्वस्य स्थान इत्यनेन न्यायेनैकाहिकयोः पूर्वयोरुद्धार एव स्यात्, अतस्तन्निवृत्त्यर्थमैकाहिकवचनम् । माध्यंदिनाधिकारान्माध्यंदिने सवन एवायं विधिर्भवति नेतरयोः सवनयोरिति सिद्धम् ।

**वैश्वानरपार्जन्ये हविषी अग्नीषोमीयस्य पशोः पशुपुरोळाशेऽन्वायातयेयुः प्रातःसवनिकेषु पुरोळाशेषु वैश्वदेव्या हवींष्यन्वायातयेयुर्वैश्वदेवः पशुः ।**

अस्मिन्नहनि सवनीयः पशुर्वैश्वदेवो भवति ।

**बार्हस्पत्याऽनूबन्ध्या ।**

अनूबन्ध्या[5] पशुश्च बृहस्पतिदेवत्यो भवति ।

**वरुणप्रघासस्थाने व्यहः ।**

व्यहचोदनासु गोआयुषी विपरीते[6] इत्युक्तम् ।

**उत्तरस्याह्नः प्रातःसवनिकेषु पुरोळाशेषु वरुणप्रघासहवींष्यन्वायातयेयुः ।**

तयोर्यदुत्तरमहस्तस्येत्यर्थः ।

**मारुतवारुणौ पशू ।**

तयोरह्नोर्यथासंख्येनेमौ पशू सवनीयौ भवतः ।

---

१ घ. ङ. झ. °नि षोड° । २ च. °थमां छ° । ३ ग. घ. ङ. झ. °नि षाड° । ४ ग. घ. झ. °नान्त्यैका° । ५ च. °बन्ध्यश्च पशुर्बृह° । ६ घ. °ते नेत्यु° ।

**मैत्रावरुण्यनूबन्ध्या ।**

त्र्यहानां प्रातरनुवाकात्पूर्वस्य तन्त्रकाण्डस्य पत्नीसंयाजेभ्य उत्तरस्य च तन्त्रेणानुष्ठानसिद्धेरेकैव मित्रावरुणदेवत्याऽनूबन्ध्या भवति ।

**अग्निष्टोम ऐन्द्राग्नस्थाने ।**

योऽयं चातुर्मास्याङ्गभूत ऐन्द्राग्नः पशुर्द्वयोर्मासयोरैन्द्राग्नः पशुरिति तस्य स्थानेऽग्निष्टोमः कर्तव्यो न निरूढस्थाने तस्यात्र प्रसङ्गाभावात् । सर्वाग्निष्टोमचोदनासु प्रकृतिभूतो ज्योतिष्टोमोऽग्निष्टोमसंस्थो गृह्यते । अत्र विशेषाभावात्सवनीयानुबन्ध्यावपि प्राकृतावेव ।

**साकमेधस्थाने त्र्यहोऽतिरात्रान्तः ।**

त्र्यहचोदनासु पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहो वेत्युक्तम्[२] । स त्र्यहोऽतिरात्रान्तः साकमेधस्थाने भवति । यस्य त्र्यहस्यान्त्यमहरतिरात्रं भवति सोऽतिरात्रान्तः । उत्तममहरतिरात्रसंस्थं भवति । इतरे तु यथाप्राप्तसंस्थे इत्यर्थः ।

**द्वितीयस्याह्नोऽनुसवनं पुरोळाशेषु पूर्वेद्युर्हवींषि ।**

अस्य त्र्यहस्य यद्द्वितीयमहस्तस्मिन्ननुसवनं ये पुरोडाशास्तेषु साकमेधानां यानि पूर्वेद्युरनुसवनं विहितानि हवींषि तानि यथासंख्यमन्वायातयेयुः ।

**तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णदर्वं प्रातःसवनिकेषु क्रैळिनम् ।**

अन्वायातयेयुरिति शेषः ।

**माध्यंदिनेषु माहेन्द्राणि ।**

अन्वायातयेयुः ।

**अन्तरेण घृतयाज्ये दक्षिणे मार्जालीये *पित्र्या ।**

अन्वायातयेयुरित्यनुवर्तत एव । अन्तरेण घृतयाज्ये इति । तयोर्मध्य इत्यर्थः ।

**तत्रोपस्थानं यथाऽनतिप्रणीय चरताम् ।**

अस्यां पित्र्यायामनावृत्त्याऽनतिप्रणीतचर्यायामिवानावृत्त्योपस्थानं भवतीत्यर्थः ।

**अनूबन्ध्यायाः पशुपुरोळाश आदित्यमन्वायातयेयुः ।**

अन्वायातयेयुरिति पुनर्वचनं सर्वत्रानुवृत्तिप्रदर्शनार्थं न पूर्वेष्वनुवृत्तिनिवृत्त्यर्थम् । परिसंख्यातोऽनुवाद आश्रयितुं युक्त इति ।

---

* घ.—महाव्रत उत्तरो मार्जालीयोऽस्ति ।

---

१ ग. °न्ध्या स्थाने भ° । २ च. 'ति स त्र्यहोति° ।

**आग्नेय्यैन्द्राग्नैकादशिनाः पशवः ।**

आग्नेय्यश्चैन्द्राग्नश्चैकादशिनाश्च यथासंख्येनान्वहं सवनीयाः पशवो भवन्ति ।

**सौर्याऽनूबन्ध्या ।**

अत्रानुष्ठेयाङ्गावसरगतत्वादेकैवानूबन्ध्या ।

**अग्निष्टोमः शुनासीरीयायाः स्थाने प्रातःसवनिकेषु पुरोळाशेषु शुनासीरीयाया हवींष्यन्वायातयेयुः ।**

अन्वायातयेयुरितीदमपि प्रदर्शनार्थमेव ।

**वायव्यः पशुः ।**

प्राकृतस्य सवनीयस्यात्र प्राप्तस्य देवतान्तरं विधीयते ।

**आश्विन्यनूबन्ध्या ।**

इदमपि पूर्ववदेव देवतान्तरविधानम् ।

**अन्वहं पञ्चाशच्छो दक्षिणाः ॥ २ ॥**

यान्येतान्यष्टौ सुत्यान्यहान्यनुक्रान्तानि तेषामेकैकस्मिन्नहनि पञ्चाशत्पञ्चाशद्गवां [1] दक्षिणा दातव्याः ॥ २ ॥

**अथ राजसूयाः ।**

अथेत्ययमधिकारार्थः । उत्तरत्र ये सोमाः पशव इष्टयश्च ते सर्वे राजसूयसंज्ञा भवन्ति न केवलं सोमा एवेत्यधिकारप्रयोजनम् । पूर्वत्र सोमा एव चातुर्मास्यसंज्ञा भवन्तीति तदप्यनेन सिद्धम् ।

**पुरस्तात्फाल्गुन्याः पौर्णमास्याः पवित्रेणाग्निष्टोमेनाभ्यारोहणीयेन यजेत ।**

या फाल्गुनी पौर्णमासी तस्याः पुरस्तात्पवित्रसंज्ञकेनाग्निष्टोमप्रकृतिकेनाभ्यारोहणप्रयोजनेन यष्टव्यम् । अस्य[2] चान्वारोहणप्रयोजनत्वाद्राजसूयानां[3] तदेकदेशभूतानां चातुर्मास्यानामारम्भार्थाय वैश्वानरपार्जन्याया अत्र निवृत्तिः । पुरस्तादितिवचनात्तस्मिञ्शुक्लपक्षे पर्वण्येव सुत्यमहर्भवति । तदानुगुण्येन तस्मिञ्शुक्लपक्षे दीक्षोपसदश्च कर्तव्याः ।

**पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते ।**

फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते, आरभेत[4] । वैश्वदेवं पर्व[5] कर्तव्यमित्यर्थः । पवित्रेणैवाभ्यारोहणस्य कृतत्वादत्र वैश्वानरपार्जन्या न भवति ।

---

१ कं, ब. ङ. क्ष. °क्षिणां दा° । २ च. °स्य चाऽऽरो° । ३ घ. झ. °यानामन्वारम्भम्° । ४ घ. ङ. झ. °रम्भे वै° । ५ त्र, °र्वणिक° ।

**नित्यानि पर्वाणि ।**

यानि वैश्वदेवादीनि[1] पर्वाणि तानि नित्यानि न सोमचातुर्मास्येष्विव परतन्त्राणीत्येवमर्थं नित्यग्रहणम् ।

**चक्राभ्यां तु पर्वान्तरेषु चरन्ति ।**

चक्रशब्देन दर्शपूर्णमासावुच्येते । सौर्याचान्द्रमस्याविति केचित् । पर्वान्तरेष्विति । पर्वणामन्तराले यान्यहानि तेषु चक्राभ्यां यागः कर्तव्य इत्यर्थः ।

**अहर्विपर्ययं पक्षविपर्ययं वा ।**

पर्वान्तरेषु चक्राभ्यां यागे कर्तव्ये[2]ऽहर्विपर्ययं पक्षविपर्ययं कृत्वा चरेयुः । अहर्विपर्ययो नामैवं भवति—एकस्मिन्नहनि पौर्णमास्या अपरस्मिन्नहन्यमावास्यया[3] पुनरपि पौर्णमास्या पुनरप्यमावास्ययेति । पक्षविपर्ययो नाम कृष्णपक्षे पौर्णमास्या शुक्लपक्षेऽमावास्यया[4] पुनरप्येवम् ।

**संवत्सरान्ते समानपक्षेऽभिषेचनीयदशपेयौ ।**

संवत्सरान्त इति । संवत्सरस्य परस्तादित्यर्थः । एवं चातुर्मास्यैः संवत्सरे परिसमाप्यमाने फाल्गुन्यां शुनासीरीयायागेण संवत्सरः परिसमाप्तो भवति । तत उत्तरमेव कृष्णपक्षमतीत्यानन्तरे शुक्लपक्षेऽभिषेचनीयदशपेयौ कर्तव्यौ । पञ्चदश्यां प्रतिपदि वा दीक्षा । चतुर्थ्यां पञ्चम्यां वा सुत्यमहरभिषेचनीयस्य । ततः संसृपेष्टयः सप्ताहानि । तत एकादश्यां दशपेयस्य दीक्षा । पौर्णमास्यां सुत्यमहः । एवं तौ समानपक्षकृतौ[6] भवतः । अध्वर्युवशाद्वा सहदीक्षणान्तयोः[7] कृत्वा सोमक्रयाद्येव पृथग्भवति ।

**उक्थ्यो बृहत्पृष्ठ उभयसामाऽभिषेचनीयः ।**

सोऽयमभिषेचनीय उक्थ्यसंस्थो भवति बृहत्पृष्ठश्च । उभयं च निष्केवल्यस्तोत्रे[8] बृहद्भवति । तस्य योनिर्निष्केवल्यस्तोत्रियो भवति । पवमाने रथंतरं भवति तस्य योनिर्योनिस्थाने शंस्तव्येत्यर्थः ।

**संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत ।**

समाप्ते मरुत्वतीयेऽनारब्धे निष्केवल्यस्तोत्रे दक्षिणत आहवनीयस्याऽऽसीनं राजानमभिषिञ्चन्त्यध्वर्यवः । तस्मा अभिषिक्ताय राज्ञे पुत्राद्यमात्यपरिवृताय पुत्रपौत्रादिभिर्बन्धु-

---

१ च. °नि कर्माणि । २ ग. °र्तव्यमह° । ३ च. °वास्याश्राः पु° । ४ च. °स्ययेत्येवम् ।
ंमाो° । ६ च. °पक्षे कृ° । ७ ग. घ. ङ. च. झ. °क्षणीयान्त° । ८ म.

भिरमात्यैः परिवृताय सुहृद्भिः परिवृताय । अमात्यशब्देनात्र राजकार्यपरिवोढारो[1] मन्त्र्यादय उच्यन्ते । तैश्च परिवृतायेत्यर्थः । हिरण्मयः कशिपुर्हिरण्यकशिपुस्तस्मिन्नासीने[2] होता शौनःशेपमाख्यानमाचक्षीत ब्रूयादित्यर्थः । तच्चाऽऽख्यानं ब्राह्मणे त्रयस्त्रिंशोऽध्यायः 'हरिश्चन्द्रो ह वैधसः' इत्यादिस्तं सर्वमाचक्षीतेत्यर्थः ।

**हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं तत्समर्धयति ।**

होतुरासनविधानमुक्तार्थम्[3] । अध्वर्योरासनमस्माभिरविधेयम् । अत उभयोः संकीर्तनं स्तुत्यर्थमेव । यस्माद्यशो हिरण्यं तस्मादेनं राजानं यशसा समर्धयति होताऽध्वर्युश्च हिरण्मयासनो हिरण्यसंबद्धादित्यर्थः ।

**ओमित्यृचः प्रतिगर एवं तथेति गाथायाः ।**

एवमिति नायं प्रतिगरः प्रतिगरावयवो वा, तस्मादेवमर्थः । यथोंशब्द ऋक्षु प्रतिगरो भवत्येवमेव तथाशब्दो गाथासु प्रतिगरो भवति । अस्मिन्नाख्याने 'कस्य नूनम्' इत्येवमाद्या ऋचः । 'यं न्विमं पुत्रमिच्छन्ति' इत्येवमाद्या गाथाः । सर्वत्र च ब्राह्मणजाः श्लोका गाथा इत्युच्यन्ते[4] । ऋचां गाथानां[5] च प्रतिगरविधानाद्ब्राह्मणवाक्येषु प्रतिगरो नास्ति । 'हरिश्चन्द्रो ह वैधसः' इत्यारभ्य 'स ह नारदं पप्रच्छ' इत्येवमन्तमुक्त्वाऽवसाय 'यं न्विमम्' इत्यारभ्य नारदेत्येवमन्तमुक्त्वाऽवसिते[6] तथेत्यध्वर्युः प्रतिगृणाति । सर्वत्र च गाथान्त ऋगन्ते च प्रतिगरो[7] नान्यत्र भवति । ततः 'स एकया पृष्टो दशभिः प्रत्युवाच' इति ब्राह्मणवाक्यमुक्त्वाऽवसाय दश गाथा ब्रूयात् । दशकृत्वश्च प्रतिगृणाति । एवं सर्वत्राऽऽचष्टे प्रतिगृणाति च ।

**ओमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति ।**

ओमिति वै दैवमिति । दैवशब्देन वैदिकत्वमुच्यते । ओमिति । वैदिकवचनमिदमनुज्ञावचनमित्यर्थः । तथेति मानुषं मानुषमिति लौकिकमिदमनुज्ञावचनमित्यर्थः । ताभ्यां लौकिकवैदिकाभ्यामोंतथाशब्दाभ्यां प्रतिगरभूताभ्यामेनं राजानं पापादेनसः प्रमुञ्चति । पापशब्देनात्र महत्पापमुच्यते, एनःशब्देनाल्पम् । महतः पापादल्पाच्च पापात्प्रमुञ्चतीत्यर्थः ।

---

१ च. °र्यनिर्बोढा° । २ क. च. °सीनो हो° । ३ च. °मुक्तार्थ° । ४ ग. घ. च. °न्वादि° । ५ क. ङ. ऋ वा गा° । ६ क. ङ. °नां प्र° । ७ च. °रो भवति नान्यत्र । त° ।

**तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैत-च्छौनःशेपमाख्यानं न हास्मिन्नल्पं च नैनः परिशिष्यते ।**

यस्मादेतदाख्यानमोंतथेतिशब्दप्रतिगरं इत्युक्तं महतोऽहंसश्च पापात्प्रमुञ्चति तस्मादयं यजमानोऽपि राजा यः परबलं युद्धेन जितवांस्तदेतच्छौनःशेपमाख्यानमाख्यापयेतैव । य एवमाख्यापयते राजा तस्मिन्राज्ञि महदल्पमप्येनो न परिशिष्यते । चनशब्दोऽप्यर्थे वर्तते ।

**सहस्रमाख्यात्रे दद्यात् ।**

होत्र इत्यर्थः ।

**शतं प्रतिगरित्रे ।**

अध्वर्यव इत्यर्थः ।

**यथास्वमासने ।**

यद्यस्य स्वं तत्तस्मा इत्यर्थः । अस्मिन्प्रकरणे ब्राह्मणानुवादान्न्यूनाधिकचोद्यं नास्ति ।

**संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत ।**

संसृपेष्टयो नाम सप्तेष्टय आग्नेय्यादयस्ताभिः सप्ताहं चरित्वा दशपेयेन यजेत । दशपेयो नाम यज्ञक्रतुः ।

**तत्र दशदशैकैकं चमसं भक्षयेयुः ।**

तत्र दशपेय एकैकं चमसं दश पुरुषा भक्षयन्ति ।

**नित्यान्प्रसंख्यायेतराननु प्रसर्पयेयुः ।**

प्रकृतौ यं चमसं ये भक्षयन्ति वषट्कारेण होमाभिषवाभ्यां समाख्यया वाऽन्येन वा कारणेन ते नित्या इत्युच्यन्ते । तान्प्रसंख्यायास्मिंन्नयन्त इतीतरान्पुरुषान्प्रति चमसमनुसर्पयेयुः । ये पुरुषा अनुप्रसर्पन्ति त एवंलक्षणा इत्युच्यन्ते ।

**ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः ।**

येषां मातृतः पितृतश्चोभयतो ये दश पूर्वाः पुरुषास्ते विद्यया तपसा पुण्यैः कर्मभिः प्रतिषिद्धवर्जितैश्च युक्ताः सम्यगनुष्ठितवन्तो वैदिकं पन्थानमपि चाब्राह्मण्यं न निनयेयुर्निश्चयेनाब्राह्मण्यं न गमयेयुः । अब्राह्मण्यगमनं नाम शूद्रायामपत्योत्पादनमुच्यते । विद्या

१ घ। च. °रयुक्तं° । २ ङ. तदेत° । ३ च. स्वं यथास्वं तत्तस्य यथास्वमासने च दद्यात् । यद्यस्य स्वं त° । ४ ग. घ. ङ. च. झ. °स्मिन्निय° । ५ घ. ङ. झ. °श्च न यु° । ६ घ. °तवै° । ७ क. °ण्यं वा नि° । ८ क. ण्यं नाग° । ङ. झ. °ण्यं नाम° । ९ क. अब्रह्मण्या ग° ।

नाम षडङ्गो वेदस्तदर्थज्ञानं च । तपो नाम श्रौतस्मार्तकर्मानुष्ठानम् । पुण्यकर्म नाम प्रतिषिद्धवर्जनम् । तानेवंविधान्पुरुषाननु प्रसर्पयेयुः । एतदुक्तं भवति—मातृतः पितृतश्चोभयतः पूर्वे ये दश पुरुषास्ते षडङ्गवेदाध्ययनेन तदर्थज्ञानेन च श्रौतस्मार्तकर्मानुष्ठानेन च युक्ताः शूद्रायामपत्योत्पादनमकृतवन्तो येषां पुरुषाणां तानेवंविधान्पुरुषानुपसर्पयेयुः । दशपुरुषमिति । दश पुरुषा इत्यर्थः । तच्च पूर्वपुरुषविशेषणम् । तेषामेवोद्देशकं 'ये' इत्येतत्पदम् । येषामित्येतत्प्रसर्पणे जिघृक्षितानां पुरुषाणां विशेषणम् । उभयतः, मातृतः पितृतश्चेत्यर्थः ।

**पितृत इत्येके ।**

एक आचार्याः पितृत एवैतल्लक्षणमिच्छन्ति न मातृतोऽपीति ।

**नवग्वासः सुतसोमास इन्द्रं सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोराद्ये ।**

दशपेयस्य निष्केवल्यमरुत्वतीययोर्निविद्धानयोराद्ये अधिके एते ऋचौ भवतः ।

**सूक्तमुखीये इत्युक्त एते प्रतीयात् ।**

एते इति । एतत्स्थान उक्ते इत्यर्थः ।

**उत्तर आपूर्यमाणपक्षे केशवपनीयो बृहत्पृष्ठोऽतिरात्रः ।**

दशपेये कृते य उत्तरः शुक्लपक्ष आगच्छति वैशाखस्तस्मिन्केशवपनीयो नामैकाहः कर्तव्यः । स च बृहत्पृष्ठोऽतिरात्रसंस्थश्च भवति ।

**द्वयोर्मासयोर्व्युष्टिद्व्यहः ।**

केशवपनीयादूर्ध्वं द्वयोर्मासयोर्यः शुक्लपक्ष आषाढस्तत्र व्युष्टिद्व्यहो नाम द्व्यहः कर्तव्यः । तत्र द्व्यहस्य गोआयुषी विपरीते इत्यतिदेश उक्तस्तत्रैव विशेष उच्यते—

**अग्निष्टोमः पूर्वमहः सर्वस्तोमोऽतिरात्र उत्तरम् ।**

तस्य त्र्यहस्य यत्पूर्वमहस्तदग्निष्टोमसंस्थं भवति, तस्यैव यदुत्तरमहस्तत्सर्वस्तोमातिरात्रसंस्थं च भवति । सर्वस्तोमत्वात्षळहस्तोत्रियावापाहीनसूक्तानीत्येवमादयो धर्मा भवन्ति ।

**उत्तर आपूर्यमाणपक्षे क्षत्रस्य धृतिरग्निष्टोमः ॥ ३ ॥**

व्युष्टिद्व्यहादूर्ध्वं यः शुक्लपक्षः श्रावणस्तस्मिन्क्षत्रस्य धृतिर्नामैकाहः स चाग्निष्टोमप्रकृतिर्भवति, संस्था च सैव भवति ॥ ३ ॥

**इति राजसूयाः ।**

इतिशब्दः प्रकारवाची । एवंप्रकाराः सर्वे राजसूयाः । बहवश्चाध्वर्युविहिता राजसूयाः सन्ति । अस्मच्छास्त्रविहिताश्चैकाहास्तेषां सर्वेषामयमेव प्रकार इत्यर्थः ।

---

१ च. झ. °षाननुप्र° । २ च. तस्य । ३ ग. घ. झ. °स्तोमोऽति° ।

**न्यायक्लृप्ताश्च दक्षिणा अन्यत्राभिषेचनीयदशपेयाभ्याम् ।**

अस्मिन्विहिते राजसूये पवित्रादयो ये सोमास्तेषु न्यायक्लृप्तो दक्षिणाविधिर्भवति । न्यायो नाम 'एवंप्रायाश्च दक्षिणाः' इत्येवमादिभिः सूत्रैर्विहितो दक्षिणाप्रकारः । चशब्दादध्वर्युविहिताश्च । अयं तु विधिरभिषेचनीयदशपेयाभ्यामन्यत्रैव भवति । तयोस्तु वक्ष्यमाण एव दक्षिणाविधिर्भवति न न्यायक्लृप्त एवमर्थः पर्युदासः ।

**अभिषेचनीये तु द्वात्रिंशतं द्वात्रिंशतं सहस्राणि पृथङ्मुख्येभ्यः ।**

अभिषेचनीये त्वयं दक्षिणाविधिर्भवति । होत्रादिभ्यो मुख्येभ्य एकैकस्मै द्वात्रिंशतं सहस्राणि ददाति । पृथग्ग्रहणं पृथक्कृत्य दातव्यमित्येवमर्थम् ।

**षोळश षोळश द्वितीयिभ्यः ।**

अर्धिभ्य इत्यर्थः ।

**अष्टावष्टौ तृतीयिभ्यश्चत्वारि चत्वारि पादिभ्यः ।**

सर्वत्र सहस्राणीत्यधिक्रियते । अर्धमस्यास्तीत्यर्धी । एवं द्वितीयी तृतीयी पादी च । एषां संबन्धिशब्दानां सिद्धवदभिधानात्प्रकृतावप्येवं दक्षिणाविभाग इति साधितं भवति ।

**संसृपेष्टीनां हिरण्यमाग्नेय्यां वत्सतरी सारस्वत्यामवध्वस्तः सावित्र्यां श्यामः पौष्ण्यां शितिपृष्ठो बार्हस्पत्यायामृषभ ऐन्द्र्यां महानिरष्टो वारुण्याम् ।**

संसृपेष्टीनामयं दक्षिणाविधिर्भवति । हिरण्यमनियतसंख्यं सुवर्णं दद्यात् । वत्सतरी नाम गोजातौ स्त्रीबालत्वेसृष्टमातृस्तना । अवध्वस्तः पांसुवर्णः । श्यामो धूम्रवर्णः । शितिपृष्ठः कृष्णपृष्ठः । ऋषभः सेचनसमर्थः । महानिरष्टोऽवृद्धवया बलीवर्दः । सर्वे गोजातय एव भवन्ति ।

**साहस्रो दशपेयः ।**

दशपेयः सहस्रदाक्षिण इत्यर्थः ।

**इमाश्चाऽऽदिष्टदाक्षिणाः ।**

आदिष्टदक्षिणा इति । ऋत्विज आदिश्याऽऽदिश्य विहिता इत्यर्थः । चशब्दः सहस्रदक्षिणाया आदिष्टदक्षिणायाश्च समुच्चयार्थः ।

---

१ क, ङ. झ. °वं न्याया° । २ च. °हितश्च । ३ क. घ. ङ. °शतस° । च. शतं स° । ४ च. °णार्धाया । ५ च. °णानां स° ।

**सौवर्णी स्रगुद्गातुः ।**

सुवर्णमयी मालेत्यर्थः ।

**अश्वः प्रस्तोतुर्धेनुः प्रतिहर्तुः ।**

धेनुः सवत्सा दातव्या ।

**अजः सुब्रह्मण्यायै ।**

अजः सुब्रह्मण्याया इति । सुब्रह्मण्यायेत्यर्थः ।

**हिरण्यप्राकाशावध्वर्योः ।**

प्राकाशौ प्रदीप्तौ[1], कुण्डले इति केचित् । तौ सुवर्णमयौ दातव्यौ । अध्वर्योरध्वर्यवे इत्यर्थः । एवमत्र सर्वत्र चतुर्थ्यर्थे षष्ठी ।

**राजतौ प्रतिप्रस्थातुः[2] ।**

राजतौ प्राकाशावित्यर्थः ।

**द्वादश पष्ठौह्यो गर्भिण्यो ब्रह्मणः ।**

पष्ठौह्यः पञ्चवर्षास्ता गर्भिणीर्दद्यात् ।

**वशा मैत्रावरुणस्य ।**

प्रजननासमर्था ।

**रुक्मो होतुः ।**

रुक्मो नामाऽऽभरणविशेषो वृत्ताकारः ।

**ऋषभो ब्राह्मणाच्छंसिनः । कार्पासं वासः पोतुः । क्षौमी बरासी नेष्टुः ।**

क्षौमी[3], आतसी शाटी । बरासी स्थूला ।

**एकयुक्तं यवाचितमच्छावाकस्य ।**

एकेनानडुहा युक्तं यवपूर्णं शकटमित्यर्थः ।

**अनड्वानाग्नीध्रस्य ।**

अनोवहनसमर्थो बलीवर्दोऽनड्वान् ।

**वत्सतर्युन्नेतुस्त्रिवर्षः साण्डो ग्रावस्तुतः ॥ ४ ॥**

त्रीणि वर्षाणि यस्य वयः स त्रिवर्षः । साण्डः, अण्डाभ्यां सहितः । नानण्डो न भग्नाण्ड इत्यर्थः ॥ ४ ॥

---

१ च. °दीप्तकु° । २ च. °तुः । रजतमयौ प्रा° । ३ क. ग. घ. ङ. झ. °मी, अत° ।

**उशनसस्तोमेन गरगीर्णमिवाऽऽत्मानं मन्यमानो यजेत ।**

उशनसस्तोमो नामैकाहः । पुनः स्तोम इति चास्यैव संज्ञा । गरो विषम् । गरो गीर्णो येन स गरगीर्णः । यो बहुप्रतिग्रहादिना पापाभिभवादात्मानं गरगीर्णमिव मन्यते स एतेन यजेत ।

**उशना यत्सहस्यैरयातं त्वमपो यदवेतुर्वशायेति सूक्तमुखीये गोस्तोमभूमिस्तोमवनस्पतिसवानां न ता अर्वा रेणुककाटो अश्नुते न ता नशन्ति न दभाति तस्करो बळित्था पर्वतानां इळाचिद्या वनस्पतीन्देवेभ्यो वनस्पते हवींषि वनस्पते रशनया नियूयेति सूक्तमुखीयाः ।**

गोस्तोमो भूमिस्तोमो वनस्पतिसव इति त्रय एकाहाः कर्तव्या इत्येकोऽर्थोऽर्थात्कल्प्यते । अपरस्तु तेषामेताः षळृचः सूक्तमुखीया एकैकस्य द्वे द्वे भवत इति । 'देवेभ्यो वनस्पते हवींषि' इत्यनया साहचर्यात् 'वनस्पते रशनया नियूय' इति प्रैषेणैव गृह्यते ।

**आधिपत्यकामो ब्रह्मवर्चसकामो वा बृहस्पतिसवेन यजेत ।**

अधिपतेर्भाव आधिपत्यं तत्कामो ब्रह्मवर्चसकामो वा बृहस्पतिसवो नामैकाहस्तेन यजेत । ब्रह्मणो वर्चस्तेजो ब्रह्मवर्चसमित्युच्यते । ब्रह्मेति ब्राह्मण्यं वेदश्चोच्यते तयोर्यद्वर्चस्तद्ब्रह्मवर्चसं तत्कामो ब्रह्मवर्चसकामः ।

**तस्य तृचाः सूक्तस्थानेषु ।**

तस्य बृहस्पतिसवस्य यानि सूक्तस्थानानि होतुर्होत्रकाणां च तेषु सर्वेषु तृचा एव कर्तव्याः । तस्येतिवचनं तस्य बृहस्पतिसवस्य स्वभूतानि यानि सूक्तस्थानानि तेष्वेवायं तृचत्वनियमः स्थानाऽऽगन्तूनामित्येवमर्थम् । तेनाऽऽगन्तूनां निविदतिपत्तौ प्राप्तानां तृचत्वनियमो न भवति ।

**अग्निर्देवेषु राजतीत्याज्यं यस्तस्तम्भ धुनेतय इति सूक्तमुखीये इन्द्र मरुत्व इह नृणामु त्वेति मध्यंदिन उदुष्य देवः सविता हिरण्यया घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं स्वस्ति नो मिमीतामश्विना भग इति वैश्वदेवं वैश्वानरं मनसाऽग्निं निचाय्य**

---

ग. घ. °सवेन य° । ङ. झ. °सवनेन य° । ३ क. °मो भ° ।

**प्रयन्तु वाजास्तविषीभिरग्नयः समिद्धमग्निं समिधा गिरा गृण इत्याग्निमारुतं होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमांस्तृचाञ्छंसेयुः ।**

होत्रकाणां स्तोत्रियानुरूपेभ्य ऊर्ध्वं यच्छस्यं तस्याऽऽदितोऽन्ततश्चैकैकं तृचं होत्रकाः स्तोत्रियानुरूपेभ्य ऊर्ध्वं शंसेयुः । तन्मध्यगतं शस्यमुद्धार्यमित्यर्थः । ऊर्ध्वमनुरूपेभ्य इत्येव सिद्धे स्तोत्रियग्रहणं परिसंख्याशङ्कानिवृत्त्यर्थम् ।

**प्रगाथेभ्यस्तु माध्यंदिने ।**

माध्यंदिने सवनेऽयं विशेषः । प्रगाथेभ्य ऊर्ध्वं यच्छस्यं तस्याऽऽदितोऽन्ततश्च तृचौ ग्राह्यौ तयोर्मध्ये यच्छस्यं तदुद्धार्यमित्यर्थः ।

**अनुसवनमेकादशैकादश दक्षिणाः ।**

सवने सवन एकादशैकादश दक्षिणा ददाति सन्नेषु नाराशंसेषु[1] । प्रातःसवने[2] दक्षिणानां निर्देशमात्रमेव कृत्वा तासा[3]मपि माध्यंदिन एव सवने नयनं कर्तव्यम् । माध्यंदिने या दक्षिणास्तासां[4] नयनं च तत्रैव कर्तव्यम् । तृतीयसवने तु दक्षिणानां निर्देशमात्रमेव कृत्वाऽनूबन्ध्यावपायागे कृते तासां नयनं कर्तव्यम् । उन्नेष्यमाणास्वित्येते आहुती माध्यंदिन एव सवने भवतो नेतरयोः सवनयोः । प्रातःसवने नयनाभावात्तृतीयसवने[5] तस्य पूर्वेणैव सिद्धत्वात् । क इदमित्यादि माध्यंदिने तृतीयसवने च भवति, उभयत्र नयनसंभवाद्दृष्टार्थत्वाच्चेति सिद्धम् ।

**एकादशैकादश वा सहस्राणि ।**

एकादशैकादश वा सहस्रा[6]ण्यनुसवनं दक्षिणा ददाति । पूर्वस्यैकादशशब्दस्य दक्षिणाविशेषणार्थत्वादस्य च सहस्रसंख्याविशेषणार्थत्वान्न पुनरुक्तदोषः ।

**शतानि वा ।**

अत्र संख्याविशेषणार्थत्वात्पूर्व एवानुवर्तते । एकादशैकादश वा शतान्यनुसवनं दक्षिणा इत्यर्थः ।

**अश्वो माध्यंदिनेऽधिकः ।**

त्रिष्वपि पक्षेष्वश्वोऽधिको माध्यंदिने दक्षिणाभिः सह दातव्यः ।

**युवा भ्रातृव्यवानाधिबुभूषुर्यजेत ।**

---

१ क. ख. ङ. °षः । प्रागा° । २ घ. च. °ने तु द° । ग. ङ. झ. °नेषु द° । ३ घ. ङ. झ. °सामेवम° । ४ च. °सां दानं न° । ५ च. °वनस्थस्य । ६ च. °स्राणीत्यनु° ।

भूर्नामैकाहस्तेन भ्रातृव्यवान्यजेत । भ्रातृव्याः शत्रवस्तानधिबुभूषुरभिभवितुमिच्छु-रित्यर्थः ।

**सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकामः ।**

सद्यस्क्रिया नामैकाहः । यस्मिन्नहनि दीक्षोपसत्सुत्यं सर्वमेकस्मिन्नहनि क्रियते । अनु-क्रियाऽप्येकाहः[1] । स एवं भवति—एकस्मिन्नहनि दीक्षा, द्वितीयेऽहनि क्रयाद्युपवसथान्तं, तृतीयेऽहनि सुत्येति । एवं परिक्रियाऽप्येकाहो भवति । एषामन्यतमेन स्वर्गकामो यजे-तेति । निरतिशयसुखकाम इत्यर्थः ।

**एकत्रिकेण त्र्येकेण वाऽन्नाद्यकामः ।**

एकत्रिकस्त्र्येकश्च द्वावेकाहौ तयोरन्यतरेणान्नाद्यकामो यजेत । एकत्रिक एवं भवति एकस्तोमो बहिष्पवमानः, त्रिस्तोमो होतुराज्यम्, एवं व्यत्यासेन सर्वत्रैतौ स्तोमौ विप-रीतौ भवतः । त्र्येके[2] च तावेव स्तोमौ विपरीतौ भवतः । त्रिस्तोमको बहिष्पवमानः, एक-स्तोमकं होतुराज्यम् । एवमेव व्यत्यस्य समापयेत् ।

**गोतमस्तोमेन य इच्छेद्दानकामा मे प्रजा स्यादिति ।**

गोतमस्तोमो नामैकाहस्तेन स यजेत यो मम प्रजा दानशीला दानकामा स्यादिति कामयेत ।

**एतेषां सप्तानां शस्यमुक्तं बृहस्पतिसवेन ।**

एतेषां भूरादीनां गोतमस्तोमपर्यन्तानां सप्तानां बृहस्पतिसवेन शस्यं व्याख्यातम् । सप्तग्रहणं गोतमस्तोमसंग्रहार्थम् । इतरथा गोतमस्तोमस्य माध्यंदिने सवने स्तोमविवृद्धा-वपरिमिताभिरतिशंसने प्राप्त एतच्छस्यं न प्राप्नुयादतः सप्तग्रहणं कृतम् । तेन तस्मिन्नेव शस्ये यथासंभवमतिशंसनं भवति । शस्यग्रहणमेतेषु शस्यमेव न दक्षिणाविधिरपीत्येवमर्थम् ।

**त्वं भुवः प्रतिमानं पृथिव्या भुवस्त्वमिन्द्र ब्रह्मणा महा-न्सद्यो ह जातो वृषभः कनीनस्त्वं सद्यो अपि वो जात इन्द्रानु त्वा हि घ्ने अधदेव देवा अनु ते दायि मह इन्द्रियाय कथो नु ते परिचराणि विद्वानिति द्वे एकस्य चिन्मे विभ्व-स्त्वोज एकं नु त्वा सत्पतिं पाञ्चजन्यं त्र्यर्यमा मनुषो देवताता प्रधान्वस्य महतो महानीत्था हि सोम इन्मद इन्द्रो मदाय वावृध इति सूक्तमुखीयाः ॥ ५ ॥**

एतेषां सप्तानां चतुर्दश ऋचो द्वे द्वे संभूयैकैकस्यैकाहस्य यथासंख्यं सूक्तमुखीयः स्युः ॥ ५ ॥

---

१ क. °काह एव भ° । २ च. त्र्येकस्त्वेता° ।

**गोतमस्तोममन्तरुक्थ्यं कुर्वन्ति ।**

उक्तो गोतमस्तोमस्तस्यैव कश्चिद्विशेष उच्यते । तमन्तरुक्थ्यं कुर्वन्त्यध्वर्यवश्छन्दोगाश्च । तत्रान्तरुक्थ्यत्वं नामैव भवति । अन्तर्मध्य इत्यर्थः । अग्निष्टोममध्ये यस्मिन्नुक्थ्योत्पत्तिः सोऽन्तरुक्थ्यः । स चतुष्प्रकारो भवति । ऐन्द्रावारुणादिभिर्ग्रहैः 'एह्यूषु ब्रवाणि ते' इत्यादिभिः स्तोत्रियानुरूपैर्वा साकमश्वादिभिः सामभिर्वा, सामस्तोत्रियानुरूपैर्वा ।

एषु पक्षेषु विशेषमाह—

**ग्रहान्तरुक्थ्यश्चेदग्ने मरुद्भिर्ऋक्वभिः पा इन्द्रावरुणाभ्यां मत्स्वेन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यां सजूरित्याग्निमारुते पुरस्तात्परिधानीयाया आवपेत ।**

उक्थ्या ग्रहा यदाऽग्निष्टोमचमसैः सह गृहीत्वा सहैव हूयन्ते तदा ग्रहान्तरुक्थ्यो भवति । तत्राऽऽग्निमारुतस्य परिधानीयायाः पुरस्तादियमृगर्धर्चशः शंस्तव्या ।

**उभय्योराह्वानम् ।**

उत्तरविवक्षार्थमेतत्सूत्रम् ।

**अन्यतरस्यामेक उक्थ्यस्तोत्रियेषु चेद्यज्ञायज्ञीयेन ।**

स्तुयुरिति शेषः । एष स्तोत्रियानुरूपान्ते[1] उक्थ्यः ।

**स्वैर्वा ।**

स्तुयुरिति शेषः । उक्थ्यस्तोत्रियेष्वेव स्वैः साकमश्वादिभिरेवाऽऽग्निमारुताय यदि स्तुयुरेष सामस्तोत्रियानुरूपान्तरुक्थ्यो भवति ।

अनन्तरोक्तयोः पक्षयोः शंसनप्रकारमाह—

**सकृदाहूय स्तोत्रियांस्तथाऽनुरूपान् ।**

त्रिभिः स्तोत्रियैरेकं स्तोत्रियकार्यमत्र क्रियते । अनुरूपैश्च त्रिभिरेकमनुरूपकार्यमिति[3] कृत्वाऽऽहावैक्यमत्रेति मन्तव्यम् ।

**अन्यत्राप्येवं स्तोत्रियानुरूपसंनिपाते ।**

अन्यत्रापि च स्तोत्रियानुरूपद्रव्याणां संनिपाते सति कार्यैक्यादेक[4] एवाऽऽहावः कर्तव्यः । अत्रोदाहरणं गर्भकारस्तवने । अत्र चोदाहरणं यदि कदाचिच्छन्दोगाः स्वयो-

---

१ च. °न्तुक्थ्या भवन्ति सो° । २ च. °न्तरुक्थ्यः । ३ ङ. झ. °रेवमाग्नि° । ४ च. °कार्यं कृताग्नि° ।

नावेव यज्ञायज्ञीयेन स्तुत्वोक्थ्यस्तोत्रियेष्वपि यज्ञायज्ञीयेन स्तुयुस्तदा स्तोत्रियानुरूपचतुष्कं भवति । अयं तु कल्पः सूत्रकारेण न निबद्धः । अत्राप्याहावैक्यासिध्यर्थमन्यत्रापीत्यापिशब्दः कृतो भगवता सूत्रकारेण ।

**यद्यु वै यज्ञायज्ञीययोनौ सौबैरवौक्थ्यसामभिः प्रकृत्या स्यात्तथा सति ॥ ६ ॥**

एष सामान्तरुक्थ्यपक्षो भवति । यदि यज्ञायज्ञीयस्यर्क्षु साकमश्वसौभरनार्मधैस्तुयुस्तदा प्रकृत्या स्यादाग्निमारुतशस्यं न यज्ञायज्ञीयस्याक्रियमाणस्य योनिशंसनं कर्तव्यमित्यर्थः । तथा सतीति । कथं सतीत्युक्तं भवति । अयमभिप्रायः–प्रकृत्येति योनिशंसनाभाव उच्यते । तथासति, तस्मिन्नेव शस्त्रे स्तोत्रियत्वेन शंसने सतीत्यर्थः । अनेन प्रकारेण तद्भावभावित्वमुक्तं भवति । अतः सिद्धमन्यत्रापि यत्र स्तोत्रियत्वेन यस्मिञ्शस्त्रे शंसनमस्ति तस्मिञ्शस्त्रे योनित्वेनापि शंसनं तासामृ[३]चां न भवतीति । अत्रैतावान्प्रयोजकोंऽशः–एकस्मिञ्शस्त्रे स्तोत्रियत्वेन शस्तस्य पुनरपि तस्मिन्नेव शस्त्रे[४] योनित्वेन[५] शंसनं भवतीति । [६]नात्राक्रियमाणता, अस्वयोनिभाविता वा विशेषहेतुः । अतः स्तोत्रियानुरूपान्तरुक्थ्यपक्षे सामस्तोत्रियानुरूपान्तरुक्थ्यपक्षे च यज्ञायज्ञीयस्य यथोक्तं योनिशंसनं कर्तव्यम् ॥ ६ ॥

**श्येनाजिराभ्यामभिचरन्यजेत ।**

श्येनश्चाजिरश्च द्वावेकाहौ ताभ्यामभिचरन्यजेत । अभिपूर्वश्चरतिर्हिंसायां वर्तते । अभिचरञ्शत्रून्मारयन्नित्यर्थः ।

**अहं मनुर्गर्भे नु संस्त्वया मन्यो यस्ते मन्यविति मध्यंदिनौ ।**

यथासंख्येनोभयोर्भवतः ।

**शेषो बृहस्पतिसवेन ।**

अनयोर्माध्यंदिनाभ्यामन्यो यः शस्यविशेषः स बृहस्पतिसवेन व्याख्यातः ।

**संनद्धा लोहितोष्णीषा निस्त्रिंशिनो याजयेयुः ।**

युद्धोपकरणैः कवचादिभिः सम्यग्बद्धा इत्यत्र विवक्ष्यन्ते । लोहितवासोभिर्वेष्टितशिरसो लोहितोष्णीषा उच्यन्ते । निस्त्रिंशोऽसिः खड्गो वा स[८] येषां[९] हस्तेषु भवति ते निस्त्रिंशिन इत्युच्यन्ते । याजयेयुरितिवचनं सदस्यचमसाध्वर्युशामित्रनिवृत्त्यर्थम् ।

---

१ ब. °ण नि° । २ च. °नामधेयैः स्तु° । ३ ख. °चां तत्र न । ४ च. °निशं° । ५ [illegible] । ६ ग. घ. ङ. झ. नात्र क्रि° । ७ ब. ङ. च. झ. °भावता । ८ घ. च. °मितृनि° ।

**शरमयं बर्हिः ।**

शरो नाम वेणुसदृशस्तन्मयं बर्हिर्भवति ।

**मौसलाः परिधयः ।**

मौसला मुसलमया मुसलरूपा इत्यर्थः ।

**वैभीतक इध्मः ।**

बिभीतको नाम तरुविशेषस्तन्मय इध्मो भवति ।

**बाघातको वा ।**

बाघातकश्च वृक्षविशेषस्तन्मयो वा भवति ।

**अपगूर्याऽऽश्रावयेत् ।**

स्रुचावुत्क्षिप्यापगुरयन्निवाऽऽश्रावयेत् ।

**प्रत्याश्रावयेच्च ।**

[ * स्रुचमुत्क्षिप्यावगुरयन्प्रत्याश्रावयेच्च ] ।

**छिन्दन्निव वषट् कुर्यात् ।**

वषट्कारशब्दे छेदनं नामास्निग्धता वर्णानां तीक्ष्णता च । अथ वा वषट्कारोच्चारणकाले मनसा शत्रून्दारयन्निव स्यात् ।

**क्षिपन्निव जुहुयात् ।**

स्रुचाऽङ्गारान्प्रेषयन्निव मनसा शत्रून्प्रेषयन्निव स्यात् ।

**साद्यस्क्रेषूर्वरा वेदिः ।**

अभिचरणीयेषु साधारणधर्मा उक्ता इदानीं साद्यस्क्रेषु साधारणधर्मा उच्यन्ते । साद्यस्क्रा नाम सोमयागाः सदीक्षोपसत्का एकस्मिन्नहनि क्रियन्ते तेषूर्वरा वेदिः । सस्यवती भूमिर्वेदिर्भवतीत्यर्थः ।

**खल उत्तरवेदिः ।**

यस्मिन्प्रदेशे धान्यानि पूलैर्विविच्यन्तेऽनडुद्भिः स प्रदेशः खल इत्युच्यते ।

**खलेवाली यूपः ।**

खलमध्येऽनडुद्भिर्भ्रमणे क्रियमाणे तद्बन्धनार्था मेथी खलेवालीत्युच्यते । खलेऽनडुहो वारयतीति खलेवाली ।

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थश्च पुस्तकस्थः ।

---

१ च. °नाम स्नि° । २ च. °रान्प्रेष° । ३ च. °त्रून्प्रेष° ।

**स्फ्यग्रो यूपः ।**

स्फ्यस्येवाग्रं तीक्ष्णं यस्य स स्फ्यग्रः । स्फ्याग्र इत्यर्थः । ह्रस्वश्छान्दसः । एवं यूपो भवति ।

**अचषालः ।**

अस्य यूपश्चषालरहितश्च भवति ।

**कलापी चषालः ।**

सा मेथ्यग्रप्रदेशो धान्यपूलैर्बद्धा तिष्ठति स एव चषालो भवतीति ।

**इत्यागन्तुका विकाराः ।**

इत्येतेऽनुक्रान्ता धर्मा आगन्तुका विकारा वेदितव्याः । अप्राकृता धर्मा आगन्तुका इत्युच्यन्ते । प्राकृतेष्वेव विशेषविधयो विकारा उच्यन्ते । तत्र संनद्धा लोहितोष्णीषा इत्येवंप्रकारा आगन्तुकाः । शरमयं बर्हिरुर्वरा वेदिरित्यादयो विकाराः ।

**अन्यांश्चाध्वर्यवो विदुः ।**

अध्वर्यवोऽन्यांश्चाऽऽगन्तुकान्विकारांश्चाऽऽमनन्ति ते सर्वेऽस्माभिरनुष्ठेया इत्यर्थः ।

**सिद्धे तु शस्ये होता संप्रैषान्वयः स्यात् ।**[2]

शस्यग्रहणमनुवचनादीनामपि प्रदर्शनार्थम् । सिद्धेऽनुवचनादावस्मच्छास्त्रविहिते[3][4] सति होता संप्रैषान्वयः स्यात् । इदमत्रोदाहरणम् । खलेवाल्यामुच्छ्रयणाभावादञ्जनपरिव्याणयोर्द्वे[5][6] एवर्चावनूच्येते । तत्र प्रकृत्या बहुत्वाभावादभिहिंकाराभ्यासौ न स्याताम् । एवं प्राप्त इदमुच्यते—सिद्धे साभिहिंकाराभ्यासेऽनुवचने सति होत्रा संप्रैषानुसारेण तावन्मात्रमनुवक्तव्यं नान्यो विकार उत्पादयितव्य इत्यर्थः । अन्यदप्येवंप्रकारमुदाहरणमन्वेषणीयम् ।

**पाप्या कीर्त्या पिहितो महारोगेण वा यो वाऽलंप्रजननः प्रजां न विन्देत सोऽग्निष्टुता यजेत ।**

पापी कीर्तिर्ब्रह्महत्यादिना जाता तया पिहितश्छन्न इत्यर्थः । महारोगेण वा पिहितः । दीर्घकालानुवर्ती रोगो महारोगः । अथ वाऽऽयुर्वेदप्रसिद्धो महारोगः । यो वाऽलंप्रजननः पर्याप्तप्रजननः पुंस्त्वयुक्त इत्यर्थः । स यदि प्रजां न लभेत । एते त्रयोऽग्निष्टुतोऽधिकारिणः । अग्निष्टुदित्येकाहस्य संज्ञा ।

**तिष्ठा हरी यो जात एवेति मध्यंदिनः सर्वाग्नेयश्चेत्स्तोत्रियानुरूपा आग्नेयाः स्युः ।**

असर्वाग्नेयोऽग्निष्टुदित्युक्तः सर्वाग्नेयत्वमिदानीमुच्यते । यद्ययमग्निष्टुत्सर्वाग्नेयः स्यात्तदा स्तोत्रियानुरूपा आग्नेयीभिः कर्तव्याः ।

---

१ च. °राश्च वे° । २ च. °द्धे तु वं° । ३ च. °नादस्म° । ४ च. °च्छास्त्रे वि° । ५ च. °ल्या त्च्छ्र° । ६ च. °रिव्ययण° ।

**विचारि वा ।**

एवं वा सर्वाग्नेयोऽग्निष्टुद्भवति विचारि वाऽऽग्नेयो भवति । विचारिशब्देनाऽऽगमापायिन उच्यन्ते । अविचारिण इन्द्रनिहवापोहिष्ठीयप्रकारास्तेभ्योऽन्ये विचारिणस्ते सर्वे आग्नेया भवन्तीत्यर्थः ।[1]

**अपि वा सर्वेषु देवताशब्देष्वग्निमेवाभिसंनमेत् ।**

अथ वैवं[2] सर्वाग्नेयोऽग्निष्टुद्भवति । यथाप्राप्ते शस्ये सर्वेषु देवताशब्देष्वग्निशब्दः प्रक्षेप्तव्य[3] इति । अग्निशब्दस्य पुंलिङ्गत्वात्स्त्रीदेवताशब्दस्थानेऽपि पुंलिङ्ग एवाग्निशब्दः प्रयोक्तव्यः । यथा 'पावका नोऽग्निर्वाजेभिः' इति द्विवचनबहुवचने त्वविरोधात्कर्तव्ये एव, यथा 'ऋतेनाग्नी ऋतावृधौ' इति । 'ओमासश्चर्षणीधृतोऽग्नय आगँत'[4] इति देवताशब्देष्वग्निशब्दं प्रक्षिपेदितिवचनात्सिद्धेऽपि सर्वेष्वतिवचनं शस्त्रादिषट्के च जपानुमन्त्रणाप्यायनोपस्थानान्युपांशुजपादिषट्के[5] च सर्वप्रकारे मन्त्रेऽस्य विधेः प्रापणार्थम् ।

**तथा सत्यन्वक्षमिन्द्रस्तुता यजेत ।**

तथासतीत्येभिस्त्रिप्रकारैः सर्वाग्नेयेऽग्निष्टुति सतीत्यर्थः । अन्वक्षं सद्य एवेत्यर्थः । इन्द्रस्तुन्नामैकाहस्तेन यजेत ।

**इन्द्र सोममिन्द्रं स्तवेति मध्यंदिनः ।**

'इन्द्र सोमं सोमपते पिबेमम्' इत्यस्यैव सर्वत्र ग्रहणं त्रैष्टुभत्वान्माध्यंदिनस्य सवनस्य ।

**भूतिकामो वा ग्रामकामो वा प्रजाकामो वोपहव्येन यजेत ।**

भूतिकामो यः स्वाध्यायेन धनेन वा भवितुं कामयते स भूतिकामः । ग्रामकामः प्रसिद्धः । प्रजाकामः पुत्रकामः । एषामन्यतम उपहव्येनैकाहेन यजेत । एष च्छन्दोगानामनिरुक्त[6] इति श्रूयते । इन्द्रस्थाने शक्रशब्दः प्रयोक्तव्यः, सर्वशब्दस्थाने विश्वशब्द इत्यादयो धर्मा अनिरुक्ताः श्रूयन्त इति च्छन्दोगानां प्रसिद्धं ते चास्माभिरनुसरणीयाः ।

**इमा उ त्वा य एक इदिति मध्यंदिन इन्द्राग्न्योः कुलायेन प्रजातिकामः ।**

प्रजातिकाम इति । प्रजाभिः पशुभिश्च महान्भूयासमिति कामयमान इत्यर्थः । इन्द्राग्न्योः कुलायँ इत्येकाहः[7] ।

---

१ च. °रि यथाऽऽग्नेयो भवति तथा प्राप्ते । वि° । २ च. अपि वै° । ३ च. प्रयोक्तव्य । ४ ङ. च. °गते' इ° । ५ क. ग. च °पादि° । ६ च. क्तमः श्रू° । ७ च. °यामित्ये° ।

**तिष्ठा हरी तमु ष्टुहीति मध्यंदिन ऋषभेण विजिगीषमाणः ।**

विजेतुमिच्छन्विजिगीषमाणः ।

**मरुत्वाँ इन्द्र युध्मस्य त इति मध्यंदिनस्तीव्रसोमेनान्नाद्यकामः ।**

तीव्रसोम इत्येकाहः ।

**वचस्य वीरस्तीव्रस्याभिवयस इति मध्यंदिनो विधनेनाभिचरन् ।**

विधन इति क्रतुनाम ।

**तस्य शस्यमजिरेण[1] ।**

शस्यग्रहणं[2] प्रदर्शनार्थं न लोहितोष्णीषादिनिवृत्त्यर्थम् ।

**इन्द्राविष्णोरुत्क्रान्तिना स्वर्गकामः ।**

इन्द्राविष्णोरुत्क्रांन्तिरित्येकाहनाम ।

**इमा उ त्वा द्यौर्नय इन्द्रेति मध्यंदिनो यः कामयेत नैष्णिह्यं पाप्मन इयामिति स ऋतपेयेन यजेत ।**

निस्नेहस्य भावो नैष्णिह्यम् । पाप्मनो नैष्णिह्यं गच्छेयमिति यः कामयेत स ऋतपेयनाम्नैकाहेन यजेत । स्वल्पमपि पापं मयि न तिष्ठेतेति यः कामयेत स ऋतपेयेन यजेतेत्यर्थः ।

**ऋतस्य हि शुरुधः सन्ति पूर्वीरिति सूक्तमुखीये सत्येन चमसान्भक्षयन्ति ।**

सत्यमुक्त्वा भक्षयन्ति ।

**सत्यमियं पृथिवी सत्यमयमग्निः सत्यमयं वायुः सत्यमसावादित्य इति ।**

सत्यमियं पृथिवी सत्यमयमग्निः सत्यमयं वायुः सत्यमसावादित्य इत्येवमुक्त्वा भक्षयन्तीत्यर्थः । अत्र नित्यस्य भक्षणमन्त्रस्य निवृत्तिः ।

**सोमचमसो दक्षिणा ॥ ७ ॥**

'सोमांशुभिः पूर्णं[3] चमसं दक्षिणाकाले सगोत्राय ब्राह्मणाय ददाति ' इति श्रुतिः । ऋत्विगानतावप्युपायान्तरमन्वेषणीयम् ॥ ७ ॥

**अतिमूर्तिना यक्ष्यमाणो मासं सौर्याचान्द्रमसीभ्यामिष्टीभ्यां यजेत ।**

अतिमुर्तिर्दूणाशो बहुसुवर्ण इत्येकाहस्य त्रीणि नामानि । अनेन यक्ष्यमाणः पुरस्तादेकं मासं सौर्याचान्द्रमसीभ्यामिष्टीभ्यां यजेत । सूर्योऽस्या देवतेति सौरी । सौर्येत्याका-

---

१ ग । तस्य श° । २ च. °णं शस्यग्र° । ३ क. ङ. झ. पूर्णां च° ।

रान्तानिर्देशश्छान्दसः । चन्द्रमा देवताऽस्या इति चान्द्रमसी । एताभ्यामिष्टीभ्यां यजेत ।

कथमित्यपेक्षायामेतदाह—

**शुक्लं चान्द्रमस्या सौर्ययेतरम् ।**

शुक्लपक्षमहरहश्चान्द्रमस्या यजेत । इतरं कृष्णमहरहः सौर्यया यजेत । ततोऽतिमुर्तिना यष्टव्यम् ।

**अत्राह गोरमन्वत नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः ।**

याज्यानुवाक्याग्रहणं सूक्तमुखीयत्वसंशयनिवृत्त्यर्थम् । इतरथा षळृचोऽनुक्रम्य सूक्तमुखीये इत्युक्त आसामन्यतमे इति प्रतिभासः स्यात्तन्निवृत्त्यर्थमिति ।

**स ईं महीं धुनिमेतोररम्णात्स्वप्नेनाभ्युप्याचुमुरिं धुनिं चेति सूक्तमुखीये ।**

अतिमूर्तिन एते सूक्तमुखीये ।

**सूर्यस्तुता यशस्कामः ।**

सूर्यस्तुदेकाहः, यशः कीर्तिः ।

**पिबा सोममभीन्द्रं स्तवेति मध्यंदिनः । व्योम्नाऽन्नाद्यकामः ।**

व्योमेत्येकाहनाम ।

**विश्वदेवस्तुता यशस्कामः ।**

विश्वदेवस्तुदित्येकाहनाम ।

**पञ्चशारदीयेन पशुकामः ।**

पञ्चशारदीय एकाहः ।

**एतेषां त्रयाणां कयाशुभातदिदासेति मध्यंदिनः । उभयसामानौ पूर्वौ ।**

व्योमविश्वदेवस्तुतावित्यर्थः ।

**उक्थ्यः पञ्चशारदीयो विशो विशो वो अतिथिमित्याज्यम् ।**

पञ्चशारदीय एतदाज्यं भवति ।

**कण्वरथंतरं पृष्ठम् ।**

पञ्चशारदीयस्यैव ।

**गोसवविवधौ पशुकामः ।**

गोसवो विवधश्चैकाहौ तयोरेकैकः पशुकामस्य ।

**इन्द्र सोममेतायामेति मध्यंदिनः ।**

गोसवविवधयोरुभयोरप्येष एव[1] मध्यंदिनः ।

**दश सहस्राणि दक्षिणाः ।**

दक्षिणाश्च द्वयोरेकैकस्य सर्वाः ।

**षोडशैकाहाः ।**

अतः परं षोडशैकाहास्ते चोद्भिदादयो राशिमर्यायान्ताः[2] ।

**आयुर्गौरिति व्यत्यासम् ।**

तेषां षोडशानामायुर्गौश्च प्रकृती भवतः । व्यत्यासमिति । अयुजामायुर्युजां गौरित्येवं व्यत्यासः प्रथमस्यायुर्द्वितीयस्य गौस्तृतीयस्याऽऽयुरित्यर्थः[3] ।

**उद्भिद्बलभिदौ स्वर्गकामः ।**

तेषामाद्यावुद्भिच्च बलभिच्च तौ स्वर्गकामस्य । ये द्वंद्वशो विहिता एकाहास्ते यमयज्ञा वेदितव्याः । तेषु सर्वेषु यमयज्ञेषु पूर्वेण यागं कृत्वाऽनन्तरमेवोत्तरेण यागः कर्तव्यः । अथ वा च्छन्दोगप्रत्ययादेव यमयज्ञानां गतिर्भवेत् । एतेषु माध्यंदिने विधिरायुषो गोश्च प्राप्ते तावन्मात्रापवादः ।

**इन्द्र सोममिन्द्रः पूर्भिदिति मध्यंदिनः ।**

उद्भिद्बलभिदोरेष[4] माध्यंदिनः ।

**विनुत्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते ।**

विनुतिरभिभूतिश्च द्वौ । इषुश्च वज्रश्च द्वौ । द्वयोर्यमयोर्मन्युसूक्ते ' त्वया मन्यो यस्ते मन्यो ' इत्येते मध्यंदिनो[5] भवतीत्यर्थः ।

**अभिचरन्यजेत ।**

तावेव द्वौ द्वावभिचरतो भवतः । एतत्सर्वं पूर्वसूत्रस्थेन चशब्देन लभ्यते ।

**त्विष्यमाचित्योः सम्राट्स्वराजो**
**विराड्विराजोः शदस्य चैकाहिके ।**

त्विषिश्चापचितिश्च द्वौ । सम्राट्स्वराट्च द्वौ । राट्च विराट्च द्वौ । शदश्चैकः । एतेषां सप्तानामैकाहिके ' जनिष्ठा उग्र इन्द्रस्य नु वीर्याणि ' इत्येते[6] मध्यंदिनो भवतीत्यर्थः ।

---

१ क. ङ. झ. °व माध्यं° । २ च. °राशया° । ३ च. °रित्येवमर्थः । ४ घ. ङ. झ. °लविदो° । ५ घ. ङ. क्ष. °दिने भ° । ६ घ. ङ. झ. °ते माध्यं° ।

**उपशदस्य राशिमराययोश्च कयाशुभीयतदिदासीये ।**

उपशदश्चैकः, राशिश्च मरायश्च द्वौ तेषां कयाशुभीयतदिदासीये मध्यंदिनो भवतीत्यर्थः ।

**भूतिकामराज्यकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम् ।**

षोडशानां मध्ये त्विष्यादीनामनुक्तकामानामेते कामा भवन्ति ।

**एते कामा द्वयोर्द्वयोः ।**

त्विष्यादीनां द्वयोर्द्वयोरेतेषामेकैकः[1] कामो यथासंख्येन भवति ।

**ऋषिस्तोमा व्रात्यस्तोमाश्च पृष्ठ्याहानि ।**

ऋषिस्तोमा नाम सप्तैकाहाः । व्रात्यस्तोमा नाम च सप्तैव । तेषां चोभयेषां पृष्ठ्याहानि यथासंख्येन प्रकृतिभूतानि भवन्ति । प्रथमस्य प्रथमेनेत्येवम् । उभयत्र सप्तमो ज्योतिष्टोमः प्रकृतिः ।

**नाकसद् ऋतुस्तोमा दिक्स्तोमाश्चाभिप्लवाहानि ॥ ८ ॥**

नाकसद् इति षडेकाहा एको गणः । ऋतुस्तोमनामानश्च षडेकाहा दिक्स्तोमनामानश्च षडेकाहा द्वावेतौ गणौ । एतेषां त्रयाणामभिप्लवाहानि प्रकृतिरेकैकस्य गणस्य यथासंख्येनैव पूर्ववद्भवति ॥ ८ ॥

**वाजपेयेनाऽऽधिपत्यकामः ।**

आधिपत्यमाधिक्येन स्वाम्यं तत्कामो वाजपेयेन यजेत ।

**सप्तदश दीक्षाः ।**

तस्य वाजपेयस्य सप्तदश दीक्षा भवन्ति । एकाहानामेका तिस्रो वा दीक्षा इत्यस्यायमपवादः ।

**सप्तदशापवर्गो वा ।**

सप्तदशभिरहोभिरपवृज्यते समाप्यते यः स सप्तदशापवर्गः । तदा त्रयोदश दीक्षास्तिस्र उपसद एका सुत्येति कल्पना ।

**हिरण्यस्रज ऋत्विजो याजयेयुः ।**

हिरण्मयीभिः स्रग्भिर्भूषिता हिरण्यस्रज इत्युच्यन्ते । अत्रर्त्विग्ग्रहणं चमसाध्वर्युशमित्रादिनिवृत्त्यर्थम् ।

**वज्राकिञ्जल्का शतपुष्करा होतुः ।**

होतुः स्रगेवं भवति । हिरण्मयैः शतेन पुष्करैः कृतानि च तानि पुष्कराणि वज्रना-

---

१ च, °रेकैकस्यैके° ।

मकै रत्नविशेषैः कृताकिङ्कल्कानि भवन्ति । किङ्कल्कपुष्करशब्दाभ्यां स्रगेव विशेष्यतेऽपा[1]र्ष्ठिकः परस्परसंबन्धः ।

**विश्वजिदाज्यं कयाशुभातदिदासेति मध्यंदिनः संस्थिते मरुत्वतीये बार्हस्पत्येष्टिः ।**

बृहस्पतिरस्या देवतेति बार्हस्पत्या ।

**आज्यभागप्रभृतीळान्ता बृहस्पतिः प्रथमं जायमानो बृहस्पतिः समजयद्वसूनि त्वामीळते अजिरं दूत्यायाग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये ।**

अत्र बृहस्पतेरादेशो न कर्तव्यः, सौमिकीभ्यश्चेतिवचनादाज्यभागयोः स्विष्टकृति चाऽऽदेशः कर्तव्य एव ।

**यदि त्वध्वर्यव आजिं जापयेयुरथ ब्रह्मा तीर्थदेशे मयूखे चक्रं प्रतिमुक्तं तदारुह्य प्रदक्षिणमावर्त्यमाने वाजिनां साम गायादाविर्मर्या आवाजं वाजिनो अग्मन्देवस्य सवितुः सवे स्वर्गां अर्वन्तो जयतः स्वर्गाँ अर्वतो जयतीति वा ।**

यदि तु, यदेत्यर्थः । यदाऽध्वर्यव आजिं जापयन्ति यजमानम् । आजिं नाम[2] लक्षणं जापयेयुर्गमयेयुरित्यर्थः । एतदुक्तं भवति—यदा त्वध्वर्यवो यजमानमाजिं गमयेयुस्तदा ब्रह्मा तीर्थदेशे मयूखं [3]निधाय । मयूखमक्षमित्यर्थः । तस्मिन्रथचक्रं प्रतिमुच्य तदारुह्याऽऽस्ते । तच्चक्रं प्रदक्षिणमावर्तयन्ति[4] ये केचन पुरुषास्तदा ब्रह्मा वाजिनां साम गायति । ' आविर्मर्या आवाजम् ' इत्यस्यामृचि गीतं तत्साम । एषा ऋक्पुर उष्णिक् । अर्वन्तः, अर्वत इति वा तृतीये पादे[6] द्वितीयं पदं पठितव्यम्, उभयथा समाम्नायदर्शनात् । अस्यार्थस्य ज्ञापनार्थं तृतीयः पादः सूत्रकारेण द्विः पठ्यते ।

**यदि साम नाधीयान्निरेतामृचं जपेत्तृतीयेनाऽऽभिप्लविकेनोक्तं तृतीयसवनं चित्रवतीषु चेत्स्तुवीरंस्त्वं नश्चित्र ऊत्याऽग्ने विवस्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ षोळशी त्विह ।**

तृतीयस्याह्न उक्थ्यसंस्थत्वात्षोळशी विधीयते ।

---

१ °ते । पा° । २ च. °म क्ष° । ३ च. निखाय । ४ च. °न्ति केचित्पुरु° । ६ च. °ढे पत्रि° । ७ ग. पादं ।

**तस्मादूर्ध्वमतिरिक्तोक्थम् ।**

तस्मादूर्ध्वमिति । षोळशिन ऊर्ध्वमित्यर्थः । अनेन कथनेन यत्र षोळशी नास्ति तत्रातिरिक्तोक्थमपि नास्तीति गम्यते । अनेन प्रकारेणाषोळशिको वाजपेयोऽस्तीति साधितं भवति ।[1]

**प्रतत्ते अद्य शिपिविष्टनाम प्र तद्विष्णुः स्तवते वीर्येणेति स्तोत्रियानुरूपौ ।**

एवमतिरिक्तोक्थं भवति ।

**ब्रह्म जज्ञानं प्रथमं पुरस्ताद्यत्ते दित्सु प्रराध्यं त्वामिच्छवसस्पते ।**

एतानि त्रीणि ग्रहणानि ।[2]

**तं प्रत्नथेति त्रयोदशानामेकां शिष्ट्वाऽऽहूय दूरोहणं रोहेत् ।**

तं प्रत्नथेति त्रयोदशर्चः शंस्तव्यास्तासामृचामेकामवशिष्याऽऽहूय दूरोहणं रोहेत् । आहूयेतिवचनं षष्ठे त्वेव पृष्ठ्याहन्यहरहःशस्यस्येत्येतस्मिन्दूरोहण आहावाभावादत्राप्याहावाभावशङ्का स्यात्तन्निवृत्त्यर्थमुच्यते ।

**बृहस्पते युवमिन्द्रश्च वस्व इति परिधानीया विभ्राड्बृहत्पिबतु सोम्यं मध्विति याज्या तस्य गवां शतानामश्वरथानामश्वानां साद्यानां वह्यानां महानसानां दासीनां निष्ककण्ठीनां हस्तिनां हिरण्यकक्ष्याणां सप्तदश सप्तदशानि दक्षिणाः ।**[3]

तस्य सप्तदशानि दक्षिणा दातव्या । तस्येतिवचनं सषोळशिकस्यैवायं दक्षिणाविधिरिति ज्ञापनार्थम् । इतरथा प्रकृतत्वादषोळशिकस्यापि स्यात्तन्निवृत्त्यर्थं तस्येत्युच्यते । तेनाषोळशिकस्य न्यायक्लृप्त्यैव दक्षिणा भवति । गवां शतानां सप्तदशेति संबन्धः । शतशब्दो गोभिरेव संबध्यते नोत्तरैः । अश्वैर्युक्ता रथा अश्वरथास्तेषां सप्तदश, अश्वानां सप्तदश । येषु सीदन्ति पुरुषास्ते साद्या अश्वादयः पृष्ठवाहिन इत्यर्थस्तेषां च सप्तदश । वह्या वहनसमर्थास्तेषामपि सप्तदश । महान्ति चानांसि चेति महानांसि तेषामपि सप्तदश । निष्कं नामाऽऽभरणविशेषस्तेन कण्ठे भूषिता निष्ककण्ठ्यः, एवंभूतानां दासीनां सप्तदश ।

---

१ ग. °रेण षो° । २ च. प्रतीकानि । ३ च. क्षिप्य । त° । ४ व. ङ. च. झ. तव्याः । त° । ५ च. °क्तैव । ६ ङ. °वाहना इ° । ७ क. ग. घ. ङ. झ. °श । वाह्या° । ८ क. ग. घ. च. झ. °हानसानि ते° ।

हिरण्मयः कक्ष्यो येषां ते हिरण्यकक्ष्याः, एवंभूतानां हस्तिनां सप्तदश। एतेषां द्रव्याणां सप्तदश सप्तदश दातव्याः। सा दक्षिणा सषोळशिकस्य वाजपेयस्येत्यर्थः। सप्तदश सप्तदश दक्षिणेति पाठः कर्तव्यः, सप्तदश सप्तदशानीत्यस्यापपाठत्वात्।

**दशान्ये दक्षिणागणा धनानां शतावमापरार्ध्यानाम्।**

शतावमापराध्यानामिति। शतावमानां शतप्रभृतीनामित्यर्थः। परार्ध्यं परावधिस्तद्यस्य नास्ति तदपरार्ध्यमित्युच्यते। अपरिमितपरावधीनामित्यर्थः। शतप्रभृतीनामपरिमितपरावधीनामित्युक्ते द्विशतात्प्रागेव परावधिर्भवति। एतदुक्तं भवति—गवादीनां द्रव्याणां सप्तदशसंख्यायुक्ता अष्टौ गणा दक्षिणात्वेनोक्ताः[1] सूत्रे, इदानीमन्ये दश गणाः शतप्रभृत्यपरिमितसंख्यायुक्ता येषां केषांचिद्धनानां संबन्धिनोऽस्य[3] दक्षिणा भवन्ति। पूर्वैणास्य विकल्पोऽर्थात्कल्प्यते।

**पूर्वान्वा गणशोऽभ्यस्येत्।**

यद्यन्यानि धनानि न सन्ति तदा पूर्वेषां गवादीनामेकैकस्य[4] द्रव्यस्य दशकृत्वोऽभ्यस्य दश[5] गणान्संपाद्य दक्षिणां दद्यात्।

अन्येषां धनानामसंभवे—

**सप्तदश सप्तदश संपादयेत्।**

एवमप्यसंभवे यानि कानिचिद्द्रव्याणि सप्तदशसंख्यायुक्तानि सप्तदश दातव्यानीत्ययमपरो दक्षिणाकल्पः। एवमेते चत्वारो दक्षिणाकल्पाः सषोडशिकस्य वाजपेयस्य।

**इति वाजपेयः।**

इत्येवंप्रकाराः सर्वे वाजपेया इत्यर्थः। एकवचनं जात्यभिप्रायम्।

**तेनेष्ट्वा राजा राजसूयेन यजेत**
**ब्राह्मणो बृहस्पतिसवेन ॥९॥**

अनयोरेवानुकीर्तनाद्वैश्यस्यायं नास्तीति गम्यते ॥ ९ ॥

**अनिरुक्तस्य चतुर्विंशेन प्रातःसवनं च तृतीयसवनं च।**

अनिरुक्तो नामैकाहः।

**तं प्रत्नथेति तु त्रयोदश वैश्वदेवम्।**

'यज्ञस्य वो रथ्यम्' इति वैश्वदेवम्, अस्यायमपवादः।

---

१ क. ग. ङ. °ण्मय्यः क°। २ च. °क्ताः पूर्वमू°। ३ ग. घ. ङ. च. झ. °न्धिन्योऽस्य। ४ च. °स्य वा द्र°। ५ क. घ. ङ. झ. °श गुणा°।

कयाशुभातदिदासेति मध्यंदिनः ।

ऐकाहिकं माध्यंदिनं सवनं तस्यायं मध्यंदिनः ।

होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमान्त्संपाताञ्शंसेयुः ।

होत्रका[1] माध्यंदिने सवने स्तोत्रियानुरूपाञ्शस्त्वा प्रगाथानन्तरं प्रथमान्संपातान् ' एवा त्वामिन्द्रेन्द्रः पूर्भिदिमामूषु ' इत्येताञ्शंसेयुः ।

अहीनसूक्तानि वा ।

अहीनसूक्तानि ' आ सत्यो यात्वस्मा इदु शासद्वह्निः ' इत्येतानि वा प्रगाथानन्तरं शंसेयुः । एवं द्विसूक्ता होत्रका भवन्ति । मैत्रावरुणाच्छावाकयोः संपातपक्षे तस्यैव द्विःशंसने प्राप्ते तद्दैवतमन्यमित्येतत्कर्तव्यम् । ब्राह्मणाच्छंसिनो यथाप्रकृत्यैव । अहीनसूक्तपक्षे प्रगाथानन्तरमेवाहीनसूक्तानि ततोऽन्त्यान्यैकाहिकानि ।

एवं पूर्वे सवने बृहत्पृष्ठेष्वसमाम्नातेषु ।

असमाम्नाता ये बृहत्पृष्ठा एका[3]हास्तेष्वेवं पूर्वे सवने भवतः प्रातःसवनं माध्यंदिनं च यथानिरुक्ते भवतः ।

प्रतिकामं विश्वजिच्छिल्पः ।

कामं कामं प्रतीति प्रतिकामं, यो यो य यं कामं कामयते स स विश्वजिच्छिल्पनाम्नैकाहेन यजेत ।

तस्य समानं विश्वजिताऽऽ प्रगाथेभ्यः ।

तस्य विश्वजिच्छिल्पस्य शंसनं विश्वजिता समानम् । माध्यंदिने सवने होत्रकाणां ये प्रगाथा आ तेभ्य इति ।

बृहस्पतिसवेनाऽऽज्यं निष्केवल्यमरुत्वतीयौ च तृचौ ।

बृहस्पति[4]सवेन व्याख्यातौ ।

ताभ्यां तु पूर्वे ऐकाहिके ।

' इन्द्र मरुत्व इह नृणामु त्वा ' इत्येताभ्यां पूर्वे ' जनिष्ठा उग्र इन्द्रस्य नु वीर्याणि ' इत्येते सूक्ते शंस्तव्ये ।

होत्रका ऊर्ध्वं प्रगाथेभ्यः शिल्पान्यविकृतानि शंसेयुः ।

शिल्पानि वालखिल्यादीनि विहारन्यूङ्खादिरहितानि शंस्तव्यानि । तौ चेदग्निष्टोमौ यदि वोक्थ्येष्वद्विपदास्वित्येतस्मिन्प्रकरणे यथोक्तं तथा[5]ऽत्रापि शंसनीयानीत्यर्थः ।

---

१ क. ङ. झ. °का मध्यं° । २ घ. ङ. झ. °यानन्तु° । ३ ङ. झ. °काहि कास्ते° । ४ क. °सवनेन । ५ च. °था तत्रा° ।

**साम सूक्तानि च ।**

शिलानन्तरं सामसूक्तानि च शंसनीयानि ।

**आद्यांस्तृचानहीनसूक्तानाम् ।**

अहीनसूक्तानां चाऽऽद्यांस्तृचाञ्शंसेयुः ।

**अन्त्यानामैकाहिकानामुत्तमान् ।**

उत्तमानिति । तृचानिति शेषः ।

**समानं तृतीयसवनं बृहस्पतिसवेन नाभा-नेदिष्ठस्त्विह पूर्वो वैश्वदेवात्तृचात् ।**

बृहस्पतिसवे वैश्वदेवं सूक्तं ‘ स्वस्ति नो मिमीतामश्विना ’ इत्ययं तृचस्तस्मात्पूर्वो नाभानेदिष्ठो भवति । नाभानेदिष्ठेति । ‘ इदमित्था ’ इति सूक्तद्वयस्याऽऽख्या ।

**एवयामरुच्चाऽऽग्निमारुते मारुतात् ।**

पूर्वो भवतीति शेषः । आग्निमारुते मारुतं सूक्तं ‘ प्रयन्तु वाजाः ’ इति तृचस्तस्मात्पूर्वमेवयामरुद्भवति ।

**तयोरुक्तः शस्योपायः ॥ १० ॥**

तयोरेवयामरुन्नाभानेदिष्ठयोः शस्योपाय उक्तः । एवयामरुतः पच्छः समासमुत्तमे पद इति । नाभानेदिष्ठस्य प्रागुपोत्तमाया ये यज्ञेनेत्यवपेदित्यादि ॥ १० ॥

**यस्य पशवो नोपधरेरन्नन्यान्वाऽभिज-नान्निनीत्सेत सोऽप्तोर्यामेण यजेत ।**

नोपधरेरन्न तिष्ठेयुः । न दृश्येयुरित्यर्थः । यस्यैवं पशवो भवन्ति सोऽप्तोर्यामेणैकाहेन यजेत । अथ वा विद्यमानेष्वेव पशुष्वन्यान्पशूनभिजातानभितः स्थितानित्यर्थः । निनीत्सेत । निदि कुत्सायामित्ययं धातुरप्राप्तौ वर्तते सन्नन्तश्च । रूपसिद्धिश्च कथंचिद्द्रष्टव्या । अशक्या चेच्छान्दसो भवत्ययं शब्दः । अर्थश्चायमेव । एवं वा योजना—अन्यानभिजनान्कुलीनानित्यर्थः । यस्तानाप्तुमिच्छेत्स वाऽनेन यजेत ।

**माध्यंदिने शिल्पयोनिवर्जमुक्तो विश्वजिता ।**

अयमप्तोर्यामः सात्रिकेण विश्वजिता व्याख्यातः । तत्रायं विशेषः—विश्वजिति तौ चेदाग्निष्टोमौ यदि वोक्थ्येष्वद्विपदासु स्तुवीरन्निति । माध्यंदिने शिल्पप्राप्तौ निमित्तद्वयमुक्तं तत्राग्निष्टोमत्वासंभवादप्तोर्यामः स्यात्, द्विपदास्तवनमेवात्र माध्यंदिने शिल्पप्राप्ते-

---

१ घ. ङ. च. झ. °त्यादि° ॥ १० ॥ २ घ. ङ. च. झ. °स्त्र प्रा° ।

निमित्तं, तद्वर्जनार्थमत्र शिल्पग्रहणम् । नित्यशिल्पत्वाद्विश्वजितस्तस्यातिदेशाद्द्वयपर्युदासः कृतः शिल्पग्रहणेनेत्यर्थः । योनिग्रहणं चैवमेव द्रष्टव्यम् । चतुर्विंशातिदेशाद्विश्वजितो निष्केवल्ये योनिशंसनं प्राप्तं तच्च विश्वजित्येव होत्रकाणां विहितं योनिशंसनं, तस्योभयस्य पर्युदासार्थं योनिग्रहणमिति । यत्पुनः सामान्यविहितमक्रियमाणानां[3] स्वयोनिभावनिमित्तं तदत्र न प्रतिषिध्यते ।

एकाहेन ।

एकाहेन वाऽयमप्तोर्यामो व्याख्यातः । एकाहशब्देनात्र ज्योतिष्टोमो गृह्यते ।

गर्भकारं चेत्स्तुवीरंस्तथैव स्तोत्रियानुरूपान् ।

शंसेदिति शेषः ।

रथंतरेणाग्रे ततो वैराजेन ततो रथंतरेण ।

अनेन गर्भकारस्वरूपमुच्यते ।

बृहद्वैराजाभ्यां वैवमेव ।

एवमेवेति । गर्भकारमेवेत्यर्थः ।

वामदेव्यशाक्वरे मैत्रावरुणस्य
नौधसवैरूपे ब्राह्मणाच्छंसिनः ।

रथंतरपृष्ठपक्ष एते ।

श्यैतवैरूपे वा ।

बृहत्पृष्ठपक्ष एते ।

कालेयरैवते अच्छावाकस्य ।

सर्वत्रैवमेवेत्यनुवर्तते ।

सामानन्तर्येण द्वौ द्वौ प्रगाथावगर्भकारम् ।

विश्वजिति ता अन्तरेण कद्गतश्चेति सामप्रगाथानां पूर्वमेव प्रवेश उक्तस्तन्निवृत्त्यर्थं सामानन्तर्येणेत्युक्तम् । द्वौ द्वाविति । नित्यसामप्रगाथावित्यर्थः ।

अतिरात्रास्त्विह ।

ऊर्ध्वमाश्विनादित्यादिना वक्ष्यमाणेनैव वचनेनातिरात्रत्वे सिद्ध इदं वचनं षोडशिनि चातिरात्र इत्येवमाद्यतिरात्रधर्मप्राप्त्यर्थम् ।

---

१ क. ग. ङ. झ. °शाद्वयं प° । च. °शाद्वयं प° । २ ङ. झ. तस्य । ३ क. च. °णास्व° । ४ च. °जिता अ° ।

**अद्वैपदोक्थ्यश्चेद्वैषुवतं तृतीयसवनम् ।**

विश्वजिदतिदेशादुत्तमेन पृष्ठयाह्ना तृतीयसवनं प्राप्तं तस्यायमद्वैपदोक्थ्यनिमित्तोऽयमपवादः । अद्वैपदोक्थ्यश्चेद्वैषुवतं तृतीयसवनमिति ।

**ऊर्ध्वमाश्विनादतिरिक्तोक्थानि ।**

अतिरिक्तोक्थानीति शस्त्रनामानि, तानि शस्त्राणि होतुर्होत्रकाणां च ।

**जरा बोध तद्विविड्ढि जरमाणः समिध्यसेऽग्निनेन्द्रेणाऽऽमात्यग्निः क्षेत्रस्य पतिना वयमिति परिधानीया युवं देवा क्रतुना पूर्व्येणेति याज्या ।**

द्वे सूक्ते पच्छः । अर्वाग्रथं तृचस्योक्तः शंसनविधिः पच्छोऽर्धर्चश: पङ्क्तित इति ।

**यदद्य कच्च वृत्रहन्नुदघेदभिश्रुता मघमानो विश्वाभिः प्रातर्यावाणा क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया युवां देवास्त्रय एकादशास इति याज्या ।**

प्रातर्यावाणेति सूक्तं परिधानीया च पच्छः ।

**तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा नूनमश्विना तं वां रथं मधुमतीरोषधीर्द्याव आप इति परिधानीया पनाय्यं तदश्विना कृतं वामिति याज्या ।**

'यद्वान्कक्षीवान्यदिन्द्रेण स रथम्' इत्येते ऋचौ, 'तं वां रथम्' इति सूक्तं परिधानीया च पच्छः।

**अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ ।**

'अतो देवा अवन्तु नः' इत्याद्याः षळृच इत्यर्थः ।

**उत नो धियो गो अग्रा इति वाऽनुरूपस्योत्तमा ।**

इदं विष्णुर्विचक्रमे' इत्येवमाद्याः पञ्चर्चो गृहीत्वा 'उत नो धियः' इत्येतां वा षष्ठीं कुर्यादित्यर्थः ।

**ईळे द्यावापृथिवी उभा उ नूनं दैव्या होतारा प्रथमा पुरोहितेति परिधानीयाऽयं वां भागो निहितो यजत्रेति याज्या ।**

द्वे सूक्ते परिधानीया च पच्छः ।

**यदि नाधीयात्पुराणमोकः सख्यं शिवं वामिति चतस्रो याज्याः ।**

यद्येता ऋचो नाधीयात्तदा पुराणमोकः सख्यमित्याद्याश्चतस्र ऋचो याज्या भवन्ति । एतासामध्ययने यत्किंचिद्व्रतमस्ति तच्चानुष्ठातुमशक्यमिति यदि नाधीयादित्युक्तम् । एतच्च भाष्यकारवचनादवगतम् । एषां चमसानामाश्विनत्व एता याज्या भवन्ति । आग्नेयैन्द्रवैश्वदेववैष्णवत्वे त्वेता याज्या भवन्ति 'यथा होतरस्मै वयं स्तीर्णे बर्हिषि समिधाने परो मात्रया' इति ।

**तद्वो गाय सुते सचा स्तोत्रमिन्द्राय गायत त्यमु वः सत्रासाहं सत्रा ते अनुकृष्टय इति वा स्तोत्रियानुरूपाः ।**

एते द्वे स्तोत्रियानुरूपयुगले लिङ्गान्मध्यमयोः शस्त्रयोर्भवतः ।

**अपरिमिताः परःसहस्रा दक्षिणाः ।**

सहस्रादूर्ध्वं द्विसहस्रादर्वागयथाकाममित्यर्थः ।

**श्वेतश्चाश्वतरीरथो होतुर्होतुः ॥ ११ ॥**

**इति उत्तरषट्के तृतीयोऽध्यायः ॥ ३ ॥**

---

अश्वतरीरथोऽश्वतरीभिर्युक्तो रथो रजतादिभिरन्यैर्वा श्वेतीकृतो होत्रेऽधिको दातव्यः । सर्वाभ्यः क्रतुदक्षिणाभ्योऽधिको होत्रे दातव्य इत्यर्थः ॥ ११ ॥

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायां नवमोऽध्यायः ॥ ९ ॥

---

अथ दशमोऽध्यायः ।

---

**ज्योतिरृद्धिकामस्य ।**

ऋद्धिर्नाम पुत्रपश्वन्नादिभिर्वृद्धिः, तत्कामस्य ज्योतिर्नामैकाहो विधीयते ।

**नवसप्तदशः प्रजातिकामस्य ।**

नवसप्तदशो नामैकाहस्तेन प्रजातिकामो यजेत । प्रजातिकामः प्रजातिं कामयमानः ।

**विषुवत्स्तोमो भ्रातृव्यवतः ।**

विषुवत्स्तोम एकाहः ।

---

१ ग. °वत्वे । २ च. °जातिः प्रजासंपत्तिस्तां का° ।

**गौरभिजिच्च ।**

द्वावेकाहौ भ्रातृव्यवत एव । चशब्दादेकैक एव भ्रातृव्यवतो न संयुक्तौ ।

**गोरुभयसामा सर्वस्तोमो बुभूषतः ।**

अथापरो गोसंज्ञक उच्यते । अनेन विशेषणेनोभयसामा सर्वस्तोमश्च, तेन च बुभूषन्यजेत । बुभूषन्भवितुमिच्छन्महत्त्वमिच्छन्नित्यर्थः ।

**आयुर्दीर्घव्याधेः ।**

यस्य दीर्घकालमनुवृत्तो व्याधिः स दीर्घव्याधिः । आयुरित्येकाहनाम ।

**पशुकामस्य विश्वजिद्ब्रह्मवर्चसकामवीर्यकामप्रजाकामप्रतिष्ठाकामानां पृष्ठ्याहान्यादितः पृथक्कामैः ।**

एतेषां चतुर्णां कामानां चत्वार एकाहाः, एकैकस्यैकैकम् । एतेषां यथासंख्येन प्रकृतयः पृष्ठस्याऽऽदितश्चत्वार्यहानि । पृथक्कामैरितिवचनेन कामानां यथासंख्यं लभ्यते ।

**इत्यतिरात्राः ।**

ज्योतिरादीनामेवायं संस्थाविधिर्न पूर्वेषाम् । पूर्वेषां तु काचित्कचित्संस्था विहितैव ।

**तेषामाद्यास्त्रय ऐकाहिकशस्याः ।**

ज्योतिःसंज्ञकत्वादस्याऽऽभिप्लविकस्य प्रथमस्याह्नत्वेनास्य ज्योतिष्टोमातिदेशः प्राप्नुयात्, विषुवत्स्तोमस्य च विषुवत्ता कथंचित्प्राप्नुयात्तदाशङ्कानिवृत्त्यर्थं त्रयाणामैकाहिकशस्यत्वमुक्तम् ।

**इत्येकाहाः ।**

य एतेऽनुक्रान्ता नवमेऽध्याये क्रतव एवमन्तास्त एकाहसंज्ञा वेदितव्याः । 'अथाहीनाः' इत्यनेनैव पूर्वेषामेकाहत्वे सिद्ध एकाहवचनं वरुणप्रघासस्थाने द्व्यहः साकमेधस्थाने त्र्यह इत्येवमादीनां द्व्यहत्र्यहाणामार्त्विज्यनिषेधादयोऽहीनधर्मा मा भूवन्नित्येवमर्थम् ।

**अथाहीनाः ।**

अथाहीना वक्ष्यन्त इत्यर्थः ।

ते चैवंप्रकारा इत्याह—

**द्व्यहप्रभृतयो द्वादशरात्रपरार्ध्या अग्निष्टोमादयोऽतिरात्रान्ता मासापवर्गा अपरिमाणदीक्षाः ।**

उपसदो द्वादश[3] विहिता[4]: । द्विरात्रादिषु सुत्याहानि द्व्यहादीन्येवं मासस्य[5] शिष्टानि

---

१ च. °कृतः पृष्ठः स्यादि° । २ घ. च. °ह्नस्तेना° । ३ घ. च. °श नियताः । ४ ङ. झ. °ताः । त्रिरा° । ५ च. °सस्यावशि° ।

षोडश पराध्यहानीति तत्प्रभृतीन्येकैकोनान्यहानि षट्पर्यन्तानि यथाक्रमेण द्विरात्रादिषु द्वादशाहपर्यन्तेषु दीक्षाहानीत्यर्थः । एवमेतेन न्यायेन द्वादशाहे मासापवर्गे प्राप्ते वचनात्षट्त्रिंशदहत्वं भवति । असत्यपि परिमाणदीक्षैव स्यात्, न संवत्सरमित्येवमर्थम् ।

**ऐकाहांश्चैतरेयिणः ।**

ऐतरेयिण आचार्या एकाहानपि मासापवर्गानपरिमाणदीक्षामामनन्ति ।

**साहस्रांश्च दक्षिणाः ।**

त एवाऽऽचार्या एकाहेषु सर्वेषु सहस्रदक्षिणत्वमामनन्ति ।

**अतिरात्रांश्च सर्वशः ।**

त एवाऽऽचार्याः सर्वानेकाहानतिरात्रसंस्थानेवाऽऽहुः ।

**तत्राह्नां संख्याः संख्याताः षळहान्ता अभिप्लवात् ।**

तत्राहीनप्रकरणे या अह्नां संख्याः संख्याताः षडहपर्यन्तास्ता अभिप्लवात्षडहाद्वेदितव्याः । षडहान्तानामहीनानामाभिप्लविकान्यहान्यादित आरभ्य यावदर्थं प्रकृतय इत्यर्थः । संख्यातवचनमसमाम्नातव्यावृत्त्यर्थम् । तेन समाम्नातानामभिप्लवः प्रकृतिरसमाम्नातानां पृष्ठ्यः प्रकृतिरिति साधितं भवति ।

**अतिरात्रस्त्वन्त्यः संख्यापूरणे गृहीतानाम् ।**

अतिरात्रान्ता इत्युक्तं तदतिरात्रान्तत्वं गृहीतैरेवाहोभिर्यदा संख्यापूरणं भवति तदा गृहीतानामेव यदन्त्यमहस्तदेवातिरात्रसंस्थं कर्तव्यं नान्यथेति ।

यत्र तु पुनर्गृहीतैः संख्यापूरणं न भवति तत्रैवमित्याह—

**हानौ वैश्वानरोऽधिकः ॥ १ ॥**

यत्र गृहीतैरहोभिः संख्याहानिर्भवति तत्र वैश्वानरोऽन्ते कर्तव्यः । वैश्वानरशब्देन प्रकृतोऽतिरात्रो गृह्यते । हानावेवातिरात्रान्तत्वमहीनानामिति विशेषः ॥ १ ॥

**आङ्गिरसं स्वर्गकामः ।**

इदानीमहीना उच्यन्ते । आङ्गिरसो नामायमहीनः । अनेन स्वर्गकामो यजेत ।

**यो वा पुण्यो हीनोऽनुप्रेप्सुः स्यात् ।**

यः पुरुषः पूर्वं पुण्येप्सुः सुखभागित्यर्थः । ततः पश्चात्सुखभावत्वाद्भ्रष्टो हीनः स पुनरपि तमेव भावं प्राप्तुमिच्छन्ननुप्रेप्सुरित्युच्यते । स वाऽनेनाऽऽङ्गिरसेन यजेत ।

---

१ च. °न्येकादशान्तान्यहानि, तेषां प्रातिलोम्येन दीक्षाहानि विज्ञेयानि । एतदुक्तं भवति । य° । २ व. ङ. झ. °वमन्तेन । ३ च. °त्यप्यप° । ४ घ. च. °म् । एका° । ५ च. °प्लवषडहा वेदि° । ६ क. ङ. झ. °मविप्ल° । ७ च. °रोऽधिकः । तत्र वैश्वानरोऽन्ते । ८ च. °ति शे° । ९ च. °भाक्त्वाद्भ्र° ।

**चैत्ररथमन्नाद्यकामः कापिवनं स्वर्गकाम इति द्व्यहाः ।**

इत्येते त्रयो द्व्यहाः ।

**प्रथमस्य तूत्तरस्याह्नस्तार्तीयं तृतीयसवनम् ।**

त्रयाणा प्रथमस्याऽऽङ्गिरसस्य द्वितीयेऽहनि यत्तृतीयसवनं तृतीयस्याऽऽभिप्लविकस्य यत्तृतीयसवनं तेनातिदिष्टमित्यर्थः । द्वैतीयस्यायमपवादः ।

**त्वं हि क्षैतवदिति चाऽऽज्यम् ।**

आङ्गिरसस्य द्वितीयेऽहन्येतदाज्यं भवति । द्व्यहा उक्ताः ।

**गर्गत्रिरात्रं स्वर्गकामः ।**

गर्गत्रिरात्रमित्यहीननाम ।

**तस्य मध्यमस्याह्नो वामदेव्यं पृष्ठं विशोविशीयमग्निष्टोमसाम ।**

मध्यमस्यैवाह्नः ।

**वारवन्तीयमुत्तमे ।**

अग्निष्टोमसामेति शेषः । गर्गत्रिरात्रस्योत्तमेऽहनीत्यर्थः ।

**त्वमग्ने वसूँरिति चाऽऽज्यम् ।**

उत्तम एवाहनीत्यर्थः ।

**बैदत्रिरात्रं राज्यकामः ।**

इदमप्यहीननाम ।

**सर्वे त्रिवृतोऽतिरात्राः ।**

बैदत्रिरात्रे सर्वाण्यहानि त्रिवृन्त्यतिरात्रसंस्थानि भवन्ति ।

**छन्दोमपवमानान्तर्वसू पशुकामः ।**

छन्दोमपवमानश्चान्तर्वसुश्च द्वावहीनौ तयोरन्यतरेण पशुकामो यजेत ।

**पराकच्छन्दोमपराकौ स्वर्गकामः ।**

पराकच्छन्दोमः पराकश्च तयोरन्यतरेणेत्यर्थः ।

**इति त्र्यहाः ।**

इत्येते षट्त्र्यहा उक्ताः ।

---

१ ग. छ. झ. °नं तत्तृतीयसवनस्या° । २ क. ग. घ. ङ. झ. °त्र इत्य° । ३ ग. थ. ङ. झ. °वृत्याति° ।

**गर्गत्रिरात्रशस्याः ।**

एषामनुक्तशस्या ये ते गर्गत्रिरात्रशस्या इत्यर्थः ।

**अत्रेश्चतुर्वीरं वीरकामः ।**

अत्रेश्चतुर्वीरमित्यहीननाम, वीरकामः पुत्रकाम इत्यर्थः ।

**तस्य वीरवन्त्याज्यानि ।**

तस्यात्रेश्चतुर्वीरस्य चतुर्ष्वहःसु यान्याज्यानि तानि वीरशब्दसंयुक्तानि कर्तव्यानि । प्रथमेऽहनि पूर्वप्राप्तस्य तोकशब्दवत्त्वात्तदेव वीरवत्त्वमपि स्यादित्युत्तरेषु वीरवन्ति विदधाति ।

**यमग्ने वाजसातमेति द्वितीयेऽहन्याज्यमग्नायो मर्त्य इति तृतीयेऽग्निं नर इति चतुर्थे ।**

प्रकृतत्वादेवास्य चतुर्वीरस्य संप्रत्यये सिद्धे पुनस्तत्प्रत्ययार्थं तस्येतिवचनम् ।

**षोळशिमच्चतुर्थम् ।**

षोळशिमच्चतुर्थमित्यस्य विधेः सर्वाहीनसंबन्धार्थं सर्वेष्वहीनेषु यच्चतुर्थमहस्तत्षोळशिमत्कर्तव्यमित्यर्थः ।

**तस्याभि त्वा वृषभा सुत इति गायत्रीषु रथंतरं पृष्ठम् ।**

तस्यात्रेश्चतुर्वीरस्यैवायुजयोर्यद्रथंतरं तद्गायत्रीषु कर्तव्यम् । इदमपि तस्यग्रहणं पूर्वसूत्रस्य सर्वार्थत्वायैव ।

**अनुष्टुब्बृहतीषु बृहत् ।**

तस्यैव चतुर्वीरस्य युजयोर्यद्बृहत्तदनुष्टुब्बृहतीषु वा कर्तव्यम् । अनुष्टुब्बृहतीनामृचामत्रानुविधानादेव ताः समाम्नाता इति गम्यते ।

**चतुर्थे त्वं वलस्य गोमतो यज्जायथा अपूर्व्येति वा ।**

अत्रेर्यच्चतुर्थमहस्तस्मिन्यद्बृहत्तत् ' त्वं वलस्य गोमतः ' इत्यासु वा ' यज्जायथा अपूर्व्या ' इत्यासु वा नियमेन कर्तव्यम् ।

**जामदग्नं पुष्टिकामः ।**

जामदग्नमित्यहीननाम ।

**तस्य पुरोळाशिन्य उपसदः ।**

तस्य जामदग्नस्य या उपसदस्ताः पुरोडाशिन्यो भवन्ति नाऽऽज्यहविषः । उपसदां पुरोडाशवत्त्वविधानं तासां तत्र होमपक्षे दर्विहोमत्वमस्तीति ज्ञापनार्थम् ।

---

१ क. ख. °रत्वम° । २ च. °संप्रत्ययार्थं । ३ क. ग. ङ. झ. °त्रेश्च° । ४ च. °शत्ववि° ।

**वैश्वामित्रं भ्रातृव्यवान्प्रजाकामो वासिष्ठसंसर्पम् ।**

वैश्वामित्रं वासिष्ठसंसर्पमित्यहीननामनी ।

**इति चतुरहाः ।**

इत्येते चत्वारश्चतुरहा अनुक्रान्ताः ।

**सार्वसेनं पशुकामो दैवं भ्रातृव्यवान्पञ्चशारदीयं पशुकामो व्रतवन्तमायुष्कामो वावरं वाक्प्रवदिषुः ।**

वाक्प्रवदिषुः, वाचः प्रविवदिषुरित्यर्थः ।

**इति पञ्च पञ्चरात्राः ।**

इत्येते सार्वसेनदैवपञ्चशारदीयव्रतवद्वावरामिति पञ्च पञ्चरात्रा उक्ताः । पञ्चग्रहणमेतावन्त एव पञ्चरात्रा नान्येऽसमाम्नाता अपीति ।

**पञ्चशारदीयस्य तु सप्तदशोक्षाण ऐन्द्रामारुता मारुतीभिः सह वत्सतरीभिः सप्तदशभिः सप्तदशभिः पञ्चवर्षपर्यग्निकृताः सवनीयाः ।**

पञ्चभिर्वर्षैः समाप्यत इति पञ्चशारदीयः, तस्यायं विशेषः । ऐन्द्रामारुताः सप्तदशोक्षाणः सवनीया भवन्ति । इन्द्रश्च मरुतश्च येषां देवतास्त ऐन्द्रामारुताः । उक्षाणो गोवृषाः । तेषामयं संस्कारः । यागकालात्पुरस्तात्पञ्च वर्षाणि प्रतिवर्षं मारुतीभिर्वत्सतरीभिः सह पर्यग्निकर्तव्याः उक्षाणः । मरुतो देवता आसामिति मारुत्यः । ताश्च सप्तदश । आदावेव पञ्चशारदीयेन यक्ष्य इति संकल्प्य ततः पशुबन्धविधानेनोक्षण उपाकृत्यैन्द्रं मरुद्भ्यो वत्सतरीर्मरुद्भ्य उपाकृत्य पर्यग्निकरणान्ते वत्सतरीरालभन्ते । उक्षण उत्सृजन्ति । एवं पञ्च वर्षाणि वर्षे वर्षे कर्तव्यम् । अस्मिन्पञ्चशारदीये सवनीया भवन्ति ।

**तेषां त्रींस्त्रींश्चतुर्ष्वहःस्वालभेरन्परिशिष्टान्पञ्च पञ्चमे ।**

पञ्चग्रहणं तेषु नष्टेषु वा मृतेषु वा शास्त्रान्तरोक्तेन विधानेन सप्तदश संपाद्य पूर्वेष्वहःसु त्रींस्त्रीनालभ्य पञ्चमे पञ्चाऽऽलभेतेत्येवमर्थम् । इतरथा नष्टेषु मृतेषु वा यथासंभवमालम्भः स्यात्तन्निवृत्त्यर्थं पञ्चग्रहणम् ।

**व्रतवतस्तु तृतीयस्याह्नः स्थाने महाव्रतम् ।**

व्रतवतः पञ्चरात्रस्यायं विशेषः । आभिप्लविकस्य पञ्चाहस्य तृतीयमहरुद्धृत्य तत्स्थाने महाव्रतं कृत्वाऽन्यत्पूर्ववत्कर्तव्यम् ।

---

१ ग. च. °प्रव° । २ च. °न्ये स° । ३ ग. घ. ङ. च. झ. °त्यैन्द्र१° । ४ च. °रुद्भ्यो व° । ५ उक्षण उ° । ६ च. °म् । त एवास्मि° ।

**पृष्ठ्यपञ्चाह उत्तमः ॥ २ ॥**

आभिप्लविकस्यायमपवादः ॥ २ ॥

**ऋतूनां षळहं प्रतिष्ठाकामः ।**

ऋतूनां षळहमित्यहीननाम ।

**पृष्ठ्यः समूह्ळो व्यूह्ळो वा ।**

अभिप्लवापवादः । पृष्ठ्य इति विशेषवचनेन व्यूढसमूढयोर्विकल्पे सिद्धे यदुभयग्रहणं तदविशेषवचनेन समूढ एव स्यान्न व्यूढ इत्येवमर्थम् ।

**पृष्ठ्यावलम्बं पशुकामः ।**

पृष्ठ्यावलम्बस्याहान्युच्यन्ते ।

**पृष्ठ्यपञ्चाहोऽभ्यासक्तो विश्वजिच्च ।**

पृष्ठ्यपञ्चाहोऽभ्यासक्तो विश्वजिच्च षष्ठमहः । अभ्यासक्तस्वरूपमुच्यते—प्रथमस्याह्नो द्वे सवने त्रिवृत्स्तोमे भवतः । पञ्चदशं तृतीयसवनम् । द्वितीयस्य पञ्चदशे द्वे सवने । सप्तदशं तृतीयसवनम् । तृतीयस्य सप्तदशे द्वे सवने । एकविंशं तृतीयसवनम् । एवमुत्तरेष्वपि योज्यम् । एवमभ्यासक्तो भवति ।

**संमार्यमायुष्कामः पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहश्च ।**

अभिप्लवत्र्यहश्च पूर्व एव द्वयोस्त्र्यहयोः संभरणात्संभार्यनामाहीनो भवति । एते त्रयः षड्रात्रा उक्ताः ।

**ऋषिसप्तरात्रमृद्धिकामः प्राजापत्यं प्रजाकामश्छन्दोमपवमानव्रतं पशुकामो जामदग्नमन्नाद्यकाम एत च*त्वारः ।**

एते चत्वारः सप्तरात्राः । ऋषिसप्तरात्रप्राजापत्यच्छन्दोमपवमानव्रतजामदग्न्याः, तेषामियमहःक्लृप्तिः ।

**पृष्ठ्यो महाव्रतं च ।**

अविशेषवचनात्समूढः पृष्ठ्यो भवति ।

**व्रतं तु स्वस्तोमं प्रथमे ।**

यत्प्रथमे सप्तरात्रे महाव्रतं तत्स्वस्तोमं भवति । पञ्चविंशस्तोममित्यर्थः ।

**सप्तदशं द्वितीये ।**

द्वितीये सप्तरात्रे महाव्रतं सप्तदशस्तोमं भवति ।

---

* 'चत्वारः पृष्ठ्यो महाव्रतं च' इत्येवं पाठः सर्वेषु पुस्तकेषु यद्यपि वर्तते तथाऽपि 'पृष्ठ्यो महाव्रतं चेत्यंशोऽग्रे पृथग्व्याख्यात इत्यत्र न गृहीतोऽस्माभिः ।

छन्दोमपवमानं तृतीये ।

छन्दोमशब्देनात्र तत्संबन्धिनः स्तोमा उच्यन्ते । चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशास्तृतीये सप्तरात्रे यन्महाव्रतं तस्य पवमानेषु यथाक्रमं भवन्ति । शेषः स्वस्तोम एव ।

चतुर्विंशो बहिष्पवमानः सप्तदशः शेषश्चतुर्थे ।

चतुर्थे सप्तरात्रे यन्महाव्रतं तस्य बहिष्पवमानश्च चतुर्विंशस्तोमो भवति । शेषः सप्तदशस्तोमो भवति ।

ऐन्द्रमत्यन्याः प्रजा बुभूषन् ।

योऽन्याः प्रजा अतीत्य भवितुमिच्छेत्सोऽनेन यजेत ।

त्रिकद्रुका अभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमः ।

त्रिकद्रुका इत्यभिप्लवत्र्यहः पूर्व उच्यते । सर्वस्तोम इत्यनेन गौरुमयसामा सर्वस्तोमा इत्ययमत्र गृह्यते । ऐन्द्रस्यैवमहःक्लृप्तिः ।

जनकसप्तरात्रमृद्धिकामोऽभिप्लवचतुरहो विश्वजिन्महाव्रतं ज्योतिष्टोमः ।

जनकसप्तरात्रस्याहःक्लृप्तिरुच्यतेऽभिप्लवचतुरहो विश्वजिन्महाव्रतं ज्योतिष्टोम इति ।

पृष्ठ्यस्तोमो विश्वजिच्च पशुकामस्य सप्तमः ।

सप्तमः सप्तरात्र उच्यते, तस्य नाम शाखान्तरादवगन्तव्यम् । अहःक्लृप्तिस्तावदुच्यते । पृष्ठ्य एव षडहः केवलं बृहद्रथंतरपृष्ठः पृष्ठ्यस्तोम उच्यते । विश्वजिच्च सप्तमं भवति । अनेन पशुकामो यजेत । एते सप्त सप्तरात्राः ।

देवत्वमीप्सतोऽष्टरात्रः ।

देवत्वं प्राप्तुमिच्छतोऽष्टरात्रो भवति । अस्यापि नामान्यतोऽवगन्तव्यम् ।

पृष्ठ्यो महाव्रतं ज्योतिष्टोमः ।

इयमस्याहःक्लृप्तिः । एक एवाष्टरात्र उक्तः ।

नवरात्रमायुष्कामः पृष्ठ्यास्त्रिकद्रुकाश्च ।

पूर्वस्याहःक्लृप्तिरियम् ।

त्रिकद्रुकाः पृष्ठ्यावलम्ब इति पशुकामस्य ।

त्रिकद्रुका उक्ताः, पृष्ठ्यावलम्बो नाम षळह उक्तस्तस्य यान्यहानि तानीह भवन्तीत्यर्थः ।

इति नवरात्रौ ।

द्वावेतौ नवरात्रौ । अनयोरपि नामनी शाखान्तरादवगन्तव्ये ।

**त्रिककुबध्यर्धः पृष्ठ्यो महात्रिककुब्व्यूळ्हो नवरात्रः समूळ्हस्त्रिककुप्समूळ्हः ।**

नवरात्र इत्यनुवर्तते ।

**चतुष्टोमस्त्रिककुबध्यर्धोऽभिप्लव एतै-श्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत ।**

एतैस्त्रिककुम्महात्रिककुप्समूढत्रिककुप्चतुष्टोमत्रिककुब्भिः स्वानां श्रैष्ठ्यकामो यजेत । एतेषां दशमो वैश्वानर एव भवति । कामश्चैतेषामेकैकेन संबध्यते ।

**कुसुरुबिन्दुर्वृद्धिकामस्त्रयाणां पृष्ठ्याह्नामेकैकं त्रिः ।**

कुसुरुबिन्दोरियमहःक्लृप्तिः । अत्रापि दशमो वैश्वानर एव ।

**छन्दोमवन्तं पशुकामः पृष्ठ्यावलम्बस्य प्राग्विश्वजितश्छन्दोमा दशमं चाहः ।**

छन्दोमवत इमान्यहानि पृष्ठ्यावलम्बस्य षळहस्य यान्यहानि तेषां विश्वजितः प्राक्त्रयश्छन्दोमाः, अविवाक्यं चैकं ततो विश्वजिद्दशमं भवति ।

**पुराऽभिचरन् ।**

पूर्नाम दशरात्रः ।

**ज्योतिर्गामभितो गौरभिजितं विश्वजिदायुषम् ।**

ज्योतिर्नामैकाहः स गोनामानमभित उभयतः कर्तव्यः । गौश्चाभिजितमभितः, विश्वजिदायुषमभितः कर्तव्यः । वैश्वानरो दशममहर्भवति ।

**शल्लीपिशङ्गं श्रीकामः ।**

शल्लीपिशङ्गस्यैतान्यहानि ।

**अभिप्लवत्र्यहः पूर्वस्त्रिः ।**

स त्र्यहः समावर्तयितव्यः ।

**इति दशरात्राः ॥ ३ ॥**

इत्येतेऽष्टौ दशरात्रा उक्ताः ॥ ३ ॥

**पौण्डरीकमृद्धिकामः । पृष्ठ्यस्तोमश्छन्दोमा गोतमस्तोमो विश्वजिद्व्यूळ्हो नवरात्रो महाव्रतं वैश्वानर इति वा ।**

उभयथा पौण्डरीको भवति ।

---

१ च. शममहर्भव° । २ च. °स्त्रिः । त्र्यहं समाप्याऽऽव° । ३ च. °तव्यम् । इ° ।

**अथ संभार्यौ ।**

अनयोः संभार्यनाम्नोरन्यतः कामोऽवगन्तव्यः । अहःक्लृप्तिः सूच्यते ।

**अतिरात्रश्चतुर्विंशमध्यर्धोऽभिप्लवः पृष्ठ्यो वा ।**

उभयोः संभार्ययोरतिरात्रेचतुर्विंशे साधारणे अध्यर्धोऽभिप्लवः पूर्वस्यैव । अध्यर्धपृष्ठ उत्तरस्यैव ।

**इन्द्रवज्रं भ्रातृव्यवान् ।**

इन्द्रवज्रस्याहःक्लृप्तिः ।

**पृष्ठ्यस्याऽऽद्ये अहनी व्यत्यासमा नवरात्रात् ।**

पृष्ठ्यस्याऽऽदितो व्यत्यस्य द्वे अहनी कर्तव्ये यावन्नवाहानि भवन्ति ।

**महाव्रतम् ॥ ४ ॥**

ततो महाव्रतम् । ततो वैश्वानरः । एवं पञ्चैकादशरात्रा उक्ताः ॥ ४ ॥

**अथ द्वादशाहा भवेयुः ।**

अथानन्तरं ये वक्ष्यन्ते ते द्वादशाहा भवेयुः, भवन्तीत्यर्थः ।

**सत्राणि भवेयुरहीना वा ।**

ते द्वादशाहाः सत्राणि च भवेयुरहीनाश्च भवेयुः । यदा सत्राणि तदोभयतोऽतिरात्रत्वं बहुयजमानत्वं महाव्रतसहितत्वमित्यादयो धर्मा भवन्ति । यदा पुनरहीनत्वं तदाऽग्निष्टोमादित्वं मासापवर्गत्वमपरिमाणदीक्षत्वमित्यादयो धर्मा भवन्तीति द्वैविध्यवचनम् ।

**उक्तो दशरात्रः ।**

उक्तवचनमत्रातिरिच्यते, अन्यत्रोक्तवचनमन्तरेणातिदेशदर्शनात् । यथा पृष्ठ्यः समूढो व्यूढो वेत्येते चत्वारः पृष्ठ्यो महाव्रतं चेत्येवमादिषु । तेनोक्तवचनस्य प्रयोजनं वक्तव्यम् । इदमुच्यत उक्तो दशरात्र इत्येदुक्तं भवति—द्वादशाहावयवभूतानि यानि दशाहानि तानि तत्रैव पुञ्जीकृत्य दशरात्र इतिवचनं कृत्वोक्तानि तस्य वचनस्य द्वादशाहार्थतैव प्रयोजनमिति । तत्रोक्तिस्तु पञ्चविंशतेरह्नां व्युत्पत्तिभूतत्वाद्दशरात्रेस्थितानां च तदन्तर्भावात्तेन तत्रैव पुञ्जीकरणं दशरात्रनाम च सौकर्यात्कृतमिति मन्तव्यम् । अतो द्वादशाहप्रकृतिर्दशरात्र इत्यनेनाभिप्रायेणोक्तवचनं कृतवानाचार्यः । तथा श्रुतौ छन्दोगानां बहुशः श्रूयते ' द्वादशाहस्य दशाहानि ' इति ।

---

१ घ. °त्तिस्तूच्य° । २ च. °त्रश्चतु° । ३ घ. ङ. झ. °रणोऽध्य° । ४ क. ङ. °नर एव प° । ५ च. °नाना° भ° । ६ च. नत्वमि° । ७ च. °हीनास्तदाऽ° । ८ च. गत्वं महाव्रतसहितेष्वप्यप° । ९ च. °चनमक्र° । १० च. °ति । अत्रो° । ११ च. °भूमित्वा° । १२ च. °त्रसंशिता° । १३ च; °शाहा भवेयुः । प° ।

स च दशरात्रो द्विविध उक्तः—

**समूह्ळो व्यूह्ळो वा ।**

समूढो व्यूढश्च । अनेन प्रकारेण द्वौ दशाहावत्रोक्तौ समूढो व्यूढश्च । तत्र द्वादशाहोऽहर्गणानां प्रकृतिरिति न्यायात्सर्वाहर्गणानां प्रकृतिरित्यवगतः । तत्र तावन्तरेण व्यूढो दशरात्रः, एषा प्रकृतिः सत्राणामिति विशेषग्रहणात्सत्राणां व्यूढो हीनानां समूढ इत्यवसितं भवति ।

**तमभितोऽतिरात्रौ ।**

तमभितोऽतिरात्राविति । तं द्विविधं दशरात्रमभितोऽतिरात्रौ प्रकृतौ भवत इत्यर्थः । एवं व्यूह्ळः समूढश्च द्वादशाहाविति ।

**संभार्ययोर्वा वैश्वानरमुपदध्यात् ।**

यौ संभार्यनामकावेकादशरात्रौ तयोर्वैश्वानरमधिकं कृत्वा द्वौ द्वादशाहावन्यौ भवतः । 'अहीनेषु ह्यानौ वैश्वानरोऽधिकः' इति परिभाषयैव प्राप्त एव वैश्वानरे वचनमिदं सत्रपक्षेऽपि वैश्वानरस्य प्रापणार्थम् ।

**संवत्सरप्रवह्लं श्रीकामोऽतिरात्रश्चतुर्विंशं**
**विषुवद्वर्जो नवरात्रो महाव्रतम् ।**

संवत्सरप्रवह्लस्याहानीमानि । अयं द्वादशाहो हीन एव, श्रीकाम इत्येकवचनेनोपदेशात्परिभाषाप्राप्तवैश्वानरोपजीवनाच्च ।

**अथ भरतद्वादशाहः ।**

अथशब्दो हीनकैवल्यबुद्धिविच्छेदार्थः । सत्राहीनसाधारणाश्चत्वारो द्वादशाहा उक्ताः । तत एको हीन उक्तः । उत्तमश्चासाधारण एव । अतस्तद्विच्छेदार्थमथशब्दः प्रयुक्तः ।

**इममेवैकाहं पृथक्संस्थाभिरुपेयुः ।**

भरतद्वादशाहस्याहःक्लृप्तिः । इममेव प्राकृतैकाहं पृथग्भूताभिः संस्थाभिर्युक्तं द्वादशकृत्वः कुर्युः । विकृतिषु प्रकृतेः संनिहितत्वादिदमामित्युच्यते । उत्तरत्र संस्थाविधानादेव संस्थासंबन्धे सिद्धे पृथक्संस्थाभिरितिवचनं वचनादेव संस्थानियमो नातिदेशादिति ज्ञापयितुम् ।

---

१ च. द्वौ द्वाद° । २ च. प्राप्त ए° । ३ च. °रेतिव° । ४ घ. °ब्दोऽही° । ५ च. °मश्च सा° । ६ क. ग. च. °त्वादिदमुच्य° । ७ क. ङ. झ. °व संस्थानि° । च. °व स्थानानि° ।

**अतिरात्रमग्रेऽथाग्निष्टोममथाष्टा उक्थ्यानथाग्निष्टोममथातिरात्रम्।**

द्वादशाहसामान्येन प्राप्तानां संस्थानां विधीयमानभरतद्वादशाहेऽयमपवादः ।

**इति द्वादशाहाः ।**

इत्येवंप्रकारा द्वादशाहा आम्नाताश्च वेदितव्याः ।

**तैरात्मना बुभूषन्तः प्रजया पशुभिः प्रजनयिष्यमाणाः स्वर्गं लोकमेष्यन्तः स्वानां श्रैष्ठ्यमैच्छन्त उपेयुर्वा यजेत वा ।**

संवत्सरप्रवह्लस्य केवलाहीनत्वात्कामनानपेक्षत्वाच्चेतरेषां पञ्चानामेवात्र ग्रहणम् । आत्मना बुभूषन्तः । आत्मना भवितुमिच्छन्त आत्मकैवल्यमिच्छन्त इत्यर्थः । चत्वार एते कामाः पञ्च द्वादशाहास्तेनाऽऽनन्तर्ययोगो न भवति । सर्वे सर्वैरधिक्रियेरन्न नियमेनेत्यर्थः । तैर्यजेत वा, उपेयुरिति संबन्धः । उपेयुरिति सत्रलिङ्गं, यजेतेत्यहीनलिङ्गम् ।

**इति पृथक्त्वम् ।**

इत्येतदेव सत्राहीनयोः पृथक्त्वं भेद इत्यर्थः । सर्वत्रापि यदुपेयुः शब्दचोदितं तत्सर्वं सत्रमेव । यथा[1] यजेतेत्येकवचनं तदहीन एव । एतदुक्तं भवति—सत्राहीनत्वे बहुयजमानत्वैकयजमानत्वादिकृत एव भेदो न शस्यभेदकृत इति ।

**अथ सामान्यम् ।**

अथेदानीं सत्राहीनयोरसमाम्नातयोः साधारणविधिरुच्यत इत्यर्थः ।

**अपरिमितत्वाद्धर्मस्य प्रदेशान्वक्ष्यामः ।**

धर्म[3]शब्देनात्र प्रधानकर्माण्युच्यन्ते । प्रदिश्यन्ते ज्ञायन्ते यैरुपायैरसमाम्नातान्यपि कर्माणि ते[4] उपायाः प्रदेशा उच्यन्ते । ते च विध्येकदेशभूतत्वात्प्रदेशशब्दवाच्याः । एत[5]दुक्तं भवति—कर्मणामसमाम्नातानाम[6]परिमेयत्वात्तेषामेकैक[7]शयेन वक्तुमशक्यत्वात्सामान्येन तज्ज्ञानोपायान्विध्येकदेशभूतान्वक्ष्याम इति ।

के ते उपायाः कथं वा तैरुपायैरसमाम्नातानां कर्मणां ज्ञानं भवतीति तमुपायमुत्तरेण सूत्रेण दर्शयति—

**यथा हि परिमिता वर्णा अपरिमितां वाचो गतिमाप्नुवन्त्येवमेव परिमितानामह्नामपरिमिताः संघाताः ।**

यथाऽकारादयो वर्णास्त्रिषष्टिसंख्यापरिमिता एव स्थानकरणानुप्रदानादिभिर्गुणैः सम्यगु-

---

१ च. °नापे°। २ ग. घ. च. झ. तथा। ३ च. °र्मप्रदेशा नात्र प्रथमसमाम्नातक°। ४ च. तद्गुण°। ५ च. °र्मणां स°। ६ च. °मसमाम्नातानां चाप°। ७ च. °कशो व°। ८ च. तद्गुण°।

च्चारणाय शिक्षिताः सन्तः सर्वस्याः पदवाक्यभूताया अपरिमिताया वाच उच्चारणाय शक्तिं ज्ञानं चोत्पादयन्ति, एवं पञ्चविंशतिरहानि परिमितान्येव सम्यक्परिज्ञातानि च भवन्ति । तैरेवापरिमिताः संघाताः समाम्नाता असमाम्नाताश्च कर्तव्यतया चोद्यन्त इति । पदावयवभूतवर्णज्ञानेन पदवाक्यज्ञानवत्संघातावयवभूताहर्ज्ञानेन संघातज्ञानमप्युपपद्यत इति दृष्टान्तः । एवमेवार्थमुत्तरसूत्रं स्पष्टयति—

**सिद्धानि त्वहानि तेषां यः कश्च समाहारः सिद्धमेव शस्यम् ।**

यथा हि परिमिता वर्णाः सर्वा वाचो गतिमाप्नुवन्त्येवमत्रापि सिद्धानि परिज्ञातान्यहानि । तत्र यो यः संघातः समाम्नातोऽसमाम्नातश्च पञ्चविंशतेरह्नामेव नान्येषाम् । अतः संघातशस्यमपि सिद्धमेव समुदायिभ्योऽनन्यत्वात्समुदायस्येति सिद्धम् ।

**अह्नां तु संशये स्तोमपृष्ठसंस्थाभिरेके व्यवस्थाम् ।**

समाम्नातेष्वसमाम्नातेषु च संघातेष्वहर्द्वारेण शस्यज्ञानमित्युक्तम् । इदानीं येष्वसमाम्नातेष्वहरेवं न ज्ञायत इदमेवेति तत्राह्नां संशये सत्येवमेक आचार्या अहर्व्यवस्थामहर्निश्चयमिच्छन्ति स्तोमपृष्ठसंस्थाभिर्लिङ्गभूतैरह्नामुत्पत्तौ त्रिवृदादीनां स्तोमानामन्यतमेन रथंतरादीनां पृष्ठानामन्यतमेनाग्निष्टोमादीनां संस्थानामन्यतमेन च संयुक्तान्येवोत्पद्यन्त इति वदन्तः ।

**तदकृत्स्नं दृष्टत्वाद्व्यतिक्रमस्य ।**

तदकृत्स्नमसार्वत्रिकमित्यर्थः । उत्पत्तौ तथोक्तानामपि व्यवहारकाले व्यभिचारदर्शनादित्यर्थः । ततो नायं नियमहेतुः ।

**छन्दोगैरेव कृत्वा समयमह्नो बार्हतराथंतरतायामेकाहेन न शस्यं राथंतराणाम् ।**

अयमेवाहर्निश्चय उपायः । छन्दोगैः समयः संगमः संवाद इत्यर्थः । तैः संवादेनाह्नो बार्हतराथंतरत्वनिश्चयं कृत्वा राथंतराणां प्रकृतैकाहेन शस्यं वेदितव्यम् ।

**द्वितीयेनाऽऽभिप्लविकेन बार्हतानाम् ।**

बार्हतानां पुनर्द्वितीयेनाऽऽभिप्लविकेन शस्यं वेदितव्यम् ।

**अपि वा कयाशुभीयतदिदासीये एव निविद्धानीये स्यातामैकाहिकमितरत् ॥ ५ ॥**

अथ वाऽयमन्यः पक्षोऽसमाम्नाते बार्हतानां राथंतराणां च मरुत्वतीयनिष्केवल्ये

१ च. चोच्यन्त । २ व. च. एतमे° । ३ क. ख. °व ज्ञा° । ४ च. °स्थामाहुः । निश्च° । ५ च. °तमयसं° । ६ च. °वल्ययोः क° ।

कयाशुभीयतदिदासीये[1] निविद्धानीये भवतः, अन्यत्सर्वमैकाहिकमिति । अत्र त्रयः पक्षाः सन्ति । अहःसंशये स्तोमादीनां त्रयाणामानुगुण्येन तद्वशादेव[2] शस्यानिर्णयः । अन्यथा चेद्बार्हतत्वराथंतरत्वोपाधिना शस्यनिश्चयः । अस्मिन्नेव पक्षे निविद्धाने, अन्यदैकाहिक-मित्येवं वा शस्यानिश्चय इति सर्वत्र च्छन्दोगैः संवाद आदरणीयः ॥ ९ ॥

**सर्वान्कामानाप्स्यन्त्सर्वा विजितीर्विजिगीष-माणः सर्वा व्युष्टीर्व्यशिष्यन्नश्वमेधेन यजेत ।**

सर्वान्कामान्साकल्येनाऽऽप्तुं यः कामयते यो वा सर्वा विजितीरिन्द्रियजयपर्यन्ता जेतुमिच्छति, यो वा सर्वा व्युष्टीर्व्यशिष्यन्व्याप्तुमुद्युक्तः सोऽश्वमेधेन यजेत । व्युष्टिर्विभू-तिरित्यर्थः । व्यशिष्यन्निति । विपूर्वस्याश्नोतेः सन्नन्तस्य रूपम् । राज्ञोऽभिषिक्तस्यायं पक्षो नेतरयोर्जात्योः ।

**अश्वमुत्स्रक्ष्यन्निष्टीभ्यां यजेत ।**

येनाश्वेन मध्यमेऽहनि यष्टव्यं तमश्वं विधिवदुत्सृजति । तमुत्स्रक्ष्यन्वक्ष्यमाणाभ्या-मिष्टीभ्यां यजेत ।

**अग्निर्मूर्धन्वान् ।**

पूर्वस्या एषैका देवता ।

**विराजौ संयाज्ये ।**

संयाज्याग्रहणं विस्पष्टार्थम् ।

**पौष्णी द्वितीया ।**

पूषदेवत्या द्वितीयेष्टिरित्यर्थः ।

**त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ ।**

आज्यभागावित्यर्थः ।

**त्वां चित्रश्रवःस्तम यद्वाहिष्ठं तदग्नय इति संयाज्ये अश्वमुत्सृज्य रक्षिणो विधाय सावित्र्यस्तिस्र इष्टयोऽहरहर्वैराजतन्त्राः ।**

एवमश्वमेधेन यक्ष्य इति संकल्प्यैताभ्यामिष्टिभ्यामिष्ट्वाऽश्वमुत्सृज्य तस्य रक्षका-न्विधाय ततः संवत्सरमहरहस्त्रिषु सवनेषु सावित्रीभिरिष्टिभिर्वैराजतन्त्राभिर्यजेत ।

**सविता सत्यप्रसवः प्रसविताऽऽसविता ।**

सत्यप्रसव इत्याद्यायामिष्टौ सवितुर्गुणः । प्रशब्दो मध्यमायामाशब्द उत्तमायाम् ।

---

१ ग. °ये च स्तो° । २ च. °क्षे एते नि° । ३ च. यज्ञो ।

एवं सगुणत्वे सत्यपि देवतायाः पूर्वसूत्रे सावित्रीभिरितिनिर्गुणत्वात्तद्धितनिर्देशं कुर्वन्नेतज्ज्ञापयति निर्गुणस्य सवितुर्यो धर्म उपांशुत्वं नाम स सगुणस्याप्यत्र भवतीति ।

**य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः सवानो देवः सविता सहावेति द्वे ।**

सत्यप्रसवस्य पूर्वोक्ते एव ।

**समाप्तासु समाप्तासु दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत ।**

समाप्तास्विवितिवीप्सावचनात्पारिप्लवाख्यानमपि संवत्सरमहरहः कर्तव्यमिति गम्यते । पारिप्लवमिति प्रथमेऽहनीत्यादेराख्यानस्याऽऽख्या ।

**हिरण्मये कूर्चेऽध्वर्युरासीनः प्रतिगृणाति ।**

अध्वर्युरपि हिरण्मये कूर्चे आसीनः प्रतिगृणाति ।

**आख्यास्यन्नध्वर्यवित्याह्वयीत ।**

आख्यानमारप्स्यमानो होताऽध्वर्युम् ' अध्वर्यो ' इत्याह्वानं करोति ।

**हो होतरितीतरः ॥ ६ ॥**

एवमाहूतोऽध्वर्युर्हो होतरिति प्रत्याह्वानं करोति । अयमेव प्रतिगरोऽत्रैव वक्तव्यो नान्यत्र ॥ ६ ॥

**प्रथमेऽहनि मनुर्वैवस्वतस्तस्य मनुष्या विशस्त इम आसत इति गृहमेधिन उपसमानीताः स्युस्तानुपदिशत्यृचो वेदः सोऽयमिति सूक्तं निगदेत् ।**

अत्र पूर्वोक्तमेव व्याख्यानं नान्यत्किंचित् । ' अध्वर्यो ' इत्युक्त्वैवमारभते । प्रथमेऽहनि मनुर्वैवस्वतस्तस्य मनुष्या विशस्त इम आसते, एतद्यथासूत्रं कर्तव्यम् । अस्यायमर्थः—अस्मिन्प्रथमेऽहनि मनुर्विवस्वत्पुत्रोऽधिपतिस्तस्य राज्ञो मनुष्या विशास्तद्राज्ञोपजीविन इत्यर्थः । त इति प्रकृता मनुष्या अतिदिश्यन्ते । इम इति पुरोऽवस्थिता मनुष्या निर्दिश्यन्ते । तान्मनुष्यानादाय सममुपवेश्य तान्निर्दिश्य प्रदेशिन्या त इम आसत इति वदति । गृहमेधिन उपसमानीताः स्युस्तानुपदिशति । गृहमेधिन इति मनुष्यविशेषणम् । ते च कुटुम्बिन इत्यर्थः । अन्यदुक्तार्थम् । उपदिशतीति । निर्दिश्य त इम आसत

१ च. °तानां पू° । २ च. °नुर्वैवस्वतः, विवस्वत्पुत्रेऽधिपे सति तस्य ।

इत्यनामयं वदतीत्यर्थः । त इम आसत इत्येवमन्तमुक्त्वाऽनन्तर ' ऋचो वेदः सोऽयम् ' इति वदति । अस्यायमर्थः—अस्मिन्नहन्यृग्वेदो वेद इति । कोऽयमृग्वेदो वेदे वेदो नामेत्यपेक्षायां सोऽयमृग्वेद इति तस्य स्वरूपप्रदर्शनार्थं यत्किंचित्सूक्तमादित आरभ्याऽऽन्तान्निगदेत् । एवमहन्यहन्याख्यातव्यम् । अत्र विशेषः—द्वितीयादिष्वहःसु यमो राजा तदर्थमानेतव्या वेदो निगद्यं च भिद्यते ।

द्वितीयेऽहनि यमो वैवस्वतस्तस्य पितरो विशस्त इम आसत इति स्थविरा उपसमानीताः स्युस्तानुपदिशति यजुर्वेदो वेदः सोऽयमित्यनुवाकं निगदेत् ।

स्थविरा वृद्धाः ।

तृतीयेऽहनि वरुण आदित्यस्तस्य गन्धर्वा विशस्त इम आसत इति युवानः शोभना उपसमानीताः स्युस्तानुपदिशत्यथर्वाणो वेदः सोऽयमिति यद्भेषजं निशान्तं स्यात्तन्निगदेत् ।

भेषजमिति । भेषजप्रतिपादकं मन्त्रं ब्राह्मणं वेत्यर्थः ।

चतुर्थेऽहनि सोमो वैष्णवस्तस्याप्सरसो विशस्ता इमा आसत इति युवतयः शोभना उपसमानीताः स्युस्ता उपदिशत्याङ्गिरसो वेदः सोऽयमिति यद्घोरं निशान्तं स्यात्तन्निगदेत् ।

घोरमिति । अभिचारादिप्रतिपादकमित्यर्थः ।

पञ्चमेऽहन्यर्बुदः काद्रवेयस्तस्य सर्पा विशस्त इम आसत इति सर्पाः सर्पविद इत्युपसमानीताः स्युस्तानुपदिशति विषविद्या वेदः सोऽयमिति विषविद्यां निगदेत् ।

सर्पविदः काश्यपीयादिविषतन्त्रविद इत्यर्थः ।

षष्ठेऽहनि कुबेरो वैश्रवणस्तस्य रक्षांसि विशस्तानी-

१ च. इत्याख्यानावयवं व° । २ घ. ध. ङ. झ. °त्किंचन सूक्त° । ३ च. °यान्यहोरा° । ४ घ. ङ. झ. °ष्वहोरा° । ५ च. वेति नि° । ६ क. °ह्मणवे° । च. °ह्मणं चेत्य° ।

**मान्यासत इति सेलगाः पापकृत इत्युपसमानीताः स्युस्तानुपदिशति पिशाचविद्या वेदः सोऽयमिति यत्किंचित्पिशाचसंयुक्तं निशान्ते स्यात्तन्निगदेत् ।**

सेलगा इति । सर्पेणोन्मत्ता[1] इत्यर्थः । पापकृतः पापकारिण इत्यर्थः ।

**सप्तमेऽहन्यसितो धान्वस्तस्यासुरा विशस्त इम आसत इति कुसीदिन उपसमानीताः स्युस्तानुपदिशत्यसुरविद्या वेदः सोऽयमिति मायां कांचित्कुर्यात् ।**

कुसीदिनो वार्धुषिका इत्यर्थः ।

**अष्टमेऽहनि मत्स्यः सांमदस्तस्योदकेचरा विशस्त इम आसत इति मत्स्याः पुञ्जिष्ठा इत्युपसमानीताः स्युस्तानुपदिशति पुराणविद्या वेदः सोऽयमिति पुराणमाचक्षीत ।**

पुञ्जिष्ठाः कैवर्ताः ।

**नवमेऽहनि तार्क्ष्यो[2] वैपश्चितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिण इत्युपसमानीताः स्युस्तानुपदिशतीतिहासो वेदः सोऽयमितीतिहासमाचक्षीत । दशमेऽहनि धर्म इन्द्रस्तस्य देवा विशस्त इम आसत इति युवानः श्रोत्रिया अप्रतिग्राहका इत्युपसमानीताः स्युस्तानुपदिशति सामवेदो वेदः सोऽयमिति साम गायात् । एवमेतत्पर्यायशः संवत्सरमाचक्षीत ।**

एवमेतत्पारिप्लवाख्यानं पर्यायशः संवत्सरमाचक्षीत ।

**दशमीं दशमीं समापयन् ।**

एवमेतत्पारिप्लवाख्यानं पर्यायशो दशमीं दशमीं समापयन्संवत्सरमाचक्षीत ।

**संवत्सरान्ते दीक्षेत ॥ ७ ॥**

ततः संवत्सरेऽतीते दीक्षेत ॥ ७ ॥

---

१ ग. व. सर्पणो° । २ क. ङ. ञ. तार्क्ष्यो वै° ।

**त्रीणि सुत्यानि भवन्ति ।**

अश्वमेधे त्रीणि सुत्यानि भवन्ति ।

**गोतमस्तोमः प्रथमं द्वितीयस्याह्नः पशोरुपाकरणकालेऽश्वमानीय बहिर्वेद्यास्तावेवाऽऽस्थापयेयुः ।**

अध्वर्यव इति शेषः ।

**स चेदवघ्रायादुपवर्तेत वा यज्ञसमृद्धिं विद्यात् ।**

अवजिघ्रेत्, चङ्क्रम्येत वेत्यर्थः । अन्यतरदम(य)मश्वः कुर्यात्तदा यज्ञसमृद्धिर्भवतीति जानीयात् ।

**न चेत्सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेत् ।**

स यद्येतदुभयं न कुर्यादश्वस्तदा नैमित्तिकमिदम् । सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेद्धोता ।

**तमवस्थितमुपाकरणाय यदक्रन्द इत्येकादशभिः स्तौत्यप्रणुवन् ।**

तमितिवचनेन स्तौतित्वचोदनाया अप्येतत्संस्कारकर्म तमश्वमभिदध्यादित्यर्थः । एकादशभिरित्यृग्विशेषणं सूक्तविशेषणत्वेऽभिधानासंभवात् । अप्रणुवन्निति प्रतिषेधसामर्थ्यात्सामिधेनीधर्मस्य कस्यचित्प्राप्तिरवगन्तव्या । तच्चैकश्रुत्यम् । अत एकश्रुत्याऽर्धर्चेऽर्धर्चेऽवसायाप्रणुवन् ।

**अनुस्वाध्यायमित्येके ।**

यथाम्नातं त्रैस्वर्येणेत्येकेऽनुमन्यन्ते । उभयोः पक्षयोस्त्रिर्वचनमाद्योत्तमयोर्न भवति ।

**अध्रिगो शमीध्वमिति शिष्ट्वा षड्विंशतिरस्य वङ्क्रय इति वा मा नो मित्र इत्यावपेतोपप्रागाच्छसनं वाज्यर्वेति च द्वे ।**

'अध्रिगो शमीध्वम्' इत्यस्मात्पुरस्तात् 'षड्विंशतिरस्य वङ्क्रय' इत्यस्माद्वा पुरस्तात् 'मा नो मित्र' इति सूक्तमावपेत । उपप्रागादिति च द्वे ऋचौ । अत्रापि निगदान्तःपातित्वादैकश्रुत्यं भवति नान्यः सामिधेनीधर्मः ।

**संज्ञप्तमश्वं पत्न्यो[2] धून्वन्ति दक्षिणान्केशपक्षानुद्ग्रथ्येतरान्प्रचृत्य[3] सव्यानूरूनाघ्नानाः ।**

उद्ग्रथ्योर्ध्वं बन्धयित्वा प्रचृत्य विस्रस्य सव्यैः पाणिभिः सव्यानूरूनाघ्नाना दक्षिणैः पाणिभिर्मृतमश्वं वासोभिर्धून्वन्ति पत्न्यः ।

---

१ घ. ङ. ञ. °तमम° । च °तरम° । ग. तरदश्वः । २ क. ङ. पत्यो धू° । ३ ख. घ. ङ. न्प्रवृत्य ।

अथास्मै महिषीमुपनिपातयन्ति ।

अथानन्तरमस्मा अश्वाय महिषीं ज्येष्ठां भार्यामश्वसमीपे निपातयन्ति ।

तां होताऽभिमेथति माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः प्रतिलामीति ते पिता गभे मुष्टिमतंसयदिति ।

तां महिषीमश्वसमीपे शयानां 'माता च ते पिता च ते' इत्यनयर्चाऽभिमेथति, आक्रोशतीत्यर्थः ।

सा होतारं प्रत्यभिमेथत्यनुचर्यश्च शतं राजपुत्र्यो माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः । वीवक्षत इव ते मुखं होतर्मा त्वं वदो बह्विति ।

सा महिषी होतारं प्रत्यभिमेथत्यनुचरीभिः शतेन राजपुत्रीभिः सहानयर्चा ।

वावातां ब्रह्मोर्ध्वामेनामुच्छ्रयताद्गिरौ भारं हरन्निव । अथास्यै मध्यमेजतु शीते वाते पुनन्निवेति ।

वावाता द्वितीयभार्या । तां ब्रह्माऽभिमेथति ।

सा ब्रह्माणं प्रत्यभिमेथत्यनुचर्यश्च शतं राजपुत्र्य ऊर्ध्वमेनमुच्छ्रयत गिरौ[2] भारं हरन्निव । अथास्य मध्यमेजतु शीते वाते पुनन्निवेति[3] ।

सा वावाता तं ब्रह्माणं प्रत्यभिमेथत्यात्मनोऽनुचरीभिः शतेन राजपुत्रीभिः सह ।

सदः प्रसृप्य स्वाहाकृतिभिश्चरित्वा ॥ ८ ॥

सदः प्रसृप्यास्य पुनः सर्पणविधानादभिमेथतीत्यादि बहिर्वेद्यश्वसमीपे स्थित्वा कर्तव्यमिति गम्यते ॥ ८ ॥

ब्रह्मोद्यं वदन्ति ।

ब्रह्मोद्यं नाम वक्ष्यमाणमन्त्रैः प्रश्नप्रतिवचनरूपेण यद्वदनं तस्येह संज्ञा ।

कःस्विदेकाकी चरति क उस्विज्जायते पुनः । किंस्विद्धिमस्य भेषजं किंस्विदावपनं महदिति होताऽध्वर्युं पृच्छति । सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महदिति प्रत्याह । किंस्वित्सूर्यसमं ज्योतिः किं समुद्रसमं सरः । कःस्वित्पृथिव्यै वर्षीयान्कस्य

१ ग. °नन्नवे° । २ क. ङ. ञ. °तेन वा° । ३ ग. °नन्नेवे° ।

मात्रा न विद्यत इत्यध्वर्युर्होतारं पृच्छति । सत्यं सूर्यसमं ज्योतिर्द्यौः समुद्रसमं सरः । इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यत इति प्रत्याह । पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ । केषु विष्णुस्त्रिषु पदेष्वस्थः केषु विश्वं भुवनमाविवेशेति ब्रह्मोद्गातारं पृच्छति । अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश । सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठमिति प्रत्याह । केष्वन्तःपुरुष आविवेश कान्यन्तःपुरुष आर्पितानि एतद्ब्रह्मन्नुपवल्हामसि त्वा किंस्विन्नः प्रतिवोचास्यत्रेत्युद्गाता ब्रह्माणं पृच्छति । पञ्चस्वन्तःपुरुष आविवेश तान्यन्तःपुरुष आर्पितानि । एतत्त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मदिति प्रत्याह । प्राञ्चमुपनिष्क्रम्यैकैकशो यजमानं पृच्छन्ति पृच्छामि त्वा परमन्तं पृथिव्या इति ।

स्वायतने प्राङ्मुखमुपविष्टं यजमानमेकैकश ऋत्विजः क्रमेण पृच्छन्ति ' पृच्छामि त्वा परमन्तं पृथिव्यै ' इत्यनयर्चा ।

इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह ।

यजमान इति शेषः ।

महिम्ना पुरस्तादुपरिष्टाच्च वपानां चरन्ति ।

अश्वमेधे महिमानौ नाम ग्रहौ स्तः, तौ सौवर्णराजताभ्यां पात्राभ्यां गृह्येते । वपानामुभयतस्ताभ्यां चरन्ति । तयोरनुवाक्या प्रैषयाज्या वक्ष्यन्ते ।

सुभूः स्वयंभूः प्रथमम[3]न्तर्महत्यर्णवे दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः । होता यक्षत्प्रजापतिं महिम्नो जुषतां वेतु पिबतु सोमं होतर्यजेति प्रैषः । तवेमे लोकाः प्रदिशो दिशश्चेति याज्या । अश्वोऽजस्तूपरो गोमृग इति प्राजापत्याः ।

अश्व एकः पशुः । तूपरोऽजस्य विशेषणं तच्चाशृङ्गता । गोमृगोऽन्यः पशुः, एते त्रयः

---

°मन्माय° । ३ ग. °न्तर्भवत्य° ।

**इतरेषां पशूनां प्रचरन्ति ।***

अश्वादीनां यागानन्तरमितरेषां पशूनां वपादिभिः प्रचरन्ति ।

तेषां प्रचारे देवतामाह—

**वैश्वदेवी[1] क्लृप्तिः ।**

विश्वदेवतत्वं तेषां प्रचारक्लृप्तिः । विश्वदेवा एषां देवतेत्यर्थः ।

**पञ्चमेन पृष्ठ्याह्ना शस्यं व्यूळ्हस्य ॥ ९ ॥**

अश्वमेधे यद्द्वितीयमहस्तस्य शस्यं व्यूढस्य पृष्ठ्यस्य पञ्चमेनाह्ना व्याख्यातम् । पृष्ठ्यग्रहणं विस्पष्टार्थम् ॥ ९ ॥

**तस्य विशेषान्वक्ष्यामः ।**

प्रतिज्ञासूत्रमिदम् । प्रतिज्ञाप्रयोजनं तस्य सर्वप्रकारस्य प्रगाथानेक इत्यादिकल्पयुक्तस्य ग्रहणार्थम् ।

**अग्निं तं मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टात् ।**

एतद्द्विसूक्तमाज्यं भवति ।

**प्रउगतृचेष्वैकाहिकास्तृचाः ।**

उपरिष्टात्कर्तव्या इत्यर्थः ।

**त्रिकद्रुकेषु महिषो यवाशिरमिति मरुत्वतीयस्य प्रतिपदेका तृचस्थान ऐकाहिकोऽनुचरः सूक्तेषु चान्त्यमुद्धृत्यैकाहिकमुपसंशस्य तस्मिन्निविदं दध्यात् ।**

'इन्द्र पिब तुभ्यम्' इत्येतदुद्धृत्य तत्स्थान ऐकाहिकं सूक्तमुपसंशस्य तस्मिन्नैकाहिके निविदं दध्यात् । उपसंशस्येतिवचनं पूर्वेण[2] सूक्तेनैकसूक्तत्वप्रदर्शनार्थम् । अतोऽत्र संसवे सति तस्मादपि पुरस्तात्कयाशुभीयादि भवति । तस्मिन्निविदमितिवचनमेकसूक्तत्वेऽपि निवित्प्रवेशे तस्यैवैकाहिकस्य गणना कर्तव्या न पूर्वेण सहेत्येवमर्थम् ।

**एवं निष्केवल्ये ।**

एवमिति । सूक्तेषु चान्त्यमुद्धृत्येत्येवमादि कर्तव्यमित्यर्थः ।

**अभि त्यं देवं सवितारमोण्योरिति वैश्वदेवस्य प्रतिपदेका तृचस्थान ऐकाहिकोऽनुचरः सूक्तेषु**

* एतत्सूत्रं 'वैश्वदेवी क्लृप्तिः' इत्यग्रिमसूत्रोत्तरं छ. ज. संज्ञकयोर्मूलपुस्तकयोर्वर्तते ।

1 क. ग. ङ. च. झ. विश्वे दे° । 2 च. संसवे । 3 च. °दिभर्वे° ।

**चैकाहिकान्युपसंशस्य तेषु निविदो दध्यात् ।**

उक्तार्थमेतत् । अत्र तेषु निविद इत्यस्य प्रयोजनान्तरमप्यस्ति, त्रैष्टुभान्येषां तृतीयसवनानीति तत्र वचनमस्ति तस्यापि बाधनार्थम् । अतोऽत्रापि निविदतिपत्तौ जागतेष्वेवान्येषु निविद्धेया भवति ।

**एवमेवाऽऽग्निमारुते ।**

उक्तार्थमेतत् ।

**चतुर्थं पृष्ठ्याहस्तत्तमम् ।**

अश्वमेधे त्रिरात्रस्य यदुत्तममहस्तच्चतुर्थं पृष्ठ्याहर्भवति ।

**ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमोऽप्तोर्यामो वा ।**

एषामन्यतमो वोत्तममहर्भवति । अतिरात्रस्त्वन्य इतिवचनादतिरात्रसंस्थमेव भवति । सर्वेषु सर्वस्तोमग्रहणेषु ' गौरुमयसामा सर्वस्तोमः ' इत्येष एव ग्रहीतव्यो नाश्वमेधे । अश्वमेधे त्वहीनत्वात्तृतीयमाभिप्लविकं ग्रहीतव्यम् । ' षळहान्ता आभिप्लवात् ' इतिवचनात् । स एव सर्वस्तोमोऽतिरात्रश्च कर्तव्यः ।

**भूमिपुरुषवर्जमब्राह्मणानां वित्तानि प्रतिदिशमृत्विग्भ्यो दक्षिणा ददाति । प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुरेता एव होत्रका अन्वायत्ता अन्वायत्ताः ॥ १० ॥**

होत्रकशब्देन[2] मुख्या उच्यन्ते । स्वस्य स्वस्य मुख्यस्य या या दिक्तामेव दिशं तदीयाः पुरुषा अन्वायत्ताः । ऋत्विग्भ्य इति वचनं ताभ्यो दिग्भ्य आहृत्य दक्षिणापथेन नीत्वा दातव्यमित्येवमर्थम् ॥ १० ॥

---

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायां दशमोऽध्यायः ॥ १० ॥

---

अथैकादशोऽध्यायः ।

---

**अथैतेषामह्नां योगविशेषान्वक्ष्यामो यथायुक्तानि यस्मै यस्मै कामाय भवन्ति ।**

पञ्चविंशतिरहान्युक्तानि । एतेभ्य एवाहोभ्यो हीनैकाहानित्यतिदेशप्रसङ्गात्ते हीनैकाहा उक्ताः । अथेदानीं तेषां सात्रिकाणामह्नां योगविशेषान्संघातविशेषान्सत्रशब्दवा-

---

१ ग. ङ. ञ. °प्यरिम त्रै° । ब. °प्यस्तीति, त्रै° । २ क. ग. ङ. ञ. °ब्देनाम्° । च. °ब्देनाम्° । ३ च. °णा यथेतं नी° । ४ च. °भ्योऽही° । ५ च. °तेऽही° ।

च्यान्वक्ष्यामः । यथा यथा तान्यहानि व्यतिषक्तानि सत्राणि भूत्वा यस्मै यस्मै कामाय भवन्ति तथा तथा वक्ष्याम इत्यर्थः ।

**अयमेवैकाहोऽतिरात्र आदौ प्रायणीयः ।**

अयमेवेति ज्योतिष्टोमो गृह्यते । एकाहग्रहणं संनिहिताश्वमेधस्याह्नो ग्रहणं मा भूदित्येवमर्थम् । एष सत्राणामादौ कर्तव्यः प्रायणीयसंज्ञश्च भवति ।

**एषोऽन्त्य उदयनीयः ।**

एष एव सत्राणामन्ते भवतीत्यर्थः । स उदयनीयसंज्ञो भवति ।

**अव्यक्तो मध्ये ।**

अव्यक्त इति । अविशेषित इत्यर्थः । सत्राणां मध्येऽविशेषितो योऽतिरात्रो विहितः स ज्योतिष्टोमोऽतिरात्र इत्यवगन्तव्यः ।

**अहीनेषु वैश्वानर एष एव ।**

अहीनेषु वैश्वानरशब्देन यो विहितः स च ज्योतिष्टोमोऽतिरात्र एवेत्यर्थः ।

**तावन्तरेण व्यूह्ळो दशरात्रः ।**

तयोः प्रायणीयोदयनीययोरतिरात्रयोर्मध्ये व्यूढो दशरात्रो भवति ।

**एषा प्रकृतिः सत्राणाम् ।**

एवंरूपो द्वादशाहः सत्राणां प्रकृतिर्भवति ।[3]

**तत्राऽऽवापस्थानम् ।**

अस्यां प्रकृतौ सिद्धायां त्रयोदशरात्रादिषु सत्रेष्वहरावापे कर्तव्ये सत्त्वावापस्थानमुच्यते ।

**ऊर्ध्वं दशरात्रादेकाहार्थे महाव्रतम् ।**

एकाहेन प्रयोजने साध्ये तस्याऽऽवापस्थानमिदम् । ऊर्ध्वं दशरात्रादुदयनीयात्प्राग्महाव्रतमावप्तव्यम् । एकाहावापे साध्ये महाव्रतमेवाऽऽवप्तव्यम् । उदयनीयात्प्रागेवेत्युभयमत्र नियम्यते ।

**प्राग्दशरात्रादितरेषामह्नाम् ।**

महाव्रतादितरेषां द्व्यहादीनामह्नामावापस्थानं प्राग्दशरात्रात्प्रायणीयादूर्ध्वं भवति ।

**द्व्यहार्थे गोआयुषी त्र्यहार्थे त्रिकद्रुका अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते चतुरहार्थे त्रिकद्रुका महाव्रतं च ।**

अत्रापि महाव्रतं दशरात्रादूर्ध्वमेव भवति, इतरेषामिति वचनात् ।

---

१ क. ग. ङ. झ. एषां स° । २ च. °ध्ये चावागावि° । ३ ङ. °ति । सत्रा° ।

**पञ्चाहार्थेऽभिप्लवपञ्चाह उत्तमस्य तु षष्ठात्तृतीयसवनम् ।**

अभिप्लवपञ्चाहे यदुत्तममहः पञ्चमं तस्य स्वं तृतीयसवनमुत्सृज्याऽऽभिप्लविकस्य षष्ठस्य यत्तृतीयसवनं तदत्र कर्तव्यम् ।

**षळहार्थेऽभिप्लवः षळहः । एवंन्याया आवापाः ।**

शाखान्तरोक्ताहरन्तरावापेऽप्यावापस्यायमेव न्याय इत्यवगन्तव्यम् ।

**षळहान्ताः पुनः पुनः ।**

एवमावापन्याये समाप्ते यावत्प्रयोजनं पुनः पुनरेकादयः षळहान्ता आवापाः कर्तव्या इत्यर्थः ।

**पूर्णः पूर्णश्च षळहस्तन्त्रतामेव गच्छति ॥ १ ॥**

प्रकृतितां गच्छतीत्यर्थः ॥ १ ॥

**द्वौ त्रयोदशरात्रौ ।**

के ते योगविशेषाः, उच्यन्ते । अत्र द्व्यादयः संख्याः प्रदर्शनार्थाः । अन्येऽप्यसमाम्नाता बहवः सन्तीति ।

**ऋद्धिकामानां प्रथमं पृष्ठ्यं छन्दो-**
**मांश्चान्तरा सर्वस्तोमोऽतिरात्रः ।**

दशरात्रस्य यः पृष्ठ्यस्तस्मादूर्ध्वं छन्दोमेभ्यः पुरस्तात्सर्वस्तोमोऽतिरात्रो भवति । तेन तानि त्रयोदशाहानि भवन्ति ।

**न्यायक्लृप्तं व्रतवन्तं प्रतिष्ठाकामा द्वितीयम् ।**

उपेयुरिति शेषः । पूर्वोक्तन्यायेन क्लृप्तं महाव्रतवन्तमित्यर्थः ।

**त्रीणि चतुर्दशरात्राणि सार्वकामिकं प्रथमम् ।**

सर्वे कामा अस्य प्रयोजनमिति सार्वकामिकम् ।

**द्वौ पृष्ठ्यावावृत्त उत्तरः ।**

आवृत्तो विपर्यस्त इत्यर्थः । प्रायणीयोदयनीयाभ्यां च सह चतुर्दश संपद्यन्ते ।

**तल्पे वोदके वा विवाहे वा मीमांस्यमाना द्वितीयम् ।**

तल्पः शयनम्, उदकमुदकक्रियादि ज्ञातिकार्यं, विवाहो यौनादिसंबन्धः, एवमादिषु कार्येषु ये योग्या योग्यतया शक्यन्ते ते द्वितीयं चतुर्दशरात्रमुपेयुः ।

---

१ [illegible] । २ [illegible] ङ. झ. °मापाप° । ३ च. विभागाः, उ° । ४ ग. °व्रतमि° ।

**पृष्ठ्यमभितस्त्रिकद्रुकाः ।**

अत्राऽऽवृत्त इत्यनुवर्तते । तेनोत्तरे त्रिकद्रुका आवृत्ता इति गम्यते । प्रायणीयोदयनीयाभ्यां चतुर्दशत्वम् ।

**न्यायक्लृप्तं द्व्यहोपजनं प्रतिष्ठाकामास्तृतीयम् ।**

न्यायक्लृप्तं द्व्यहोपजनमिति । दशरात्रात्पुरस्ताद्गोआयुषी भवत इत्यर्थः ।

**चत्वारि पञ्चदशरात्राणि देवत्वमीप्सतां प्रथमं प्रथमस्य चतुर्दशरात्रस्य पृष्ठ्यमध्ये महाव्रतम् ।**

अत्राहःक्लृप्तं प्रथमं चतुर्दशरात्रे यान्यहानि तान्येव, विशेषस्तु पृष्ठ्ययोर्मध्ये महाव्रतमधिकं भवति ।

**ब्रह्मवर्चसकामा द्वितीयं द्वितीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयादनन्तरः ।**

द्वितीयस्य द्वितीयाहान्येव, विशेषश्चाग्निष्टुद्द्वितीयमहर्भवति ।

**सात्राहीनिका उभौ लोकावाप्स्यतां तृतीयम् ।**

सत्रेण प्राप्यः सात्रः, अहीनप्राप्य आहै(ही)निकः । तावुभौ लोकौ प्राप्तुमिच्छतां तृतीयं पञ्चदशरात्रं भवति । उभयोर्लोकयोः सर्वान्कामानुपभुज्य ततो ब्रह्माणि विलयमिच्छतामित्यर्थः ।

**तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयस्थाने न्यायक्लृप्तस्त्र्यहोपजनः शेषः ।**

तृतीयस्य चतुर्दशरात्रस्येत्येतावतः प्रयोजनं न विद्मः, अग्निष्टुत्प्रायणीयस्थाने न्यायक्लृप्तस्त्र्यहोपजनः शेष इत्येतावतैवाहःक्लृप्तेः पर्याप्तत्वात् । अत्राहान्यग्निष्टुत्रिकद्रुका दशरात्रोऽतिरात्र इति ।

**न्यायक्लृप्तं त्र्यहोपजनं प्रतिष्ठाकामाश्चतुर्थम् ।**

प्रायणीयेत्रिकद्रुका दशरात्र उदयनीय इति ।

**षोळशरात्रं चतूरात्रोपजनमन्नाद्यकामाः ।**

प्रायणीयस्त्रिकद्रुका दशरात्रो महाव्रतमुदयनीय इति ।

**सप्तदशरात्रं पञ्चरात्रोपजनं पशुकामाः ।**

अतिरात्रोऽभिप्लवपञ्चाहो दशरात्रोऽतिरात्र उत्तमस्य तु षष्ठात्तृतीयसवनमित्येवं पञ्चाहो भवति ।

---

१ घ. °भ्यां च च° । २ च. °यस्त्रिक° ।

**अष्टादशरात्रमायुष्कामाः ।**

अतोऽतिरात्रोऽभिप्लवः षडहो दशरात्रोऽतिरात्रः ।

**षळहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः ।**

अष्टादशरात्रं प्रकृतिं कृत्वोत्तरेष्वावापः कर्तव्य इत्यर्थः ।

**एकान्नविंशतिरात्रमेकरात्रोपजनं ग्राम्यानारण्यान्पशूनवरुरुत्स्यमानाः ।**

ग्राम्यान्पशूनारण्यांश्च पशूनवरोद्धुमिच्छन्त इत्यर्थः ।

**विंशतिरात्रं प्रतिष्ठाकामा अभिजिद्विश्वजितावभिप्लवादूर्ध्वम् ॥ २ ॥**

अभिजिद्विश्वजितावभिप्लवादूर्ध्वमन्यस्मिन्नेव स्थानेऽभिजिद्विश्वजितौ गोआयुषोरपवादः, षडहादूर्ध्वमित्यत्र वचनात् । अवचने प्रायणीयादतिरात्रादूर्ध्वमावापस्थानं भवति । प्रायणीयोदयनीयौ तावत्सत्राणां प्रत्येकं तन्त्रीभूतौ नेतरेतरयुक्तौ । द्वादशाहाहीनयोर्दशरात्रः संघातरूपेणैव, तन्त्रीभूतौ नैकैकश्येन । षडहानामपि तन्त्रीभावो दशरात्रेण सहैवेति कृत्वा प्रायणीयोदयनीययोरेवोर्ध्वमधस्ताच्चाऽऽवापस्थानमसति वचन इति सिद्धम् ॥ २ ॥

**द्वावेकविंशतिरात्रौ प्रतिष्ठाकामानां प्रथमं त्रयाणामभिप्लवानां प्रथमावन्तराऽतिरात्रः ।**

प्रायणीयस्त्रयोऽभिप्लवाः षळहा उदयनीयः प्रथमयोः षळहयोर्मध्ये ज्योतिष्टोमोऽतिरात्र इत्येकविंशतिरहानि ।

**ब्रह्मवर्चसकामा द्वितीयं नवरात्रस्याभिजिद्विश्वजितोः स्थाने द्वौ पृष्ठ्यावावृत्त उत्तरः ।**

नवरात्रे यावभिजिद्विश्वजितौ तयोः स्थाने द्वौ पृष्ठ्यौ भवतः, तयोरुत्तर आवृत्तो भवति । अतिरात्रः पृष्ठ्यः स्वरसामानो विषुवानावृत्ताः स्वरसामान आवृत्तः पृष्ठ्य उदयनीय इति ।

**संवत्सरसंमिता इत्याचक्षते ।**

विषुवन्मध्यत्वादिना संवत्सरसाम्यादेता रात्रीः संवत्सरसंमिता इत्याचक्षते पूर्वे सर्वे याज्ञिकाः ।

**द्वाविंशतिरात्रं चतूरात्रोपजनमन्नाद्यकामाः ।**

प्रायणीयस्त्रिकद्रुका अभिप्लवो दशरात्रो महाव्रतमुदयनीयः ।

---

ना° । २ च. अस्मिन्ने° । ३ च. असति व° । ४ घ. च. भावे द् ।

**त्रयोविंशतिरात्रं पञ्चरात्रोपजनं पशुकामाः ।**

आयणीयोऽभिप्लवपञ्चाहोऽभिप्लवो दशरात्र उदयनीयः ।

**द्वौ चतुर्विंशतिरात्रौ प्रजातिकामाः पशुकामा वा प्रथमम् ।**

प्रायणीयो द्वावभिप्लवौ दशरात्र उदयनीयः ।

**षळहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः स्वर्गे लोके सत्स्यन्तो ब्रध्नस्य विष्टपं रोक्ष्यन्तो द्वितीयम् ।**

सत्स्यन्त इति सदेरिदं सन्नन्तस्य रूपम् । स्वर्गे प्रतिष्ठातुमिच्छन्त इत्यर्थः । ब्रध्नस्य विष्टपं रोक्ष्यन्तः, आदित्यस्य मण्डलमारोढुमिच्छन्त इत्यर्थः । इदं वेदं वेच्छतां चतुर्विंशतिरात्रं द्वितीयं भवति, वाशब्दस्याभावेऽपोष्यमाणभेदात् ।

**पृष्ठ्यस्तोमस्त्रयस्त्रिंशोऽनिरुक्तो विशालः पृष्ठ्यस्तोमा एकविंशत्रिणवत्रयस्त्रिंशाः प्रतिलोमाः पूर्वस्मिंस्त्र्यहेऽनुलोमा उत्तरस्मिंस्त्स विशालोऽपि वोत्तर एव त्र्यहः प्रतिलोमोऽनुलोमश्चानिरुक्तमहरावृत्तः पृष्ठ्यस्तोमः ।**

तस्येदमहःकल्पनम् । पृष्ठ्यस्तोमो नाम वैरूपादीनामभावे पृष्ठ्यस्तोम इत्युक्तः पृष्ठ्यविशेषः । त्रयस्त्रिंशोऽनिरुक्त इति । अनिरुक्त एकाहस्त्रयस्त्रिंशस्तोमः कर्तव्य इत्यर्थः । विशालः पृष्ठ्य इति । पृष्ठ्य एव विशालगुणकः कर्तव्य इत्यर्थः । विशालस्वरूपप्रदर्शनार्थोऽयं ग्रन्थः—स्तोमा एकविंशत्रिणवत्रयस्त्रिंशा इत्यादिः स विशाल इत्येतत्पर्यन्तः । पृष्ठ्यस्योत्तरे त्र्यहे ये स्तोमा एकविंशत्रिणवत्रयस्त्रिंशास्ते पूर्वस्मिंस्त्र्यहे प्रतिलोमाः कर्तव्यास्त्रयस्त्रिंशत्रिणवैकविंशा इति । त एवोत्तरे त्र्यहेऽनुलोमाः कर्तव्याः, एकविंशत्रिणवत्रयस्त्रिंशा इति । स पृष्ठ्य एवं कृते विशालो भवतीत्यर्थः । एवं वा विशालपृष्ठ्यस्योत्तर एव त्र्यहः प्रतिलोमश्चानुलोमश्च कर्तव्यः, न पूर्वस्त्र्यहः कर्तव्य इति । यः पुनरप्यनिरुक्त एकाहस्त्रयस्त्रिंशस्तोम एव । पृष्ठ्यस्तोमश्चाऽऽवृत्तः पुनरपि कर्तव्यः ।

**त्रिवृदनिरुक्तः ।**

स एवानिरुक्त एकाहः पुनस्त्रिवृत्स्तोमः कर्तव्यः ।

**ज्योतिरुभयसामा ।**

ज्योतिष्टोमोऽग्निष्टोम उभयसामेत्यर्थः । तत उदयनीयोऽतिरात्रः प्रायणीयः पृष्ठ्यस्तोमस्त्रयस्त्रिंशोऽनिरुक्तो विशालः पृष्ठ्योऽनिरुक्तस्त्रयस्त्रिंश आवृत्तः पृष्ठ्यस्तोमस्त्रिवृदनिरुक्त उभयसामा ज्योतिष्टोमोऽग्निष्टोमोऽतिरात्र इति ।

संसदामयनमित्येतदाचक्षते । पञ्चविंशतिरात्रमेकरात्रोपजनमन्नाद्यकामाः । षड्विंशतिरात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः । सप्तविंशतिरात्रं त्रिरात्रोपजनमृद्धिकामाः । अष्टाविंशतिरात्रं चतूरात्रोपजनं ब्रह्मवर्चसकामाः । एकान्नत्रिंशद्रात्रं पञ्चरात्रोपजनं परमां विजितिं विजिगीषमाणाः । त्रिंशद्रात्रमन्नाद्यकामाः । षळहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः । एकत्रिंशद्रात्रमेकरात्रोपजनमन्नाद्यकामाः । द्वात्रिंशद्रात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः ॥ २ ॥

त्रीणि त्रयस्त्रिंशद्रात्राणि प्रतिष्ठाकामानां प्रथमं त्रयाणामभिप्लवानामुपरिष्टादुपरिष्टादतिरात्रः ।

ये त्रयोऽभिप्लवा[1] दशरात्रेण[2] सह तन्त्रीभूतास्तेषामेकैकस्योपरिष्टात्प्रकृतोऽतिरात्रः कर्तव्यः ।

ब्रह्मवर्चसकामा द्वितीयं चतुर्णां पञ्चरात्राणामावृत्त उत्तम उत्तमौ चान्तरा सर्वस्तोमोऽतिरात्रः ।

षडहापवादः । पञ्चाहाश्चत्वारस्तेषां चतुर्थ आवृत्तः, अन्त्ययोर्मध्ये सर्वस्तोमोऽतिरात्रः प्रायणीयोदयनीयौ दशरात्रं चेति ।

उभौ लोकावाप्स्यतां तृतीयं षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्रः ।

न्यायापवादः । पञ्चाहाः षट् तेषां मध्ये विश्वजिदतिरात्रः ।

आवृत्तास्तूत्तरे त्रयः ।

तेषां पञ्चरात्राणामुत्तरे त्रयः पञ्चाहा आवृत्ता भवेयुः प्रायणीयोदयनीयौ चेति ।

चतुस्त्रिंशद्रात्रं चतूरात्रोपजनमन्नाद्यकामाः ।

अतिरात्रस्त्रिकद्रुकास्त्रयोऽभिप्लवा दशरात्रो महाव्रतमतिरात्रः ।

पशुकामानामुत्तराणि चत्वारि ।

उत्तराणि चत्वारि सत्राणि पशुकामानां भवन्ति । तेषामयमेव काम इत्यर्थः ।

पञ्चत्रिंशद्रात्रः पञ्चरात्रोपजनः ।

अतिरात्रोऽभिप्लवपञ्चाहस्त्रयोऽभिप्लवा दशरात्रोऽतिरात्रः ।

---

१ च. °रात्रश्चेति । ३ च. पञ्चाहानामु° । २ च. °पूर्व प°।

**षट्त्रिंशद्रात्रे षळह उपजायते सतन्त्रस्योपजनं वक्ष्यामः सप्तत्रिंशद्रात्र एकरात्रोपजनः ।**

अतिरात्रश्चत्वारोऽभिप्लवा दशरात्रो महाव्रतमतिरात्रः ।

**अष्टात्रिंशद्रात्रो द्विरात्रोपजनः ।**

एतावत्पशुकामानाम् ।

**एकान्नचत्वारिंशद्रात्रं त्रिरात्रोपजननमनन्तां श्रियमिच्छन्तः । चत्वारिंशद्रात्रं चतूरात्रोपजनं परमायां विराजि प्रतितिष्ठन्तः । एकचत्वारिंशद्रात्रप्रभृतीन्युत्तराणि न्यायेनाष्टाचत्वारिंशद्रात्रात् । पञ्चाशद्रात्रप्रभृतीनि चाऽऽषष्टिरात्रात् । द्विषष्टिरात्रप्रभृतीनि चैकोनशतरात्रात् ।**

एतानि सूत्रत्रयोक्तानि न्यायक्लृप्तान्येव[1] ।

**तत्रैकरात्रचतूरात्रोपजनानि व्रतवन्ति ॥ ४ ॥**

इदमपि न्यायप्राप्तमेव वचनम् । प्रयोजनं शास्त्रान्तरे महाव्रतापवाद उक्तस्तथाऽप्यस्माकं महाव्रतमेवेति प्रदर्शनार्थम् । एकान्नपञ्चाशद्रात्राण्येकषष्टिरात्रं च शतरात्रं च विशेषेण वक्ष्यति । शतरात्रपर्यन्ते न्यायकल्पनेनैव कल्पयितव्यम् ॥ ४ ॥

**सत्रैकान्नपञ्चाशद्रात्राणि विपाप्मना वत्स्यन्तः प्रथमम् ।**

पाप्मना व्यावृत्तिमिच्छन्त इत्यर्थः ।

**अतिरात्रस्त्रीणि त्रिवृन्त्यहान्यतिरात्रो दशपञ्चदशान्यतिरात्रो द्वादशसप्तदशान्यतिरात्रः पृष्ठ्योऽतिरात्रो द्वादशैकविंशान्यतिरात्रः ।**

अतिरात्राः षट्[2] प्राकृता[3] एव, अन्यानि त्रिचत्वारिंशदहानि[4] ।

* तेष्वेकोऽग्निष्टोमसंस्थः, एकः षोळशिसंस्थः, उक्थ्या इतर इति तदर्थमिदमाह—

**त्रिवृतां प्रथमोऽग्निष्टोमः षोळश्युत्तमः पञ्चदशानामुक्थ्या इतरे विधृतय इत्याचक्षते ।**

एता रात्रीर्विधृतय इत्याचक्षते वैदिकाः ।

---

* क.—' तेषु कोऽग्निष्टोमसंस्थः कः षोळशिसंस्थः क उक्थ्या इति ' इत्येवं पाठान्तरम् ।

---

१ ग. घ. ङ. झ. °यक्लृप्त° । २ च. षट्त्रिंशत्प्राक्° । ३ ग. घ. ङ. झ. तान्येव । ४ क. ग. ङ. झ. °नि केष्वे° ।

यमातिरात्रं यमां द्विगुणामिव श्रियमिच्छन्तः ।

यमातिरात्रं नामैकान्नपञ्चाशद्रात्रं तदुपेयुर्ये द्विगुणीकृतां यम(मा)मिव श्रियमिच्छन्ति ।

द्वावभिप्लवौ गोआयुषी अतिरात्रौ द्वावभिप्लवावभिजिद्विश्वजितावतिरात्रावेकोऽभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ महाव्रतम् ।

पञ्चाभिप्लवाः षळतिरात्रा उक्ताः, महाव्रतं च प्रायणीयो द्वावभिप्लवावतिरात्रावेकोऽभिप्लवो द्वावतिरात्रौ दशरात्रो महाव्रतमुदयनीय इति ॥

स्वानां श्रैष्ठ्यकामास्तृतीयं चतुर्णां पृष्ठ्याह्नामेकैकं नवकृत्वः ।

पृष्ठ्यस्याऽऽदितश्चत्वार्यहानि गृहीत्वा तेषामेकैकं नवकृत्वः कर्तव्यम् । तानि षट्त्रिंशदहानि भवन्ति ॥

नववर्गाणां प्रथमषष्ठसप्तमोत्तमान्यह्नान्यग्निष्टोमा उक्थ्या इतरे ॥

एकैकस्य नववर्गस्य प्रथमषष्ठसप्तमोत्तमान्यहान्यग्निष्टोमा अग्निष्टोमसंस्था इत्यर्थः ॥ उक्थ्या इतरे पञ्च ।

महाव्रतम् ।

महाव्रतं च भवति । प्रायणीयोदयनीयाभ्यां दशरात्रेण च पूर्यते ।

सवितुः ककुभ इत्याचक्षते ॥ ५ ॥

एता रात्रीः सवितुः ककुभ इत्याचक्षते ॥ ५ ॥

त्रयाणामुत्तरेषां न्यायक्लृप्ता अभिप्लवाः ।

सप्तसु त्रयो गताः । चतुर्थपञ्चमषष्ठानां न्यायक्लृप्ता अभिप्लवा वेदितव्याः । न्यायवचनं प्रायणीयोदयनीयदशरात्राणामबाधनार्थम् । अतः षडभिप्लवा आवप्तव्याः ॥

प्रथमस्य तूर्ध्वं चतुर्थात्सर्वस्तोमोऽतिरात्रः ।

प्रथमस्येति । त्रयाणां प्रथमस्येत्यर्थः । तस्य चतुर्थादभिप्लवादूर्ध्वं सर्वस्तोमोऽतिरात्रः कर्तव्यः । तेनाहःसंख्या पूर्यते । तुशब्दादयमत्र विशेष इति गम्यते ।

उपसत्सु गार्हपत्ये गुग्गुलुसुगन्धितेजनपैतुदारुभिः पृथक्सर्पींषि विपच्यानुसवनं सत्रेषु नाराशंसेष्वाञ्जीरन्नभ्यञ्जीरंश्च ।

उपसत्काले यस्मिन्कस्मिंश्चिदहनि गार्हपत्ये गुग्गुलादिभिस्त्रिभिस्त्रीणि सर्पींष्येकैकेनैकैकं

१ ग. घ. ङ. झ. °णीभूतां श्रि° ।

सर्पिः पृथक्पृथक्पाकं कृत्वा तदनुसवनं सन्नेषु नाराशंसेष्वाञ्जीरन्नभ्यञ्जीरंश्च, गौग्गुलवेन प्रातःसवने सौगन्धिकेन माध्यंदिने सवने पैतुदारवेण तृतीयसवन इति ।

**ये वर्चसा न मायुर्ये वाऽऽत्मानं**
**नैव जानीरंस्त एता उपेयुः ।**

न भायुर्न दीप्येरन्नित्यर्थः । आत्मानं न जानीरन्कस्यान्वये वयमुत्पन्ना इति । त उभये एता रात्रीरुपेयुः ।

**आञ्जनाभ्यञ्जनीया इत्याचक्षते ।**

एतासामाञ्जनाभ्यञ्जनीया इति संज्ञा ।

**एता एव प्रतिष्ठाकामानामाञ्जनाभ्यञ्जनवर्जम् ।**

त्रयाणां प्रथममुच्यते प्रतिष्ठाकामानामाञ्जनाभ्यञ्जने वर्जयित्वा । एता एवेतिवचनमहर्गणाहताकृतं नान्यत् ।

**एतासामेव सर्वस्तोमस्थाने महाव्रतम् ।**

अयमेवात्र विशेषः । ऊर्ध्वं चतुर्थादभिप्लवान्महाव्रतं भवति ।

**ऐन्द्रमत्यन्याः प्रजा बुभूषन्तः ।**

उपेयुरिति शेषः ।

**एतासामेव सर्वस्तोममुद्धृत्य यथास्थानं महाव्रतम् ।**

यथास्थानमिति । दशरात्रादूर्ध्वमित्यर्थः ।

**संवत्सरकामानाप्स्यन्त उत्तमम् ।**

इदानीं सप्तममुच्यते । संवत्सरकामा गवामयनकामा इत्यर्थः ।

**अतिरात्रश्चतुर्विंशं त्रयोऽभिप्लवा नवरात्रोऽभिप्लवौ गोआयुषी दशरात्रो व्रतमतिरात्रः सर्वं प्रत्यक्षोक्तम् । संवत्सरसंमिता इत्याचक्षते ।**

विषुवन्मध्यत्वादिना संज्ञाप्रवृत्तिः ।

**एकषष्टिरात्रं प्रतिष्ठाकामा एतासामेव पृष्ठ्यावभितो नवरात्रम् ।**

अनन्तरोक्तो यो नवरात्रस्तमभितः पृष्ठ्यौ कर्तव्यौ ।

**तयोरावृत्त उत्तरः ।**

तयोरुत्तर आवृत्तो भवति ।

---

१ ग. घ. ङ. झ. °हरहरनाकृ° । २ च. °षः । अत ऊ° ।

**शतरात्रमायुष्कामाश्चतुर्दशाभिप्लवाश्चतुरहोपजनाः ।**

प्रायणीयस्त्रिकद्रुकाश्चतुर्दशाभिप्लवा दशरात्रो महाव्रतमुदयनीय इति ।

**इति रात्रिसत्राणि ॥ ६ ॥**

एवंप्रकाराणि रात्रिसत्राणि समाम्नातान्यसमाम्नातानि च बहूनि सन्तीत्यर्थः ॥ ६ ॥

**अथ गवामयनं सर्वकामाः ।**

अथशब्दः प्रकरणविच्छेदार्थः । रात्रिसत्राण्युक्तानि । अथेदानीं सांवत्सरिकाणां प्रकृतिभूतं गवामयनमुच्यत इति । सर्वे कामा येषां ते सर्वकामाः, ते गवामयनमुपेयुः ।

**प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवा-न्पृष्ठ्यपञ्चमान्पञ्च मासानुपयन्ति ।**

उपेत्येतिवचनं प्रायणीयचतुर्विंशयोः प्रथम एव मासे प्रयोगसिध्द्यर्थम् । इतरथाऽऽद्याभ्यां पूर्यतेऽहोभ्यामिति षष्ठस्याऽऽद्याभ्यां पूरणवचनात्षष्ठ एवानयोः प्रयोगः स्यात्, तन्मासावयवता च स्यात् । तथा सति दृतिवातवतोरयने प्रायणीयचतुर्विंशयोस्त्रयस्त्रिंशस्तोमता स्यात्, तच्चानिष्टमत उपेत्येतिवचनम् । तेन प्रथम एव मास आदित एव प्रयोक्तव्ये प्रथमावयवत्वाय । अतो दृतिवातवतोरयने त्रिवृत्स्तोमता तयोः सिद्धा भवति ।

**अथ षष्ठं संभरन्ति ।**

चतुर्भिरभिप्लवैः पृष्ठ्येन चैकेन पञ्च मासान्कृत्वाऽनन्तरं षष्ठं मासं संभरन्ति नानाहोभिः ।

**त्रीनभिप्लवान्पृष्ठ्यमभिजितं स्वरसाम्न इति ।**

अतोऽष्टाविंशतिरहानि भवन्ति ।

**आद्याभ्यां पूर्यतेऽहोभ्याम् ।**

एतदुक्तं भवति—आद्याभ्यां प्रथमान्मासादुत्कृष्य निर्णयः । त्रिनवत्रयस्त्रिंशे[2] द्वे अहनी द्वितीयं मासं प्राप्तुतः, ताभ्यां ततो द्वे ताभ्यां ततो द्वे ताभ्यां ततो द्वे इत्येवं परम्परया षष्ठं मासं प्राप्तुतः । एवं ताभ्यां तस्य पूरणमिति ।

**इति नु पूर्वः पक्षः ।**

अयं पक्षःशब्दः सकारान्तो नपुंसकलिङ्गः । पक्ष इव पक्षः । यथा शालायां द्वे पक्षसी एवं गवामयनस्य पक्षसी, यथा शालायां मध्यमो वंश एवमस्य विषुवानिति श्रूयते ।

---

१ च. °शत्स्तोम° । २ ग. च. त्रिणव° ।

**अथ विषुवानेकविंशः ।**

एकविंशस्तोम इत्यर्थः ।

**न पूर्वस्य पक्षसो नोत्तरस्य ।**

सोऽयं विषुवान्न पूर्वस्य पक्षसोऽहरिति गण्यते नोत्तरस्यापीत्यर्थः ।

**अथोत्तरं पक्षः ।**

वक्ष्यत इति शेषः । इदमपि सूत्रमत्रास्ति तच्च पठितव्यम् ।

**आवृत्ताः स्वरसामानः षळहाश्चोत्तरस्य पक्षसः ।**

आवृत्तिरत्रैवं भवति । स्वरसामसूक्तमादि प्रथमान्तं[1] षडहेषु पृष्ठ्यादिरभिप्लवान्त[2] अहरावृत्तिरपि भवति । षष्ठादिप्रथमान्ताहरावृत्तिः । समुच्चयार्थश्चशब्दः ।

**स्वरसाम्नो विश्वजितं पृष्ठं त्रीनभिप्लवानिति सप्तमं[3] द्विरात्रोनं कृत्वाऽथ पृष्ठ्यमुखांश्चतुरभिप्लवांश्चतुरो मासानुपयन्ति ।**

सप्तमस्य द्विरात्रोनत्वे सिद्धे द्विरात्रोनत्ववचनमष्टमादिषु पञ्चसु मासेषु ये[4] अन्त्ये द्वे अहनी ते पूर्वस्यै[5] पूरणत्वमपि कुरुत इत्येतस्य सिध्यर्थम् ।

**अथोत्तमं संभरन्ति त्रीनभिप्लवान्गोआयुषी दशरात्रं व्रतोदयनीयाभ्यां सप्तमः पूर्यते ।**

वीचीतरङ्गन्यायेनेत्युक्तम् । अतो व्रतोदयनीये उत्तमाङ्गमेवेति सिद्धम् ।

**इति न्वेकसंभार्यमुत्तरं पक्षः ।**

एको मासो यस्मिन्पक्षसि संभार्यते तदेकसंभार्यं पक्षः । नुशब्दः सर्वत्रोत्तरविवक्षार्थः ।

**अथ द्विसंभार्यम् ।**

अथ द्विसंभार्यं पक्ष उच्यते[6] ।

**व्रतोदयनीये एवोत्तमस्य गोआयुषी सप्तमस्य ।**

व्रतोदयनीये उत्तमस्यान्ते भवत इति सिद्धमेतत्, तस्य वचनमुत्तरविवक्षार्थं गोआयुषोः सप्तमसंबन्धविधानार्थम् । ते च गोआयुषी सप्तमस्यान्त एव भवतः। तस्य द्विरात्रोनत्वाद्व्रतसंबन्धाद्गोआयुषोः संबन्धाच्च संभार्यत्वं द्वयोर्मासयोः ।

**गोआयुषी वा विहरेयुः ।**

एवं वा द्विसंभार्यमुत्तरं पक्षः । गोआयुषोर्विहारेण द्वयोर्मासयोर्विहारपक्षे तयोः स्थानमाह ।

---

१ च. °थममन्त्यं ष° । २ घ. च. °वान्तेष्वह° । ३ ङ. झ. °मं त्रिरा° । ४ ग. घ. ङ. च. झ. ये आद्ये द्वे° । ५ घ. ङ. झ. °स्य सर्वस्य पू° । ६ च. ते प्रथमस्य ।

**गां विश्वजितोऽनन्तरम् ।**

सप्तमे मासे विश्वजितोऽनन्तरं गामुपेयुः ।

**आयुषं पूर्वं दशरात्रात् ।**

उत्तमे मासे दशरात्रात्पूर्वमायुषमुपेयुः ।

**अपि वोर्ध्वं विश्वजितः सप्तमं सवनमासं कृत्वोद्धरेयुर्गोआयुषी दशरात्रं च ।**

अथ वाऽयमन्यः प्रकारः—उत्तरस्य पक्षसः स्वरसामविश्वजित उपेत्य तत ऊर्ध्वं[1] सप्तममपि सवनमासमुपेयुः । पृष्ठ्याभिप्लवाहोभिः कृतो मासः सवनमास इत्युच्यते । विश्वजित ऊर्ध्वं सप्तममपि मासं पृष्ठ्यमुखैश्चतुर्भिरभिप्लवैः कुर्वन्तीत्यर्थः । पूर्वमेवाष्टमादयश्चत्वारो मासाः षडहैरेव सिद्धा आसते । एवं स्थिते सप्तमे मासे चत्वार्यहान्यतिरिक्तानि, तानि वीचीतरङ्गन्यायेनोत्तमं मासं गमयितव्यानि । तेष्वागतेषूत्तममासे षडहान्यतिरिच्यन्ते । तत्र गोआयुषी[2] दशरात्रं चोद्धरेयुः । एवमयं मासः षळहोनो भवति । तत्र षळहार्येऽभिप्लवः षळह इत्यावापे कृते पूर्णो भवति ।

**अपि वोत्तरस्य पक्षसोऽहान्येवाऽऽवर्तेरन्ननुलोमाः षळहाः स्युः षळहा वाऽऽवर्तेरन्ननुलोमान्यहानि ।**

‘ आवृत्ताः स्वरसामानः ’ इत्यस्मिन्सूत्र उभयावृत्तिरुक्ता । इदानीं षळहावृत्तिर्वाऽह[3]रावृत्तिर्वेति विकल्प उच्यते । तेनोभयावृत्तिः पूर्वोक्तेति ।

**इति गवामयनम् ।**

एवंप्रकारं गवामयनं भवत्यस्माकम् । अन्येषामन्येऽपि प्रकाराः सन्ति ।

**सर्वे वा षळहा अभिप्लवाः स्युरभिप्लवाः स्युः ॥ ७ ॥**

**इत्याश्वलायनश्रौतसूत्र उत्तरषट्के पञ्चमोऽध्यायः ॥ ५ ॥**

---

येऽत्र[4] षळहाः सर्वे तेऽभिप्लवा एव भवन्ति न पृष्ठ्या इत्यर्थः । सर्वग्रहणं[5] सर्वपक्षस्याविप्रापणार्थम् ॥ ७ ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायामेकादशोऽध्यायः ॥ ११ ॥

---

१ ग. °पेत्यात ऊ° । क. ङ. ञ. ‘पेत्य त ऊ°’ । २ च. °षी षडहं चो° । ३ च. °त्तिर्वोभयाव्रृ° । ४ क. ग. ङ. ञ. यत्र । ५ ख. °णं पूर्व° ।

अथ षष्ठोऽध्यायः ।

---

**गवामयनेनाऽऽदित्यानामयनं व्याख्यातम् ।**

गवामयनं नाम सांवत्सरिकं सत्रमुक्तम्, इदानीमादित्यानामयनं नाम सत्रमुच्यते । तद्गवामयनेन व्याख्यातम् । गवामयनेनाऽऽदित्यानामयनमित्येतावतैवातिदेशे सिद्धे यद्व्याख्यातवचनं करोति तज्ज्ञापयत्याचार्यः, गवामयने यावन्तो गवामयनविकल्पा उक्तास्तेषामत्राविरोधिनां प्राप्तिरस्तीति । विविधमाख्यातं व्याख्यातमित्यर्थः ।

**सर्वे त्वभिप्लवास्त्रिवृत्पञ्चदशाः ।**

अत्र विशेषा उच्यन्ते । येऽत्राभिप्लवास्ते सर्वे त्रिवृत्पञ्चदशस्तोमाः कर्तव्याः । प्रथमं त्रिवृत्स्तोमं द्वितीयं पञ्चदशस्तोमं तृतीयं त्रिवृत्स्तोममित्येवमहरहरनुक्रमेण सर्वेष्वभिप्लवेष्वेतौ स्तोमौ कर्तव्यौ । एवं कृते सर्वेऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः कृता भवन्ति ।

**मासाश्च पृष्ठ्यमध्यमा नव षष्ठसप्तमोत्तमान्वर्जयित्वा ।**

षष्ठसप्तमोत्तमान्[2]वर्जयित्वाऽवशिष्टा ये नव मासास्ते सर्वे पृष्ठ्यमध्यमाः कर्तव्याः । गवामयने तावत्पूर्वस्मिन्पक्षासि पृष्ठ्यान्ताः पञ्च मासा इतरस्मिन्पक्षासि पृष्ठ्यादयश्चत्वारो मासास्ते सर्वेऽस्मिन्सत्रे पृष्ठ्यमध्यमाः कर्तव्या इत्यर्थं[3] नवग्रहणम् । षष्ठसप्तमोत्तमान्वर्जयित्वेतिवचनं तन्मासत्वकारितं न तु सावनत्वकारितमित्येवमर्थम् । तेन ' अपि वोर्ध्वं विश्वजितः ' इत्यस्मिन्पक्षे सप्तमस्य सावनत्वेऽपि[4] पृष्ठ्यमध्यत्वं तस्य न भवति ।

**बृहस्पतिसवेन्द्रस्तुतौ चाभिजिद्विश्वजितोः स्थाने ।**

अयं च विशेषो भवति ।

**सप्तमस्य च मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूढो दशरात्र उद्भिद्वलभिदौ च ।**

सप्तमस्य च मासस्य[6] त्रयोऽभिप्लवास्तेषां यावुत्तमाभिप्लवौ तयोः स्थाने त्रिवृत्स्तोमको व्यूढो दशरात्र उद्भिद्वलभिदौ च द्वे अहनी इत्येतानि द्वादशाहानि भवन्ति[7] ।

**उत्तमस्य च मासस्याऽऽदौ येऽभिप्लवास्त्रय उद्धृत्य तेषां मध्यममथ स्युः पृष्ठ्यमध्यमाः ।**

उत्तमस्य मासस्याऽऽदौ ये त्रयोऽभिप्लवास्तेषां मध्यममभिप्लवमुद्धृत्य तस्य स्थाने पृष्ठ्यः कर्तव्यः । एवं कृते पृष्ठ्यमध्यमा भवन्ति एवं कर्तव्यमित्यर्थः ।

---

१ ग. मत्रवि° । २ ब. ङ. च. झ. °मान्मासान्° । ३ च. °त्यर्थः । उत्तम एव मासे व्यूढो न° । ग. घ. ङ. झ. °त्यर्थः । न° । ४ च. °जनत्व° । ५ क. घ. ङ. झ. °जित' इ° । ६ घ. ङ. च. झ. °स्य ये त्र° । ७ क. ग. °न्ति । एवं कर्तव्यमित्यर्थः । उ° ।

समूहळ्हो दशरात्रः ॥ १ ॥

उत्तम एव मासे यो व्यूढो दशरात्रः सत्राणां प्रकृतित्वेन प्रविश्य स्थितस्तस्य स्थाने समूढो दशरात्रः कर्तव्य इत्यर्थः ॥ १ ॥

आदित्यानामयनेनाङ्गिरसामयनं व्याख्यातम् ।

आङ्गिरसामयनमिति सत्रनाम । अन्यत्सर्वमुक्तम् ।

त्रिवृतस्त्वभिप्लवाः सर्वे ।

अत्र येऽभिप्लवास्ते सर्वे त्रिवृत्स्तोमाः कर्तव्या इत्यर्थः । सर्वग्रहणं पक्षद्वयवर्तिमाससंग्रहार्थम् ।

पृष्ठ्यादयश्चाऽऽद्या मासाः पञ्च पूर्वस्य पक्षसः ।

पूर्वपक्षसो य आद्याः पञ्च मासास्ते पृष्ठ्यादयः कर्तव्याः ।

चत्वारस्तूत्तरस्य पृष्ठ्यान्ता अष्टमादयः ।

उत्तरस्य पक्षसो येऽष्टमादयश्चत्वारो मासास्ते पृष्ठ्यान्ताः कर्तव्याः ।

उत्तमस्य च मासस्याऽऽदौ ये षळहा-
स्त्रयः पृष्ठ्यान्ता एव तेऽपि स्युः ।

उत्तरस्य पक्षस उत्तमो यो मासस्तस्याऽऽदौ ये त्रयः षळहास्तेषामन्त्यः षळहः पृष्ठ्यः कर्तव्यः । एवं कृते ते षळहाः पृष्ठ्यान्ताः स्युरित्यर्थः ।

पूर्वौ स्यातामभिप्लवौ ॥ २ ॥

यावत्र[2] पूर्वौ षळहावादित्यानामयनेऽभिप्लवश्च पृष्ठ्यश्च तौ चात्राभिप्लवौ च भवतः, न तयोरन्यतरः पृष्ठ्यः षळह इत्यर्थः ॥ २ ॥

धृतिवातवतोरयनम् ।

एतन्नामकं सत्रमिदानीमुच्यत इत्यर्थः ।

प्रायणीयोऽतिरात्रः ।

'व्रतं विषुवत्स्थाने' इत्यनेन गवामयनप्रकृतित्वे सिद्धे प्रायणीयोऽपि सिद्ध एव, पुनर्वचनस्येदं प्रयोजनं प्रायणीयस्य स्वस्तोमसिद्धिः । यत्पुनरिदमुक्तं प्रायणीयचतुर्विंशे उपेत्येत्युपेत्यवचनसामर्थ्यात्प्रायणीयचतुर्विंशयोस्त्रिवृत्स्तोमत्वमिति तस्यास्य च निवेशः कर्तव्यः । यदा प्रायणीयस्य[4] मासाद्बहिर्भावस्तदा स्वस्तोमत्वं भवति, यदा पुनर्मासान्तर्भा-

---

१ च. °षड्व्यूहळ्हाः पृ° । २ च. ग. °त्र व्यूहळ्हो ष° । ३ च. °प्लवविध भ° । ४ च. °स्य समासता तदा ।

वस्तदा त्रिवृत्स्तोमतेति । चतुर्विंशस्य तु सर्वदा मासान्तर्भावात्त्रिवृत्स्तोमत्वमेवेति सिद्धम् ।

**त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासम् ।**

षण्मासानेवं कुर्युः ।

**व्रतं विषुवत्स्थाने ।**

ततोऽनन्तरं विषुवतः स्थाने महाव्रतमुपेयुः । तच्च स्वस्तोममेव भवति, मासानन्तर्भावाद्विषुवतः । विषुवत्स्थान[1] इति ब्रुवन्गवामयनमस्य प्रकृतिरिति दर्शयति ।

**एतैरेव मासैः प्रतिलोमैः पक्ष उत्तरम् ।**

उत्तरस्य पक्षसो ये मासास्तानप्येतैरेव स्तोमैरुपेयुः । त्रयस्त्रिंशाद्यैस्त्रिवृदन्तैरित्यर्थः[2] ।

**उदयनीयोऽतिरात्रः ।**

एवं षण्मासानुपेत्य तत उदयनीयं स्वस्तोममुपेयुः । उदयनीयग्रहणमपि स्वस्तोमार्थमेवं । एतेषामेवाह्नामतिरात्राविति । अत्र ये मासविषयाः स्तोमविधयस्ते[3] गवामयनिकाहर्युक्तमासेषु वा स्युः । षार्ष्ठिकानामेव त्रिवृदादीनामह्नामावृत्तविषया वा स्युः । उभयथाऽपि प्रायणीयोदयनीयाव[4]तिरात्राविव भवत इत्ययमेकः पक्षः ।

अपरः पक्ष उच्यते[5]—

**अपरमन्यत्राप्यादिष्टैः कालपूरणे न चेत्संस्थानियमः ॥ ३ ॥**

प्रायणीयोदयनीये भवत इत्यत्रोक्तं तदन्यत्रापि भवति । अत्राऽऽदिष्टैरेव कालपूरणं सत्राहोभिर्भवति । आदिष्टानामेवाऽऽद्योत्तमयोः संस्थानियमश्च नास्ति । तत्र सर्वत्राऽऽदिष्टानामाद्योत्तमे प्रायणीयोदयनीयौ भवत इति सिद्धम् । त्रयस्त्रिवृतः संवत्सरा इत्येवमादीन्युदाहरणानीति ॥ ३ ॥

**कुण्डपायिनामयनम् ।**

एतन्नामकमिदं सत्रमधिकृतं वेदितव्यम् ।

**मासं दीक्षिता भवन्ति ।**

अयं मासशब्द एकान्नविंशतिरात्र[6] उपचरितः, एकान्नविंशतिरात्रादिकं तावद्भवतीत्यर्थः[7] ।

---

१ च. °नस्य । २ क. ग. घ. ङ. ञ. °व अ° । ३ च. °स्ते गावा° । ४ क. ग. घ. ङ. ञ. °तिरिक्तावे° । ५ क. ग. घ. ङ. ञ. °ते—एतेषामेवाह्नातिरात्रावित्यप° । ६ °ति । मत्रा° । ७ च. °कं सावनवद्भ° ।

**ते मासि सोमं क्रीणन्ति ।**

अयमप्युपचार एव दीक्षाकाले पास्यतीति दीक्षिताः सोमं क्रीणन्तीत्यर्थः ।

**तेषां द्वादशोपसदो भवन्ति ।**

सात्रिकाणां दीक्षाणामपवादो दीक्षाविधिस्तथा सात्रिकाणामुपसदामपवाद उपसद्विधिः ।

**सोममुपनह्य प्रवर्ग्यपात्राण्युत्साद्यो-**
**पनह्य वा मासमग्निहोत्रं जुह्वति ।**

उपसत्स्वतीतासु प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा ता[1]नि त एकं मासमग्निहोत्रं जुह्वति सायं प्रातः[2] । प्रातरुपक्र[3]मः सायमपवर्गः प्रातःकालस्य प्रथमप्राप्तत्वात् । उपक्रमकाले द्वादशाहेऽतीतेऽग्निहोत्रस्य प्रातरारम्भान्नैमित्तिकादग्निहोत्रात्कर्मान्तरमेतदिति न्यायविदां प्रसिद्धम् ।

**मासं दर्शपूर्णमासाभ्यां यजन्ते ।**

अग्निहोत्रमासेऽतीते ततोऽनन्तरमेकं मासं दर्शपूर्णमासाभ्यां यजन्ते । कृष्णपक्षेऽहरहः पौर्णमास्या शुक्लपक्षेऽहरहरमावास्यया मित्रावरुणयोरयने तथा दृष्टत्वात् । एवमत्र संपादनीयं यथा कृष्णपक्षादौ पौर्णमासयागः संभवति तत्र दीक्षारम्भः कर्तव्य इति ।

**मासं वैश्वदेवेन ।**

अहरहरनेन यष्टव्यम् । वैश्वानरपार्जन्या तु न भवति, आरम्भार्थत्वात्तस्याः । स चाऽऽरम्भः सत्रारम्भेण प्रसक्त इति ।

**मासं वरुणप्रघासैर्मासं साकमेधैः ।**

एतैरहरहर्यजेरन्नेकाहेनापवृज्य प्रकृतेर्व्यहसमापनीयत्वाद्व्यहेन वा कु[6]र्युरध्वर्युप्रत्ययात्समापनामिति स्थितिः ।

**मासं शुनासीरीयेण ।**

अनेनाप्यहरहरेव ।

**यदहर्मासः पूर्यते तदहरिष्टिं समाप्याग्निप्रणयनादिधर्मो-**
**त्सादनादि वौपवसथिकं कर्म कृत्वा श्वोभूते प्रसुनुयुः ।**

यस्मिन्नहनि मासः पूर्यते तस्मिन्नहनि शुनासीरीयेष्टिं समाप्य तदनन्तरं यदि पूर्वमेव प्रवर्ग्यपात्राण्युत्सादितानि तदाऽग्निप्रणयनाद्यौपवसथिकं कर्म कृत्वा सुत्यारम्भः ।

---

१ च. °न्नि तानि त । २ क. °तः । सायमुप° । ३ झ. क्रम्यः सा° । ङ. °क्रम्य सा° । ४ च. °मास्याऽहः सं° । ५ ङ. तथा । ६ घ. च. कुर्यात् । अध्व° ।

**तद्धैक उपसद्भ्य एवानन्तरं कुर्वन्ति तथा दृष्टत्वात्सौत्यान्मासानग्निहोत्रादीन्वदन्तः ।**

तदिदमग्निप्रणयनाद्यौपवसथिकं कर्म कुण्डपायिनामयनेऽग्निहोत्रादिमासेभ्य ऊर्ध्वं कर्तव्यमित्युक्तं, तत्रैक आहुः—तत्कर्माग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्योऽनन्तरं कर्तव्यमिति । तत्र हेतुमाहुः—प्रकृतौ तथादृष्टत्वादिति । नन्वग्निहोत्रादिमासेभ्य उपरिष्टात्क्रियमाणे चौपवसथिके सुत्यानन्तर[2]स्य विद्यमानत्वादिति, तथादृष्टत्वात्साधारणमिति तत्परिहारार्थमग्निहोत्रादिमासान्सौत्यानिति कथम् । अस्य सत्रस्य गवामयनप्रकृतिकत्वात्तस्य सांवत्सरिकत्वात्कुण्डपायिनामयने त्रिवृदादयः षण्मासा एकं पक्षः, अग्निहोत्रादयः षण्मासा अपरं पक्ष इति मन्यमानाः । एवं चोपसदां च [3]सुत्यानां च मध्य औपवसथिकस्य कृतत्वान्न कश्चिद्धेतुदोष इति वदन्तोऽग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्य ऊर्ध्वमौपवसथिकं कुर्वन्ति । एतदुक्तं भवति—अग्निहोत्रादिमासान्सुत्यानिति मन्यमानास्तेभ्यः पुरस्तादुपसद्भ्य ऊर्ध्वमौपवसथिकं कर्म केचित्कुर्वन्ति, प्रकृतौ तथा दृष्टत्वादिति ।

**तदनुपपन्नम् ।**

यदेतदग्निहोत्रादिमासान्सौत्यानिति वदन्ति तदनुपपन्नम् । कुतः । सोम[4]यागस्वरूपत्वा[5]त्सुत्यानाम् । अग्निहोत्रादीनां तु हविर्यज्ञस्वरूपत्वादसुत्यत्वमिति । यत्पुनरिदमुक्तं गवामयनप्रकृतिकत्वादग्निहोत्रादिमासैः पूर्वपक्षसिद्धिरिति, तदयुक्तम् । सोमयागानामेव गवामयनप्रकृतित्वं पूर्वपक्षत्वमुत्तरपक्षत्वं चेति । अग्निहोत्रादयोऽस्मिन्सत्रेऽप्राकृता आगन्त[6]वः, अतस्तेषां तत्स्थानापन्नत्वमपि न संभवति । अतस्तेषां सुत्यत्वं न संभवति । सुत्यत्वासंभवे तथादृष्टत्वादित्यस्य हेतोः साधारण्यादसाधकत्वमित्यनेनाभिप्रायेणोक्तं भगवताऽऽचार्येण तदनुपपन्नमिति ।

**पश्वर्थं ह्यग्निप्रणयनं तस्य च श्वःसुत्यानिमित्तम् ।**

परोक्तस्य हेतोरसाधकत्वमुक्त्वा [7]स्वपक्षं समर्थयति । औपवसथेषु कर्मसु यः प[8]शुयागः स श्वःसुत्यानिमित्तमिति प्रत्यक्षं श्रूयते—'अग्नीषोमाभ्यां वा इ[9]न्द्रो वृत्रमहंस्तावेनमभूताम् ।' इत्यादिना । अतो वचनात्पशोः सुत्यानन्तर्यमेव संपादनीयम् । तत्र यदग्निप्रणयनं तत्सोमयागार्थमेव, पशोरप[10]उपाकरोति, प्रसङ्गादिति पश्वर्थमित्युक्तम् । अतोऽग्निप्रणयनस्य प[11]शोश्च सुत्यानन्तर्यमेव संपादनीयम् ।

१ च. नत्वाग्नि° । २ ङ. °न्तर्यस्य । ३ च. सुत्यां च सुत्य औ° । ४ ग. °मयोगः । ५ क. घ. झ. °यागः स्व° । ६ च. °वः कर्मविशेषाः, अ° । ७ घ. स्वस्वप° । ८ ग. घ. ङ. च. झ. °शुभागः । ९ ङ. झ. इन्द्रवृत्रम° । १० ग. ङ. च. झ. °प्यपक° । ११ च. पशोः श्वः सु° ।

**अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोस्तथाऽग्निहोत्रस्य ।**

एवं तावदौपवसथिकस्याग्निप्रणयनादेरग्निहोत्रादिमासेभ्य ऊर्ध्वमेव कर्तव्यतां प्रतिपाद्येदानीमग्निप्रणयनस्याग्निहोत्रादिमासेभ्यः पुरस्तात्क्रियायां दर्शपूर्णमासयोरग्निहोत्रस्य च वैगुण्यं भवतीति प्रतिपादयति । कुत इति चेत् । प्रकृतौ नैयमिकेनातिप्रणीत उत्तरवेद्यां तयोर्यागादर्शनात् । अतो वैगुण्यकरत्वादग्निप्रणयनं तावत्पुरस्तान्न कर्तव्यमित्ययं विशेषोऽन्येभ्य इत्युक्तम् ।

**सदोहविर्धानान्याग्नीध्रीयाग्नीषोमप्रणयनं वसतीवरीग्रहणानि पश्वर्थानि भवन्ति सुत्यार्थान्येके ।**

एवं तावदौपवसथिकेषु यः पशुः स श्वःसुत्यानिमित्तत्वादग्निहोत्रादिमासेभ्य ऊर्ध्वं कर्तव्यमित्युक्तम् । अग्निप्रणयनं च सुत्यार्थत्वात्पशोरप्युपकारकत्वात्पुरस्तात्क्रियायां चाग्निहोत्रादीनां वैगुण्यकरत्वात्तद्वदित्युक्तम् । इदानीं येषां श्वःसुत्यावचनं नास्ति श्रुत्यादिभिस्तु सुत्याङ्गभावोऽस्त्येव, अङ्गभावश्च संनिपत्योपकारकद्वारेण, तेषां सुत्याकर्मणोद्देशादिसाधनद्रव्यकलत्ररूपाणां सदआदीनामाग्निहोत्रादिमासेभ्यः पुरस्तात्करणे किंचिददृष्टं दृष्टं वा प्रयोजनं नास्ति । एतेषां पुरस्तात्करणे प्रमाणं च नास्ति ।

कुतः—

**तत्कालाश्चैव तद्गुणाः ।**

यस्य प्रधानस्य यः कालः स एव कालस्तद्गुणानाम् । प्रधानकाल एवाङ्गानां मुख्यकाल इत्यर्थः । तदेतन्न्यायविदां प्रसिद्धम् । अत एव प्रसिद्धवदुपदिष्टवानाचार्यः 'तत्कालाश्चैव तद्गुणाः' इति । एतदुक्तं भवति—यस्मात्प्रधानकाला एव प्रधानगुणास्तस्मात्सदआदीनामग्निहोत्रादिमासेभ्यः पूर्वमक्रियैव । तत्कालाश्चैव तद्गुणा इति । चशब्दोऽत्र पठितः । प्रधानकाले च गुणाः कर्तव्या इत्यर्थः । सदआदीनां पश्वर्थतावचनमभ्युपगम्य यागः । सदआदीनि पश्वर्थानि वा भवन्तु सुत्यार्थानि वा । सर्वथा तावदग्निहोत्रादिभ्यः पुरस्तात्क्रिया न स्यादित्ययमभिप्रायः ।

अङ्गानां प्रधानकालत्वमुक्तं तत्कालाश्चैव तद्गुणा इति । यानि पुनरङ्गानि प्रधानकालाद्विप्रकृष्टानि यथा 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति तेषां पश्वर्थता नास्ति सौमिकैः

१ च. °मस्ति अग्नि° । २ च. °केऽति° । ३ च. °गादिद्° । ४ च. °त्यस्य°वि । ५ च. °यन्व° । ६ च. °न इत्यक° । ७ घ. च. °भ्य स° ।

पदार्थैर्व्यवधानादिति । अतोऽनुयाजसदृशानि कर्मान्तराणि सोमाङ्गत्वेनैव विधीयन्त इति प्राप्त उच्यते—

## सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः ।

प्रकृतौ सिद्धस्वभावानां पदार्थानां विकृतौ पदार्थान्तरव्यवधानमात्रेण तेषामन्यत्वं न स्यात् । अनन्यत्वे[१] च प्राकृतोपकारकत्वेनाङ्गत्वमपि स्यात् । प्राकृतानां हि पदार्थानां विकृतावुपकारद्वारेण प्राप्तानामनुपकारकत्वमित्ययुक्तं यदि परं व्यवधानादन्यत्वं भवति । अतो विप्रकृष्टकाला अपि पदार्थास्तद्गुणा एव भवन्ति तद्बुद्ध्यनपगमादिति[२] । कर्मान्तरत्वपक्षे वाक्यभेदादि[३] प्रसज्येत । यथा पृष्ठ्याभिप्लवयोरिति व्यवधानादन्यत्वाभावे दृष्टान्तः । यथा पृष्ठ्यस्य वाऽभिप्लवस्य वाऽन्यस्य वा संघात[४]रूपविशेषस्य मध्ये यजमानमरणस्य निमित्तेन नैमित्तिकमहरन्तरमुपजायते तत्र तेन व्यवधानमस्ति, तथा[५]ऽपि पृष्ठ्यादिसंघातविशेषबुद्धिर्नापैति तद्वदत्रापीति । यस्माद्व्यवधानात्पदार्था[६]दन्यत्वं नास्ति, अत एवौपवसथिकस्याग्निहोत्रादिमासेभ्यः पुरस्तात्क्रिया[७]याः शङ्कानिराकरणार्थमिदं प्रकरणमारब्धम् । कानिचिदङ्गानि तत्कालानि कानिचिद्विप्रकृष्टकालानीत्येवमुभयथा व्यवहारोऽस्ति । सर्वथा तावदग्निहोत्रादिमासेभ्यः पुरस्तादौपवसथिकं न कर्तव्यमिति प्रकरणार्थः ।

## सगुणानां ह्येव कर्मणामुद्धार उपजनो वा ।

अयमप्यग्निहोत्रादिमासेभ्य उपरिष्टादौपवसथिकक्रियायां हेतुः । यस्मात्प्रधानकर्मणामुद्धार उपजन उत्कर्षे च सगुणानामेव सर्वत्रोद्धारादिर्दृष्टव्यः[८], यथा स्नानभोजनविहाराणामहरहःकार्याणां कस्यचिदुद्धारे सगुणस्यैवोद्धारो दृष्टः । उत्कर्षे च सगुण एवोत्कृष्यते । एतेषां नित्यकार्याणामन्तरालेऽन्यन्नैमित्तिकमुपजायमानं सगुणानामे[९]वोपजायते । एवमत्रापि वैशेषिकैरग्निहोत्रादिभिरुत्कृष्यमाणं सौत्यं कर्माऽऽत्मनो गुणभूतेनौपवसथिकेन सहोत्कृष्यते । हिशब्दः प्रसिद्धौ । यस्मात्सर्वत्रोद्धारोपजनोत्कर्षाः सगुणानामेव दृष्टास्तस्मादत्रापि सगुणस्य सौत्यस्योत्कर्षो युक्त इति सूत्रार्थः ।

## सुब्रह्मण्या स्वस्त्यन्तम् ।

प्रासङ्गिकोऽयं सुब्रह्मण्याविचारः । प्रकृतावुपसत्सुत्याकालत्वात्सुब्रह्मण्याया अग्निहोत्रादिमासानां च सुत्योपसद्धर्मा[१०]भावात्सुब्रह्मण्याया अभावशङ्का स्यात्, तत इदमुच्यते ।

---

१ °त्वेन । २ च. तद्व्यन° । ३ च. °दिती प्र° । ४ च. °घाते रू° । ५ च. °था पृ° । ६ च. °र्थान्य° । ७ ङ. च. °याश° । ८ घ. ङ. च. °दिर्दृष्टः, य° । ९ ङ. च. °गुणमे° । १० च. °र्वात्सु° ।

सुब्रह्मण्याया अयं विशेषः—अत्यन्तं नित्यं कर्तव्या, अग्निहोत्रादिमासेष्वपि[1] । अप्राकृतोऽयं काल इति नोत्स्रष्टव्योऽनयत्वात् ।

**अनवधृतेहकालसंशयत्वात् ।**

प्रकृतावुपसत्सुत्याकाला सती सुब्रह्मण्या तत्कालविशेषविशिष्टाऽऽहूयते, इह पुनरप्राकृतत्वात्कालस्य तेनोपलक्षणं प्रकृतया सुब्रह्मण्याया अयुक्तमिति मन्यमानेना[3]*नवधृता कालसंख्याविशेषणाऽऽह्वातव्या सुत्यामागच्छेति[4] । कालसंशयादित्यस्यायमर्थः—प्रकृतौ द्वादशाहे सुत्यामित्यादयः संख्याविशेषाः किमुपसदहःसंख्याविशेषप्रयुक्ता आहोस्वित्प्राग्यावन्त्यहानि तदहःसंख्याप्रयुक्ता इत्येवंकालसंशयत्वादित्यर्थः ।

**उत्सर्गमेके सुत्योपसद्गुणत्वात् ।**

सुब्रह्मण्याया उत्सर्गमेक इच्छन्ति सुत्योपसद्गुणत्वात् । किमिदं सुत्योपसद्गुणत्वादिति । सुत्यानामेवायं गुणो नोपसदां क्रमाल्लिङ्गं बलीय इति । अतोऽयमुपसदां गुण उपसत्कालवर्तित्वादुपसद्गुणत्वोपचारः । अग्निहोत्रादिमासानामसुत्यत्वा[5]दनुपसत्कालत्वात्सुब्रह्मण्योत्सर्गमेक आहुरित्यर्थः ।

**क्रिया त्वेव प्रवृत्ते ह्यन्तमगत्वाऽवस्थाने दोषः ।**

अस्याः क्रियैव निश्चीयते सोमयागसाधनसंस्कारत्वान्मन्त्रस्य । प्रकृतौ सोमयागा[6]त्पूर्वं यावत्सुत्याकालस्तावदाहूयते । तद्वदत्राप्याह्वातव्या । तावतः कालस्योपसत्स्वेवैतत्संबन्धादस्या उपसत्संबन्धस्तदभावान्नास्यास्त्यागो युक्तः । अत्रायमपि विशेषोऽस्ति—औचित्यादपि न त्याज्या । आदित आरभ्य सर्वेष्वेवाहःस्वाह्वयन्ति । कथमिदानीं नाऽऽह्वयन्ति । नूनमयं सोमोऽस्मभ्यं न दास्यत इति देवतायाः शङ्का स्यात्तन्निवृत्त्यर्थमाह्वातव्या । प्रारब्धस्य मध्ये त्यागस्य कारणाभावे त्यागे दोष एव स्यादित्यभिप्रायः । परपदार्थविचारोऽत्र स्वपदार्थपरिज्ञानार्थ एव । अतिप्रैषस्त्रःसुत्ययोरुह्यत इति ।

**त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासमष्टादश त्रयस्त्रिंशानि द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ।**

अत्र पृष्ठ्यस्य पञ्चभिरहोभिः पञ्च मासाः कर्तव्याः । षष्ठेनाष्टादशाहानि दशरात्रो महाव्रतमुदयनीयः । कृत्स्नोक्तत्वान्नात्र प्रायणीयः ।

---

* क—त्र्यहे सुत्यां पञ्चाहे सुत्यामित्यादिसंख्याविशेषमनूच्चार्य सुत्यामागच्छेत्येवमेवाह्वानं कार्यमित्यर्थः ।

---

१ ग. घ. झ. °दिष्व मा° । २ क. म. घ. ङ, झ. °त् । प्र° । ३ क. य. °माना.—अनवधृतेहकालसंशयत्वात् । अन° । ४ क. ग. घ. ङ. झ. °च्छोदेति । ५ क. ग. घ. ङ. झ. °सदा क° । ६ च. °गादुप° । ७ च. °गादूर्ध्वं या° । ८ च. °भावात्यागे । ९ क. ङ. एवास्या° ।

**सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति ॥ ४ ॥**

स्तुतिवादोऽयम् । बहूनामत्र संभवादृत्विक्समासोऽनेन सूत्रकारेण न सूत्रितः । स[1] कर्तव्यश्चेत्परप्रत्ययादेव कर्तव्यः ॥ ४ ॥

**सर्पाणामयनम् ।**

इदमपि संवत्सरसत्रम् ।

**गोआयुषी द्वदशीस्तोमे[2] ।**

एते अहनी दशस्तोमके[3] अभ्यस्याभ्यस्य कृत्स्नं संवत्सरस्याऽऽप्नुतः ।

**अनुलोमे षण्मासान्प्रतिलोमे षट् ।**

अयमेवात्र विशेषोऽनुलोमप्रतिलोमत्वमेव ।

**ज्योतिर्द्वादशीस्तोमो विषुवत्स्थाने ।**

ज्योतिरेकाहो विषुवत्स्थाने भवति स द्वादशीस्तोमश्च भवति ।

**प्रकाशकामा उपेयुः ।**

विद्यया धनेन च प्रकाशकामाः सर्पाणामयनमुपेयुः । अत्र प्रायणीयोदयनीयौ पूर्वोक्तेन न्यायेन भिन्नावभिन्नौ भवतः ।

**त्रैवार्षिकं प्रजाकामाः ।**

त्रैवार्षिकमिति सत्रनाम ।

**गवामयनं प्रथमः संवत्सरोऽथाऽऽदित्यानामथाङ्गिरसाम्[4] ।**

त्रिसंवत्सरः सुत्य इति तस्यैते त्रयः संवत्सराः ।

**चत्वारि तापश्चितानि ।**

चत्वारि तापश्चितानि वक्ष्यन्त इत्यर्थः । उद्देशादेव चतुष्ट्वे सिद्धे चतुर्ग्रहणं सर्वेषां तापश्चितानां तुल्यत्वज्ञापनार्थम् । कथमनेन तुल्यत्वमिति चेत् । तापश्चितानीत्यस्य विशेषणत्वात् । तापश्चितानि तापश्चितानीत्येकशेषादेतत्रयं सिद्धम् । एकशेषश्च सरूपाणामिति स प्रसिद्धः । तेन सामानाधिकरण्याच्चतुर्णां तुल्यत्वमध्यवसितम् । तुल्यत्वसिद्धौ प्रयोजनं यथा प्रथमे सौत्ये षण्मासेष्वहराधिक्यं नास्ति, एवं सर्वेषु तापश्चितेषु सौत्येषु संवत्सरचतुःसंवत्सरद्वादशसंवत्सरेष्वहराधिक्यं[5] विषुवता न कर्तव्यमित्यर्थः ।

**क्षुल्लकतापश्चितं प्रथमं संवत्सरं स दीक्षोपसत्कम् ।**

क्षुल्लकतापश्चितमिति प्रथमं व्याख्यातं[6] दीक्षोपसद्भिः सह संवत्सरकालमित्यर्थः ।

---

१ क. ब. ङ. सत्कर्त° । २ ङ. च. झ. °षीद्दशी° । ३ ध. ङ. च. झ. °नीं इद्दशीस्तोमे अ° । ४ च. °म् । त्रिः सं° । ५ च. °त्सरषट्त्रिंशसंवत्सरे अह° । ६ च. °ख्यातं दी° ।

**तस्य चत्वारः सौत्या मासा गवामयनस्य प्रथमषष्ठसप्तमोत्तमाः ।**

अतो महाव्रतवदेतत्सत्रम् । महाव्रतेऽपि संवत्सरदीक्षानिवृत्त्यर्थं संवत्सरं सदीक्षोपसत्क-मित्युक्तम् । अत्र मासातिदेशाद्विषुवान्न भवति ।

**त्रैवार्षिकं तापश्चितं तस्य सौत्यः संवत्सरः ।**

तापश्चितानां यथा सुत्योपसद इति सुत्यानां त्रिभागत्वे सिद्धे चत्वारः सौत्या मासाः सौत्यः संवत्सरः, चत्वारः सौत्याः संवत्सराः, द्वादश सौत्याः संवत्सरा इत्येतानि वच-नानि विषुवन्निवृत्त्यर्थानि ।

**उक्तो गवामयनेन ज्योतिर्गौरायुरभिजि-**
**द्विश्वजिन्महाव्रतं चतुर्विंशानां वैकैकम् ।**

गवामयनस्यायमपवादः । एतेषां सप्तानामह्नामेकैकेनाह्ना संवत्सरः पूरयितव्योऽन्यस्या-न्यस्येत्यर्थः ।

**द्वादशवार्षिकं तापश्चितं तस्य चत्वारः सौत्याः**
**संवत्सरा गवामयनशस्याः पूर्वेणैव न्यायेन[1] ।**

पूर्वन्यायशब्देनैकसंभार्योत्तरपक्ष उच्यते ।

**अपि वोत्तरस्य पक्षसो द्वाविंशतिः सवनमासा**
**भवेयुस्त्रयोविंशतिः पूर्वस्य षट्त्रिंशद्वर्षिकं**
**महातापश्चितं तस्य द्वादश सौत्याः संव-**
**त्सरा गवामयनशस्याः पूर्वेणैव न्यायेन ।**

सवनमासा उभयोः पक्षयोः पृष्ठ्याभिप्लवसंभवास्त्रिंशिन्यस्ते[4] द्वाविंशतिरुत्तरे पक्षसि त्रयोविंशतिः पूर्वपक्षसि षट्सप्तमोत्तमास्त्रयः स्वरूपेणैव । एवमष्टाचत्वारिंशन्मासा भवन्ति चतुर्णां संवत्सराणां पर्याप्ताः । अत एव क्लप्तः क्लप्तश्चीयते किमेतत्क्रमेण प्रणीतं भग-वता सूत्रकारेणेति । अयमभिप्रायः—मासवृद्धौ सवनमासानामेव वृद्धिरितरेषां त्रयाणां स्वरूपेणैवेत्यस्य न्यायस्य सर्वार्थत्वायैवं प्रणीतम् । अतः षट्त्रिंशद्वर्षिकेऽप्येकसप्ततिः पूर्वपक्षसि सवनमासाः सप्तभिरुत्तरे पक्षसि त्रयश्च षट्सप्तमोत्तमाश्च भवन्तीति गम्यते ।

**प्रजापतेर्द्वादशसंवत्सरम् ।**

इदं सत्रनाम ।

---

१ च. °व्रतत्वेऽपि । २ क. ग. घ. ङ. झ. °त्सरदी° । ३ ग. °स्त्रिंशन्य° । च. °स्त्रिंशि-न्नस्ते । ४ क. ध. ङ. झ. °तिमुत° । ५ च. °त्तमैस्त्र° । ६ ग. ङ झ. °एतत्कल्प्तेः । घ. ङ. एतत्क्लप्तः क्लृ° । ७ च. °श्च षळहकल्पना भवतीति ।

तस्याहान्युच्यन्ते—

**त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशा एतैरेव स्तोमैः शाक्त्यानां षट्त्रिंशद्वार्षिकम् ।**

स्तोमैरिति स्तोमविशिष्टैरहोभिरित्यर्थः । शाक्त्यानामयनमिति सत्रनाम । अयनशब्दोऽध्याहर्तव्यः । एवमुत्तरेष्वपि साध्यानां विश्वसृजामग्नेरित्येतेषु । षट्त्रिंशद्वार्षिकमित्यादयः शब्दाः सत्रकालवचनाः ।

**एकैकेन नव नव वर्षाणि ।**

पूर्वस्येयमहःकल्पना ।

**एतैरेव स्तोमैः साध्यानां शतसंवत्सरमेकैकेन पञ्चविंशतिः पञ्चविंशतिर्वर्षाणि ।**

साध्यानामयनस्येयमहःकल्पना ।

**एतैरेव स्तोमैर्विश्वसृजां सहस्रसंवत्सरमेकैकेनार्धतृतीयान्यर्धतृतीयानि वर्षशतानि ।**

विश्वसृजामयनस्याहःकल्पना । सहस्रसंवत्सरं तदायुषामसंभवादिति विचारितौ संभवासंभवौ । तत्र यथा संभवति तथा प्रतिपत्तव्यम् ।

**अग्नेः ।**

अयनशब्द एतेषु शेष इत्युक्तम् । तस्याहःक्लृप्तिरुच्यते ॥

**अग्निष्टोमसहस्रम् ।**

अत्र बहिरेव प्रायणीयोदयनीयौ । 'अग्निष्टोमसहस्रम्' इत्यनेन सहस्राहःप्रमाणस्योक्तत्वात् ।

**सहस्रसाव्यमित्येतदाचक्षते ॥ ५ ॥**

एतदयनं सहस्रसाव्यमित्यनेन नाम्ना वक्ष्यते ॥ ९ ॥

**अथ सारस्वतानि ।**

अनन्तरं सारस्वतानि सत्राण्युच्यन्त इत्यर्थः ।

**सरस्वत्याः पश्चिम उदकान्ते दीक्षेरन् ।**

पश्चिम उदकान्त इत्यनेन सरस्वत्या विनशनमिति प्रसिद्धो देश उच्यते तस्मिन्दीक्षेरन्नित्यर्थः ।

---

१ च. 'जामयने अग्ने°' । २ ग. घ. ङ. च. झ. 'णस्यानुक्त°' ।

**ते तत्रैव दीक्षोपसदः कृत्वा प्रायणीयं च सरस्वतीं दक्षिणेन तीरेण शम्याप्रासे शम्याप्रासेऽहरहर्यजमाना अनुव्रजेयुः ।**

ते सत्रिणस्तत्र दीक्षोपसदश्च समाप्यौपवसथिकं च कृत्वा प्रायणीयमतिरात्रं च तत्रैव कुर्युः । एवं तत्रैव कृत्वा सरस्वतीं च दक्षिणेन तीरेणानुव्रजेयुः, शम्याप्रासेऽहरहर्वसित्वा । तत्रैवेतिवचनं सर्वेषु सारस्वतेषु प्रायणीयान्तं कर्म विनशनप्रदेश एव कर्तव्यमित्येवमर्थम् ।

**संहार्य उलूखलबुध्नो यूपः ।**

संहार्यः, गमनकाले संहृत्य गन्तुं योग्यो नातिगुरुरित्यर्थः । उलूखलस्येव बुध्नो मूलं यस्य स उलूखलबुध्नः । समे देशे स्थापयितुं योग्य इत्यर्थः ।

**चक्रीवन्ति सदोहविर्धानानि ।**

सदोहविर्धानयोर्विशालाभिप्रायेण बहुवचनम् ।

**आग्नीध्रीयं पत्नीशालं च ।**

चक्रवदित्यर्थः ।

**दक्षिणपुरस्तादाहवनीयस्यावस्थाय ब्रह्मा शम्यां प्रहरेत्सा यत्र निपतेत्तद्गार्हपत्यस्याऽऽयतनं ततोऽधिविहारः ।**

गार्हपत्यादारभ्य पुरस्ताद्यथायोगं पुनर्विहारः कल्पनीयः ।

**विषमे चेन्निपतेदुद्धृत्य समे विहरेयुः ।**

समीकर्तुमशक्येऽपि विषमे देशे शम्या यदि पतेदुद्धृत्य तां शम्यां पुनः समे देशे तां प्रहृत्य विहारः कर्तव्यस्तत्रैव ।

**अप्सु चेद्वारुणं पुरोळाशं निर्वपेयुरपान्नप्त्रे चरुमपान्नपादा ह्यस्थादुपस्थं समन्यायन्त्युपयन्त्यन्या इत्यातः समानं सर्वेषाम् ।**

एवमन्तं सर्वेषां सारस्वतानां समानम् ।

**मित्रावरुणयोरयनम् ।**

मित्रावरुणयोरयनं नाम सारस्वतं सत्रमिदानीमधिक्रियते ।

---

त्रैव दी° । २ घ. ङ. च. झ. °त्वा ते त° । ३ च. योग्यः समो देशस्तत्र झ. °नि । ह । ५ च. °था पु° । ६ घ. ङ. झ. समे विहर्तुम° ।

**कुण्डपायिनामयनस्याऽऽद्यान्षण्मासानावर्तयन्तो व्रजेयुः ।**

अग्निहोत्रादीनित्यर्थः । अत्र दण्डचक्रवदावृत्तिरपेक्षते[1], परावधेरनियतत्वात् ।

**मासि मासि च गोआयुषी उपेयुरायुरयुग्मेषु गौर्युग्मेषु ।**

यथाऽपरपक्षस्य चतुर्दश्यामौपवसथिकं कर्म[2] तथा दीक्षेरन् । ततोऽमावास्यायां प्रायणीयमतिरात्रं कृत्वाऽग्निहोत्रादीनां मासानां यजनम् । ततः पौर्णमास्यां[3] गामुपेयुः । एवमुत्तरस्यां पौर्णमास्यामायुषमुपेयुः । एवमेव गोआयुषी पौर्णमास्यां पौर्णमास्यां क्रमेणोपेयुः । [ * हविर्यज्ञमासान्क्रमेणाऽऽवर्तयन्तः प्लाक्षं प्रस्रवणं सरस्वत्या दक्षिणेन तीरेणाभिव्रजेयुः ] एवं कृत आयुरयुग्मेषु मासेषु गौर्युग्मेषु मासेषु कृतौ भवतः । मासानां युग्मायुग्मत्वं सत्रारम्भकालावधिकम् । अत्र दीक्षोपसदौ द्वादश द्वादशैव । अत एव तद्युक्तम् ।

**इति नु प्रथमः कल्पः ।**

मित्रावरुणायनस्यायं प्रथमः कल्पः ।

**अथ द्वितीयः ।**

कल्प इति[5] शेषः ।

**यथाऽमावास्यायामतिरात्रः स्यात्तथा दीक्षेरन् ।**

यथाऽमावास्यायां प्रायणीयोऽतिरात्रो भवेत्तथा दीक्षित्वाऽपरपक्षस्य चतुर्दश्यामेवौपवसथिकं कर्म कृत्वाऽमावास्यायामतिरात्रं प्रायणीयं कुर्युः ।

**तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेवामावास्यस्य सांनाय्यवत्सानपाकुर्युः ।**

तेऽमावास्यायामेकस्मिन्नेवाहन्यतिरात्रमाश्विनान्तं समाप्य तदहरेवामावास्यस्य[6] वत्सापाकरणादि कृत्वा श्वोभूते यजेरन् ।

**तं पक्षमामावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः ।**

तं पूर्वपक्षमामावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः ।

**पौर्णमासेनोत्तरं व्रजित्वाऽमावास्यायामायुषमुपेयुः ।**

पौर्णमासेनापरपक्षं व्रजित्वाऽमावास्यायामायुषमुपेयुः ।

**एवमावर्तयन्तो व्रजेयुः ।**

यावत्प्लाक्षं प्राप्यते ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो घ. च. पुस्तकयोरेव वर्तते ।

---

१ घ. ङ. च. झ. 'पेक्ष्यते । २ च 'र्म भवेत्तथा । ३ ङ. 'मास्याङ्गमु° । ४ ग. घ. झ. सदा द्वा° । च. °सदोर्द्वाद° । ङ. 'सद द्वा' । ५ क. ङ. 'ति विशे' । ६ वास्य वत्सा° ।

इन्द्राग्न्योरयनम् ।

इदमप्यन्यत्सारस्वतम् ।

गोआयुषीभ्याम् ।

अस्मिन्सारस्वते गोआयुषीभ्यामेवान्तं कालमभ्यस्यन्तो व्रजन्ति ।

अर्यम्णोऽयनम् ।

इदमपि सारस्वतान्तरम् ।

त्रिकद्रुकैः ।

त्रिकद्रुकैर्दण्डकीलितवदभ्यस्यान्तं व्रजेयुः ।

सरस्वतीपरिसर्पणस्य शस्यमुक्तं गवामयनेन ।

सरस्वतीपरिसर्पणं नाम सारस्वतं तस्य शस्यं गवामयनेनोक्तम् । शस्यग्रहणं शस्यमात्रग्रहणमेव गवामयनस्योत्थानादि सारस्वतमेवेति ज्ञापनार्थम् ।

एकपातीनि त्वहान्यतिरात्राः ।

अयमत्र विशेषः—चतुर्विंशाभिजिद्विषुवन्महाव्रतादीन्येकपातीन्यहानि तान्यतिरात्रसंस्थानि भवेयुः ।

पृष्ठ्याहश्चतुर्थम् ।

अतिरात्रसंस्थमित्यर्थः ।

इति नु गतयः ।

एवंप्रकारा गतयः सर्वेषु सारस्वतेषूक्ता अस्माभिः । शास्त्रान्तरेष्वन्येऽपि प्रकाराः सन्ति ।

अथोत्थानानि ।

उत्थानान्यपि सर्वेषां वक्ष्यन्ते ।

प्लाक्षं प्रस्रवणं प्राप्योत्थानम् ।

इमं देशं प्राप्योत्थानमेव कर्तव्यं न क्रमप्राप्तं कर्माऽऽरब्धव्यम् ।

ते यमुनायां कारपचवेऽवभृथमभ्युपेयुः ।

ये प्लाक्षं प्रस्रवणं प्राप्योत्तिष्ठन्ति तेऽस्मिन्देशेऽवभृथं कुर्युः ।

उदेत्याग्नये कामायेष्टिर्वैराजतन्त्रा ।

उदेत्येयमिष्टिः कार्या ।

---

१ च. °स्यान्तं व्र° । २ च. °स्वतान्तरं त° । ३ च. °व्रमे° ।

**तस्यामश्वां च पुरुषीं च धेनुके दद्युः ।**

अश्वजातौ स्त्र्यश्वा पुरुषजातौ स्त्री पुरुषीत्युच्यते । ते धेन्ववस्थे दद्युः ।

**एतद्वोत्थानम् ।**

एतद्वोत्थानं वक्ष्यमाणानि वा । उक्तस्य पुनर्वचनं वक्ष्यमाणेष्विष्टिर्न[1] भवतीत्येवमर्थम् ।

**ऋषभैकशतानां वा गवां सहस्रभावे ।**

ऋषभेणैकशतसंख्याऽऽसां गवामित्यृषभैकशताः सत्रारम्भकाल उत्सृज्यन्ते । आसां सहस्रभाव उत्थानमित्यर्थः ।

**सर्वस्वज्यान्याम् ।**

चौरादिभिः सर्वस्वापहारे, अथ वोत्सृष्टानां गवां सर्वनाशे ।

**गृहपतिमरणे वा ज्यान्यां तूत्तिष्ठन्तो विश्वजिताऽतिरात्रे-णोत्तिष्ठेयुर्गृहपतिमरण आयुषा गवा गवां सहस्रभावे ।**

एतानि पञ्चोत्थानानि प्लाक्षप्राप्तेः प्रागेव निमित्तानि भवन्ति । प्लाक्षप्राप्तिनिमित्ते गवां नाशनिमित्ते चोत्थाननिमित्तस्य क्रतोरविधानादुदयनीय एवातिरात्रस्तयोः कर्तव्यः ।

**इति शस्यम् ॥ ६ ॥**

इत्येवं ज्योतिष्टोमादितः सारस्वतानुक्त्वेति[2] शस्यमित्युक्तं तस्यायमर्थः—एतेषु सारस्वतान्तेषु सर्वं शस्यमुक्तमित्यर्थः ॥ ६ ॥

**अथ सवनीयाः ।**

पशवो वक्ष्यन्त इति[3] शेषः ।

**क्रतुपशवो वाऽत्यन्तम् ।**

आग्नेयोऽग्निष्टोम इत्यादयः पशवः, तेषां संस्थावशेन प्रयोग उक्तः । त एव गवामयनेऽहन्यहनि संस्थावशेनैवाऽऽ सत्रपरिसमाप्तेरालब्धव्याः ।

**आग्नेयो वैन्द्राग्नो वा ।**

अयमपि पूर्ववत् ।

**आग्नेयं वा रथंतरपृष्ठेषु ।**

रथंतरभक्तिष्वपि वैरूपशाक्वरयोः परोक्षरथंतरे नौधसे च ।

**ऐन्द्रं बृहत्पृष्ठेषु ।**

अत्रापि तद्भक्तिष्वपि वैराजरैवते ।

**ऐकादशिनान्वा ।**

अन्वहमैकादशिनान्वा समस्तानालभेरन् । अत्यन्तमित्येवमन्तमनुवर्तते ।

---

१ घ. ङ. झ. °णेष्टि° । २ क. ग. घ. ङ. झ. °नुक्तेति । ३ क. ङ. °ति विशे° ।

**प्रायणीयोदयनीययोरतिरात्रयोः समस्तानालभेरन्नैन्द्राग्नमन्तर्धौ वा ।**

अयमपरः कल्पः संनियोगशिष्टः । प्रायणीये चातिरात्र उदयनीये चातिरात्र ऐकादशिनान्समस्तानालभेरन् , अन्तर्धौ मध्यवर्तिष्वन्येष्वहःस्वित्यर्थः । तेष्वैन्द्राग्नमालभेरन् । प्रायणीयोदयनीयातिरात्रग्रहणमग्निष्टुत्प्रायणीयस्थान इत्येवमादिष्वयं कल्पो मा भूदित्येवमर्थम् ।

**अन्वहं वैकैकश ऐकादशिनान् ।**

अयं चापरः कल्पः । ऐकादशिनानामेवैकैकमादित आरभ्याहन्यहनि क्रमेणाऽऽलभेरन् । अस्मिन्पक्षे दण्डकलितवदावृत्तिः । तदेतन्निरूपितं वचनोद्यत्परिवृत्तिनैकादशिनेषु लिङ्गदर्शनात् ।

**न त्वेवैकादशिनीं न्यूनामालभेरन् ।**

एकादशिन्यामेवान्वहमेकैकालम्भे क्रियमाणेऽन्त्यैकादशिन्यपरिसमाप्ता न्यूनावतिष्ठते तथा न कर्तव्यमिति प्रतिकृष्यते ।

**एतेन चेत्पशवयनेनेयुस्तृतीयेऽहनि दशरात्रस्य द्वात्रिंशतमेकादशिन्यः संतिष्ठन्तेऽत एतस्मिन्नवरात्रेऽतिरिक्तपशूनालभेरन् ।**

न्यूनालम्भप्रतिषेधादेकैकालम्भ एवं कर्तव्यमित्युच्यते । एकैकालम्भपक्ष एकादशिन्या द्वात्रिंशत्परिवृत्तिषु गतासु नवाहानि परिशिष्यन्ते । तेष्वहःस्वातिरिक्तपशूनालभेरन् । अतिरिक्तपशव इति वक्ष्यमाणानां नामधेयम् ।

**वैष्णवं वामनमेकविंशे ।**

दशरात्रस्य चतुर्थप्रभृतिष्वहःस्वेते पशवः संभवन्ति । ता(या)न्येकविंशादीनि तेन तेन स्तोमेन तानि लक्ष्यन्ते ।

**ऐन्द्राग्नं त्रिणवे वैश्वदेवं त्रयस्त्रिंशे द्यावापृथिवीयां धेनुं चतुर्विंशे तस्या एव वत्सं वायव्यं चतुश्चत्वारिंश आदित्यां वशामष्टाचत्वारिंशे मैत्रावरुणीमविवाक्ये ।**

इयमपि वशैव ।

---

१ च. °नादुन्यत्प° । २ क. ङ. ज, °नारम्भ° ।

**वैश्वकर्मणमृषभं महाव्रत आग्नेयमुदयनीयेऽतिरात्रे ।**

एते सर्वे गोपशवः । अत्र स्तोमग्रहणमहरुपलक्षणार्थं न तु स्तोमविवक्षार्थम् ।

**अपि वैकादशिनीमेव त्रयस्त्रिंशीं पूरयेयुरभिजिद्विश्वजितोर्द्विपशुवन्ति द्विपशूनि स्युः ॥७॥**

गवामयने त्रयस्त्रिंशिन्या एकादशिन्याः पूरणोपाय उच्यते । अभिजिति सप्तदशस्यैकादशिन्या रभ्यते, तस्मिन्नहन्यादितो द्वौ पशू आलभ्येते विश्वजित्यन्ततो द्वौ पशू आलभ्येते । ततः सप्तावशिष्यन्ते । अहानि च सप्तैव । विषुवतो द्विपशुत्वं पूर्वमेव प्राप्तं तत्किमित्यत्र गृह्यते । परिसंख्याभयात् । एवं कृते त्रयस्त्रिंश्येकादशिनी पूर्णा भवति । अयं च पक्षोऽतिरिक्तपशुभिर्विकल्पते ॥ ७ ॥

**अथ सत्रिधर्माः ।**

सत्राण्युक्तानि । अथेदानीं सत्रिणां नियमा उच्यन्ते ।

**दीक्षणादिपित्र्याणां दैवानां च धर्माणां प्राकृतानां निवृत्तिः ।**

दीक्षणीयाप्रभृत्या कर्मपरिसमाप्तेः पित्र्याणां पिण्डपितृयज्ञादीनां दैवानामग्निहोत्रादीनां निवृत्तिः । प्रकृतानां नित्यानामित्यर्थः । सत्रिग्रहणं यजमानोपलक्षणार्थम् । तेनैकाहाहीनेष्वपि यजमानानां धर्मा भवन्ति ।

**सर्वशश्च वर्जयेयुर्ग्रामचर्याम् ।**

ग्रामचर्या स्त्रीसंभोगः, सर्वशस्तं वर्जयेयुः । मनोवाक्कायैरित्यर्थः । दैवपित्र्याण्यपि सर्वशो वर्जयेयुः, श्रौतानि स्मार्तानि च ।

**सरणम् ।**

द्रुतगतिर्धावनमित्यर्थः ।

**विवृतस्मयनम् ।**

दन्तान्प्रकाश्य हसनमागतं चेद्दन्तानाच्छाद्य ।

**स्त्र्यभिहासम् ।**

स्त्रीभिः सहाभिहासमात्रमपि वर्जयेयुः ।

**अनार्याभिभाषणम् ।**

अनार्याः प्रतिलोमा अनुलोमाश्च दृष्टदोषिणश्च तैर्न संभाषेरन् ।

---

१ क. ख. °रभेते । च. रभते । २ च. सप्तदशाव° । ३ घ. ङ. च. °कल्पते । ४ क. ङ. °ज्ञानां । ५ च. °सनं न कर्तव्यं यदि कर्तव्यं तदाऽऽच्छाद्यैव । स्त्र्य° ।

अनृतं क्रोधमर्षं प्रगाहणम् ।

स्नानानि ।

अभिवर्षणम् ।

आत्मनः शरीरे[1] बिन्दुपतनम् ।

आरोहणं च वृक्षस्य नावो वा ।

वाशब्दः समुच्चयार्थः । अन्यस्याप्येवंप्रकारस्य[2] वृक्षादेः ।

रथस्य वा ।

अयमपि निषेधोऽनसादीनामुपलक्षणम् ।

दीक्षिताभिवादनम् ।

एतानि सर्वशो वर्जयेयुरिति संबध्यते ।

दीक्षितस्त्वौपसदम् ।

तुशब्दोऽभिवादनविधायकेषु[3] पञ्चसु सूत्रेषु वर्जयेयुरित्यस्य व्यावृत्त्यर्थः । दीक्षावस्थ उपसदवस्थमभिवादयेत् ।

उभौ सुन्वन्तौ[4] ।

दीक्षावस्थश्चोपसदवस्थश्च सुन्वन्तं सुत्यावस्थमभिवादयेताम् ।

समसिद्धान्ताः पूर्वारम्भिणम् ।

समावस्थयोर्यः पूर्वमारभते तमितरोऽभिवादयेत्पश्चादारम्भी ।

अमितप्रतरं वा ।

समसिद्धान्तयोरमितप्रतरमितरोऽभिवादयेत् । अमितप्रतरो नाम पूर्वं बह्वीभिः क्रतुभिरिष्टवानिदानीं च प्रवर्तमानः ।

सर्वसाम्ये यथावयः ।

सर्वत्र समत्वे[5] यो वयोऽधिकस्तमितरोऽभिवादयेत् । एतावानभिवादनविधिः ।

नृत्यगीतवादितानि ।

तुशब्देनाभिवादनविधेर्व्यावृत्तौ वर्जयेयुरितिशब्दः पुनरप्यागच्छतीति सूत्रद्वयार्थम्[6] । वादितं दुन्दुभ्याहननादि ।

---

१ च. °रे वर्षावि° । २ ङ. झ. °रस्याद्वृ । ३ क. °विहाय° । ४ थ. °न्वन्तम् । दी° । ५ च. घ. ङ. °त्वे वयोधिकमि° । ६ च. °द्वयोरपादि° ।

**अन्यांश्चाव्रत्योपाचारान्[1] ।**

वर्जयेयुरित्यर्थः । उक्तेभ्योऽन्ये ये शास्त्रान्तरोक्ता व्रतविरोधिन उपचारास्तानपि वर्जयेयुरित्यर्थः ।

**न चैनान्बहिर्वेदिपदोऽभ्याश्रावयेयुः ।**

यदा[2] सत्रिणो बहिर्वेदि स्थितास्तदाऽऽश्रावणं न कर्तव्यम् । आश्रावणशब्देन यागहोमा लक्ष्यन्ते[3] ।

**नोदक्यान् ।**

उदक्या आचमनार्हास्तान्बहिर्वेदिस्थितान्नाभ्याश्रावयेयुः ।

**नो एवाभ्युदियान्नाभ्यस्तमियात् ।**

एतान्बहिर्वेदिस्थितानात्मनो नोभयं कुर्यादित्यर्थः । तथा यागहोमकाल उदयास्तमयकाले च बहिर्वेदि नाऽऽतिष्ठेयुः । अशुचयो वा न भवेयुः ।

**तेषां चेत्किंचिदापदोपनमेत्त्वमग्ने व्रतपा असीति जपेत् ।**

तेषां ग्रामचर्यादीनां यत्किंचिदापदाऽकामत उपनमेत्तदा 'त्वमग्ने व्रतपा असि' इत्येतामृचं जपेत् ।

**आख्याय वेतरेषूपहवमीप्सेत ।**

यो विध्यतिक्रमं कृतवान्स इतरेषु सत्रिषु ममायमतिक्रम इत्याख्याय तेषूपहवं याचेत वेत्यर्थः । तेनायमर्थः सर्वेष्वतिक्रमेषु जपो नित्यः, जपानन्तरमिदं वा कर्तव्यम् । 'व्रतातिपत्तौ व्रतपतयः' इति शास्त्रान्तरविहितमन्यद्व्रतं विशिष्टमस्ति चेत्तद्वा कर्तव्यमित्यर्थः ।

**अवकीर्णिनं तैरेव दीक्षितद्रव्यैरपर्युप्य पुनर्दीक्षयेयुः ।**

यो व्यवायपर्यन्तं ग्रामचर्यां करोति सोऽवकीर्णीत्युच्यते । शास्त्रान्तरोक्तं स्वशास्त्रोक्तं च प्रायश्चित्तं कारयित्वा पुनरपि तैरेव दीक्षितद्रव्यैर्दण्डादिभिर्दीक्षयेयुः । अपर्युप्य परिवापनमकृत्वेत्यर्थः ।

**आग्रयणकाले नवानां सवनीयान्निर्वपेयुः ।**

आग्रयणकाले सुत्यास्वागतासु नवानां व्रीहियवानां सवनीयान्निर्वपेयुः 'शरदि व्रीहीणां वसन्ते यवानामिति । विध्यन्तरानुरोधे तु श्यामाकानां प्रकृतौ दर्शपूर्णमासयोस्तेषामपि विधानात् ।

---

१ घ. च. °त्योपचा° । २ क. ख. ग. यद्वा स° । ३ ङ. झ. लभ्यन्ते । ४ च. °त् । यद्वा सत्रिण ए° । ५ च. वा भ° ।

**दीक्षोपसत्सु व्रतदुघ आदयेयुः * ।**

तत्र श्यामाकानामप्यादनं भवति विरोधाभावात् ।

**तेषां व्रत्यानि ।**

व्रताहनि भवानि व्रत्यानीत्युच्यन्ते । दर्शपूर्णमासयोर्यदौपवसथ्यमहस्तद्व्रताहः । तत्र यानि पत्नीयजमानयोर्भोजनार्थान्युक्तानि व्रताहाणि तानि तेषां सत्रिणां पत्नीयजमानानामेकाहाहीनस्थानां च पत्नीयजमानानां भोजनार्थे भवन्तीति सूत्रार्थः । दीक्षोपसत्सुत्यासु भोजनार्थे विहितत्वात्कुण्डपायिनामयनादिष्वग्निहोत्रादिमासप्रकारा अस्य विधेरवकाशः, हविरुच्छिष्टभक्षविषये पत्न्यश्च तासां हविरुच्छिष्टभक्षविरोधात् ।

**पयो दीक्षासु ।**

दीक्षासु भोजनार्थे पयो विधीयते ।

**व्यतिनीय कालमुपसदां चतुर्थमेकस्या दुग्धेन ।**

उपसदामाद्योत्तमलक्षणं, व्यतिनीयापोह्यावशिष्टासुपसत्कालांश्चतुर्धा विभज्याऽऽद्यभागचतुस्तनव्रतं कुर्यात् । तत्राऽऽद्यः कालः प्रथमेऽहनि प्रातः, स दीक्षाव्रतेन व्याप्यत्वादपोह्यते । उत्तमस्तु काल औपवसथ्येऽहनि सायंतनस्य व्रतस्य तत्र निवृत्तत्वात्तद्धविरुच्छिष्टत्वमेव । अतो व्यतिनीय कालमिति कालद्वयाभिप्रायेणोक्तम् ।

**तावदेव त्रिभिस्तनैस्तावद्द्वाभ्यामेकेन तावदेव ।**

उपसदामेकैकं चतुर्भागं व्रतयितव्यम् । एवमुपसत्सवृद्धौ यथायोगं भागाः कल्पनीयाः ।

**सुत्यासु हविरुच्छिष्टभक्षा एव स्युः ।**

सुत्यासु हविरुच्छिष्टभक्षा एव भवेयुर्नौपवसथिकं च, सत्रव्रतस्य निवृत्तत्वादित्युक्तम् । अवधारणं यजमानानामेतदेव व्रतं न सामान्यं तदेषां व्रत्यानीत्येतत् । पत्नीनां तु सामान्यमेव, तासां हविरुच्छिष्टभक्षविरोधादित्युक्तम् ।

---

* एतत्सूत्रस्य च. पुस्तक एवं व्याख्या—दीक्षासूपसत्सु चाऽऽग्रयणकाल आगते तत्तत्कामं तेषां व्रतदुघ आदयित्वा न पयसा व्रतं कुर्युः । यत्र श्यामाकानाम्प्याग्रयणं न संभवति विरोधाभावात् । एतच्च क. पुस्तकेऽपि पाठान्तरतया संगृहीतम् ।

---

१ च. । ताहेषु भ° । २ च. °स्थानानां । ३ घ. ग. च. झ. °भागं च° । ४ च. व्याप्यत्वा° । ५ च. सायं तस्य तत्र । ६ च. च तत्र । ७ च. °न्यं तेषां व्रतानि° ।

**धानाः करम्भः परिवापः पुरोळाशः पयस्ये-ति तेषां यद्यत्कामयीरंस्तत्तदुपविगुल्फयेयुः ।**

यदि यथाप्राप्तेन हविरुच्छिष्टभक्षणेन प्राणा न ध्रियेरंस्तदा धानादीनां मध्ये यस्मिंस्तेषामभिरुचिस्तद्द्रव्यमुपविगुल्फयेयुः, अभिवर्धयेयुः ।

**आशिरदुघो दुध्यर्थम् ।**

यदि व्यञ्जनरहितं[1] हविरुच्छिष्टमुपभोक्तुमशक्तः स्यात्तदाऽऽशिरदुघो गा वर्धयेयुर्दध्यर्थम् । तेन तेन दध्नाऽऽशिरार्थं[2] गृहीतशेषेण व्रतेनोप[3]भुञ्जीरन् ।

**सौम्यं वा विगुल्फं निर्वपेयुरिति शौनको यावच्छरावं मन्येरन् ।**

यदि धानादीनां[4] हविरुच्छिष्टेन प्राणा न ध्रियेरंस्तदा यः प्राकृतः सौम्यश्चरुस्तं प्रवृद्धं निर्वपेयुर्यावद्भिः शरावैर्निरुप्तैः सत्रिणां प्राणधारणाय पर्याप्तिः संभवति तावन्निर्वपेयुरित्यर्थः ।

**वैश्वदेवमेके बार्हस्पत्यमेके ।**

अथ वैतौ पक्षौ भवतः । सौम्यो यथाप्रकृति[5] पक्तव्यः, यथाप्रकृत्येव प्रतिपादनीयश्च सत्रिणां प्राणरक्षणार्थमेव । वैश्वदेवं चरुं विगुल्फं निरुप्य तेन[6] यागं कृत्वा तच्छेषमुप[7]भुञ्जीरन्फलचमसन्यायेन । बार्हस्पत्येन चैवमेव कुर्युः । द्वावेतौ[8] पक्षौ ।

**सर्वान्वाऽनुसवनम् ।**

सर्वानेतान्सौम्यादींश्चरूननुसवनं निर्वपेयुः । एकैकश्चेन्न तत्र सौम्यः प्रकृ[9]ति(तिः)स्वस्थाने तृतीयसवने भवति । इतरयोः सवनयोरितरौ चरू[10] औपध्यानन्तर्येण भवतः ।

**अपि वाऽन्यत्र सिद्धं गार्हपत्ये पुनरधिश्रित्योपव्रतयेरन् ।**

गार्हपत्येऽधिश्रय[11]णं धर्ममात्रं कृत्वोपव्रतयेरन्, न[12] चाव्रतेन संहृत्य वा ।

**अन्यान्वा पथ्यान्भक्षानामूलफलेभ्यः ।**

उपव्रतयेरन्नित्यर्थः ।

**एतेन वर्तयेयुः पशुना च ॥ ८ ॥**

एतेन सवनीयेन च पशुना वर्तयेयुः, न केवलं धानादिभिरेव सुत्याधिकारात्सवनीय एव पशुरत्र संनिहितः किमर्थमेतेनेत्युच्यते । वक्ष्यमाणेऽपि[13] विभागे सवनीयस्यैव प्रापणार्थं

१ च. °हितो ह° । २ घ. ङ. झ. °शिरर्थं । ३ च. पयुञ्जी° । ४ च. °नां वा ह° । ५ च. °ति वक्त° । ६ घ. ङ. ब. झ. तेभ्यो । ७ च. °पयुञ्जी° । ८ च. °तौ क्लीबो प° । ९ च. °कृत इति । १० च. °रू अनूबन्ध्यान° । ११ च. °यणध° । १२ च. न वा व्र° । १३ च. °पि यागे स° ।

नाग्नीषोमीये पशौ । अतोऽग्नीषोमीये पशौ हविरुच्छिष्टभक्षणार्थं विभागे प्राप्ते 'समं स्याद् श्रुतत्वात्' इति सममेव[2] विभागः स्यादिह वचनादिति ॥ ८ ॥

**तस्य विभागं वक्ष्यामः ।**

तस्य सवनीयस्य पशोर्विभागं वक्ष्याम इति प्रतिज्ञासूत्रमिदम् ।

**हनू सजिह्वे प्रस्तोतुः ।**

जिह्वया सह हनू प्रस्तोतुर्भवति, त्रीण्येतानि ।

**श्येनं वक्ष उद्गातुः ।**

श्येनसदृशं वक्ष इत्यर्थः ।

**कण्ठः काकुद्रः प्रतिहर्तुः ।**

काकुद्रः ककुदित्यर्थः । द्वे एते ।

**दक्षिणा श्रोणिर्होतुः सव्या ब्रह्मणो दक्षिणं सक्थि मैत्रावरुणस्य सव्यं ब्राह्मणाच्छंसिनो दक्षिणं पार्श्वं सांसमध्वर्योः ।**

अंसेन स[3]ह पार्श्वे । द्वे एते ।

**सव्यमुपगातॄणाम् । सव्योंऽसः प्रतिप्रस्थातुः । दक्षिणं दोर्नेष्टुः । सव्यं पोतुः । दक्षिण ऊरुरच्छावाकस्य । सव्य आग्नीध्रस्य । दक्षिणो बाहुरात्रेयस्य । सव्यः सदस्यस्य । सदं चानूकं च गृहपतेः ।**

द्वे एते ।

**दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य ।**

द्वे एते ।

**सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्य । ओष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्राशिष्यात् ।**

एतयोर्व्रतप्रदयोरोष्ठः साधारणो भवति तं गृहपतिस्ताभ्यां विभज्य दद्यादित्यर्थः ।

**जाघनीं पत्नीभ्यो हरन्ति तां ब्राह्मणाय दद्युः ।**

ता पत्न्यः कस्मैचिद्ब्राह्मणाय दद्युः ।

**स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतः ।**

स्कन्धजा मणिकाः कीकसाश्च । एते द्वे ।

---

१ क. °मीयस्य । अ° । २ च. °व भा° । ३ च. सहितं पार्श्वम् । द्वे ।

तिस्रश्चैव कीकसा अर्धं च वैकर्तस्योन्नेतुः । अर्धं चैव वैकर्तस्य क्लोमा च शमितुस्तद्ब्राह्मणाय दद्यात्[1] । यद्यब्राह्मणः स्यात्[2] ।

द्वयोः सूक्तयोस्त्रीणि । तद्ब्राह्मणः स्याच्छमिता यद्यब्रा(ब्रा)ह्मणः स्यात्तदा स्वं भागं ब्राह्मणाय दद्यात् ।

शिरः सुब्रह्मण्यायै । यः श्वः सुत्यां प्राह तस्याजिनम् । इळा सर्वेषाम् । होतुर्वा । ता वा एताः षट्त्रिंशतमेकपदा यज्ञं वहन्ति ।

यान्येतानि षट्त्रिंशदङ्गानि तान्येकपदा उच्यन्ते । ताश्च यज्ञं वहन्ति, भक्षयितॄणां बलवर्धनद्वारेण ।

षट्त्रिंशदक्षरा वै बृहती ।

संख्यासामान्यात्सा बृहतीत्युच्यते ।

बार्हताः स्वर्गा लोकास्तत्प्राणेषु[3] च स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति ।

स्वर्गाश्च प्राणाश्च बार्हता इति कश्चित्संस्तुतिरिति । तस्मात्प्राणेषु च स्वर्गेषु च प्रतितिष्ठन्तो यन्ति, येऽङ्गानि बृहतीसंमितानि जानन्ति ।

स एष स्वर्ग्यः पशुर्य एनमेवं विभजन्त्यथ येऽतोऽन्यथा तद्यथा सेलगा वा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत् ।

स एष पशुरानन्त्याय सुखाय भवति । येऽनेन विधानेन विभजन्ति । अन्यथा चेत्प्रत्यवायायैव भवतीति । विभागस्तुतिपरा सैषा निन्दा ।

तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदांचकार तामु हाप्रोच्यैवास्माल्लोकादुच्चक्राम तामु ह गिरिजाय बाभ्रव्यायामनुष्यः प्रोवाच ततो हैनामेतदर्वाङ्मनुष्या अधीयते ॥ ९ ॥

विद्यास्तुतिद्वारेणापि विभागस्यैव प्रशस्तता कथिता । इति पशुविभागः समाप्तः ॥९॥

सर्वे समानगोत्राः स्युरिति गाणगारिः कथं ह्याप्रीसूक्तानि भवेयुः । कथं प्रयाजा इति ।

सत्राण्युक्तानि तेषां च बहुयजमानत्वमुक्तम् । बहुषु च समानार्षेया भिन्नार्षेयाश्च संभ-

१ च. °त् । ब्राह्मणश्चेच्छमिता स्यात्तस्मै दद्यात् । य° । २ च. °त् । तदा तं भागमन्यस्मै ब्राह्मणाय द° । ३ च. °षु चैव तत्स्वर्गे° ।

वन्ति। तत्र भिन्नार्षेयाणां सत्रासनं नास्तीति गाणगारिराचार्यो मन्यते[1]। कुतः। कथं ह्याप्रीसूक्तानि भवेयुः कथं प्रयाजा इति। भिन्नार्षेयत्वे सत्येवमादीनि न कथंचिद्भवेयुरित्यर्थः। अतः सर्वे सत्रिणः समानगोत्राः स्युरित्युक्तम्। आर्षेयः प्रवर इति पर्यायौ। ऋषिरिति वंशनामधेयभूता वत्सबिदार्ष्टिषेणादयः शब्दा उच्यन्ते। गोत्रशब्दोऽपत्यं पौत्रप्रभृति गोत्रमित्येवं पारिभाषिकोऽप्यस्ति। अन्यथा च पारिभाषिक एवास्ति। यथोक्तं भगवता बौधायनेन—'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयोऽगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते' इति। अयमर्थः—एतेषामपत्यमिति ये स्मर्यन्ते तद्गोत्रमित्युच्यन्ते। यथा जमदग्नेर्गोत्रं वत्सादयस्तथा गौतमस्यायास्यादयो भरद्वाजस्य दक्षगार्ग्यादयस्तथाऽत्र्यादीनां स्वस्ववर्ग्या इति। तथाऽऽर्षेयगोत्रशब्दयोर्भिन्नविषयत्वं शिष्टव्यवहारे दृष्टम्। यथाऽऽह याज्ञवल्क्यः—'अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्' इति। तथा 'गोत्रपिण्डऋषिसंबद्धा रिक्थं भजेरन्' इत्येवं व्यवहारा बहवः सन्ति। अस्मिंस्तु सूत्रे गोत्रशब्दः आप्र्यादेरनुष्ठेयत्वादनर्थकमित्येकत्वादेकोपाधिवचनेनाभिप्रेतः। 'यावन्तोऽनन्तर्हिताः समानगोत्रास्तावन्तः सकृत्' इत्यत्र सूत्रे समानप्रवरमात्रोपाधिवचनो गोत्रशब्दः प्रयुक्तः। यस्त्वगस्त्याष्टमानामन्येष्वपि गोत्रशब्दो लोके प्रयुज्यमानो दृश्यते मित्रयुवगोत्रोऽहं मुद्गलगोत्रोऽहमित्येवमादिषु स चौपचारिकः प्रयोगः। अगस्त्याष्टमानामपत्येष्वयास्यगर्गकुण्डिनादिषु गौतमभारद्वाजवसिष्ठादिषु गोत्रत्वमस्ति, तत्सामान्यदृष्ट्या मित्रयुवमुद्गलादिषु परामर्शेन लौकिकाः प्रयुञ्जते। अस्यायमर्थ इति स्मरन्ति। अतो भगवता बौधायनेन स्मृत्यन्तर उक्त एव गोत्रशब्दस्यार्थ इति निश्चिनुमः। व्याकरणस्मृतिश्चाप्यस्या न बाधिका सामान्यविशेषरूपत्वात्तयोः।

**अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात्।**

गाणगारिणा समानविधानानामेव सत्रसंबन्ध उक्ते शौनक आचार्य आह समानगोत्राणामेवेति न नियमः। नानागोत्रा अपि सत्रमासीरन्निति। कुतः। तन्त्राणां व्यापित्वात्। तन्त्रशब्देनात्र सर्वपुरुषसाधारणोऽङ्गसमुदाय उच्यते। तस्य च व्यापित्वमस्त्येव। कथं पुनरसाधारणपदार्था इति तत्राऽऽह—

**गृहपतिगोत्रान्वया विशेषाः।**

अयमर्थः—ये विशेषा असाधारणास्ते गृहपतिगोत्रान्वया गृहपतिविधानानुगुणाः कर्तव्याः। एतदुक्तं भवति—असमानविधानानामपि सत्रासनं भवति प्रायेणाङ्गसमुदायस्याविरोधित्वात्[10]। ये केचन विरोधिनस्ते गृहपतेरविरोधित्वेन कर्तव्या इति।

---

१ च. °नि कथं भवे°। २ क. घ. ङ. झ. °दावार्ष्टि°। ३ क. घ. ङ. झ. °यो भार°। ... °द्धोऽपत्याद्दे°। ५ ग. °त्येष्वाया°। ६ ग. च. °मभर°। ७ क. च. °मान्यं ... ९ घ. ङ. च. झ. °दार्था इ°। १० घ. ङ. झ. °रोधेन।

ननु गृहपत्यविरोधेन सत्रे कृते येषां विरोधस्तेषां फलसंबन्धो न स्यादित्यत आह—

**तस्य राद्धिमनु राद्धिः सर्वेषाम् ।**

तस्य गृहपतेः फलसिद्धिमनु सर्वेषां सत्रिणां फलसिद्धिर्भवत्येव । कुतः । 'तन्मुखाः सत्राण्यासते' इति वचनात् । अत एव सूत्रकारस्यायमेव पक्ष इति गम्यते ।

**प्रवरास्त्वावर्तेरन्नावापधर्मित्वात् ।**

ओप्यन्त इत्यावापा आहवनीयाः । ते च प्रवरेण धर्मेण धर्मिणस्तस्य प्रवरस्याऽऽहवनीयसंस्कारत्वादाहवनीयधर्म इत्युच्यते । अत आहवनीयबहुत्वात्प्रतिप्रधानमावर्तन्त इत्युच्यते,[1] आवापधर्मित्वादित्ययमर्थः । आवापानामाहवनीयानां प्रवरं प्रति धर्मित्वादित्यर्थः । एवं प्रवरानुक्रमणस्य प्रसङ्गमापाद्यानन्तरं प्रवरानुक्रमणमिति 'जामदग्न्या[2] वत्साः' इत्येवमादिना ग्रन्थेन[3] । अतस्तत्तदनुक्रमणस्येदं प्रयोजनं श्रुतावेतावन्मात्रमस्ति । कस्यांचिदेवं श्रूयते—'आर्षेयं[4] प्रवृणीते यथऋषि मन्त्रकृतो वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इति । आर्षेयवरणस्य मन्त्रकृत्त्वं विशेषणत्वेन चोच्यते । अतो[5] य आम्नाता[6]नामृषीणां मन्त्रकृत्त्वेनाऽऽम्नायन्ते तेषामेकादीनां[8] यथेष्टसंख्याकानां वरणे प्राप्ते 'न चतुरो वृणीते न पञ्चातिवृणीते' इति चतुर्णामतिपञ्चानां च प्रतिषेध इति वाक्यत्रयमस्यां श्रुताविति वर्णयन्ति । अन्यस्यामन्यथा श्रूयते—'आर्षेयं[7] प्रवृणीते एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इति । अयमर्थः—त्रीन्वृणीत इत्येष एवात्र विधिः । इतरेषां कश्चिदत्रयुत्यानुवाद इति वर्णयन्ति । इमामेव श्रुतिमुपन्यस्य न्यायविद्भिरयमेवार्थो वर्णितः । अत्रार्षेयस्य हानं स्यादनधिकारादिति पूर्वोक्तश्रुत्यनुसारेण[9] न्यार्षेयाणामप्यधिकारो[10] नास्तीति कल्पकाराणां सूत्रकाराणां च प्रवृत्तिरिति सैवानुसृताऽस्माभिः । तत्र य आत्मीया ऋषयस्तेषां ये मन्त्रकृतस्ते प्रोक्तसंख्या वरितव्या इत्येतावन्मात्रं श्रुतितोऽवगतं तत्रैत आत्मीया ऋषयस्तेषामेते मन्त्रकृत इति ज्ञाने[11] श्रुतिस्मृतिरेवात्र शरणम् । तत्रैतावदेव लौकिकानां स्मरणं दृश्यते वयं वत्सा वयं बिदा वयमार्ष्टिषेणा वयं रथीतरा वयं कण्वा वयं गविष्ठिरा वयमार्ष्टिषेणा वयं कुण्डिना वयं गर्गा इति, नास्माकमेतेष्वेते मन्त्रकृत एतेऽमन्त्रकृत इति स्मरन्ति । अपि च व्यार्षेयास्त्र्यार्षेयाः पञ्चा-

१ ग. घ. ङ. झ. °च्यन्ते, आ° । २ क. ग. ङ. झ. °दग्न्या व° । ३ च. °न । तत्त° । ४ च. °र्षे. यान्वृणीते अम्नातानृषीन्मन्त्र° । घ. र्षेयं वृ° । ५ क. ग. घ. ङ. झ. अत आ° । ६ घ आत्मीयाना° । १० च. °काहादीनानां । ७ ग. घ. च. °यं वृ° । ८ ङ. च. अत्राऽऽर्षे° । ९ घ. च. °रेणान्या° । १० घ. च. °रोऽस्ती° । ११ घ. च. °नेन श्रु° ।

षेया इति च स्मरन्ति । अपि चास्माकमाङ्गिरोमुख्यः प्रवरोऽष्टादंष्ट्रमुख्यो वेति वचनं स्मरन्ति । अथ चैतेषां ज्ञानस्य स्मरणादन्यत्प्रमाणं नास्ति । आर्षेयवरणविध्यपेक्षितं चैतज्ज्ञानम् । एवं चेत्कल्पसूत्राणां वंशनामधेयभूतामित्रयुवादिविषया श्रुतिर्लोक उपजीव्या । उद्देशेनास्यैत एतावन्तोऽस्यैको द्वावस्य पञ्चास्य[2] त्रयो वा पञ्च वाऽस्यैको वा त्रयो वा पञ्च वेति, अस्यायं मुख्[1]तोऽयं वेत्येवमादि[4]वरार्थविषयत्वादिकल्[6]पानां श्रुतिमागच्छन्तोऽयमपभ्रंशपरिहारार्थं स्वे स्वे कल्पे सूत्रे[7] निबध्नन्ति । प्रवरादिस्वीयसंज्ञाया आपत्प्रवरानुक्रमस्य प्रयोजनमित्यवगन्तव्यम् ।

इदानीं प्रवरा अनुक्रमिष्यन्ते—

**जामद[9]ग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । अथ[10] हाजामदग्न्यानां भार्गवच्यावनाप्नवानेत्यार्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति ।**

द्विविधा वत्सा जामदग्न्या अजामदग्न्याश्च । तत्र ये जामदग्न्या वत्सा वयमिति स्मरन्ति तेषां पञ्चार्षेयः प्रवरो भवति भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । अथ हाजामदग्न्यानां भार्गवच्यावनाप्नवानेति । ये तु वयमजामदग्न्या वत्सा इति तेषां त्र्यार्षेयः प्रवरो भवति भार्गवच्यावनाप्नवानेति । एतेषामजामदग्न्यत्वादौर्वजामदग्न्यशब्दौ न भवतः । अत एव तौ शब्दौ जामदग्न्यत्वप्रयुक्तौ । द्विप्रकाराणां वत्सानां परस्परमविवाहः[11], त्र्यार्षेयसंनिपातात् । एतदुक्तं भगवता बौधायनेन 'त्र्यार्षेयाणामविवाहः' इति । आर्ष्टिषेणेति । अयमपि पञ्चार्षेयप्रवरः ।

**बिदानां भार्गवच्यावनाप्नवानौर्वबैदेति ।**

अयमपि पञ्चार्षेय एव । बिदानामौर्वशब्दसमन्वयाज्जमदग्निगोत्रत्वमप्यस्ति । वत्सानां बिदानामार्ष्टिषेणानां च क्वचिदृषिसंनिपातात्कचित्सगोत्रत्वाच्च परस्परमविवाहः । सर्वेषु च समानप्रवरत्वादविवाहः । सर्वत्र चैवं समानधर्मेषु ।

---

१ घ. च. °मुखो वे° । २ च. °स्य त्रयोऽस्य त्र° । ३ च. °स्वतः पञ्चैवे° । ४ क. °दिप्रवरार्थविषयमानिपादिकां श्रुतिमागच्छन्तीमप° । इति पाठान्तरम् । ५ च. °पदार्थः । ६ क. ग. घ. ङ. झ. °दिकालानां । ७ . ङ. च. झ. °त्रेण नि° । ८ क. ङ. झ. °रासीय° । ९ घ. ङ. च. ञ. झ. °दग्न्या व° । १० क. ग. ङ. ण. झ. °थ ह जा° । ११ च. °हः,

**यस्कवाधौलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्यायनानां भार्गववैतहव्यसावेतसेति ।**

अयं गणस्त्र्यार्षेयः । यस्कादीनां दशानां परस्परमविवाहः । प्रवरेषु क्वचिच्छाखान्तरात्पदविपर्यासो वर्णविपर्यासो वा पदान्यत्वं वाऽस्ति न तेन प्रवरान्यत्वं भवतीत्यवगन्तव्यम् ।

**श्यैतानां भार्गववैन्यपार्थेति ।**

त्र्यार्षेयोऽयम् ।

**मित्रयुवां वाध्र्यश्वेति त्रिप्रवरं वा भार्गवदैवोदासवाध्र्यश्वेति ।**

मित्रयुवामेकार्षेयोऽयं त्र्यार्षेयो वा प्रवरो भवति । अयं प्रवरविकल्पः सर्वेषां मित्रयुवां भेदेन स्मरणाभावात् । वत्सानां तु स्मरणादेव वत्सभावस्तद्भेदात्तत्प्रवरस्य व्यवस्था युक्ता न तु तद्विशेषणभेदेन प्रवरभेदग्रहणमिति । तदयुक्तम् । अगृह्यमाणस्य भेदस्य सत्त्वे प्रमाणाभावात् । प्रवरभेदः प्रमाणमिति चेन्नैतत्साधकं प्रयोगविकल्पेनापि संभवात् । अतो[1] भेदाग्रहणाद्व्यवस्थायां प्रमाणं नास्तीति विकल्प एव[2] प्रवरयोरित्यध्यवसितम् । एवमेकत्र्यार्षेयपञ्चार्षेयविकल्प आद्यपदविकल्पे वाऽन्यस्मिन्नप्येवंविध ऋषिभेदग्रहणे सति व्यवस्था नास्तीति निर्धार्यते ।

**शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति ॥१०॥**

एकार्षेयोऽयम् । एवं त्र्यार्षेयो वा शुनकानां प्रवरः ॥ १० ॥

**गौतमानामाङ्गिरसायास्यगौतमेति । उचथ्यानामाङ्गिरसौचथ्यगौतमेति । रहूगणानामाङ्गिरसराहूगण्यगौतमेति । सोमराजकीनामाङ्गिरससौमराज्यगौतमेति । वामदेवानामाङ्गिरसवामदेव्यगौतमेति । बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति । पृषदश्वानामाङ्गिरसपार्षदश्ववैरूपेति ।**

अमी त्र्यार्षेया इत्यर्थः ।

**अष्टादंष्ट्रं हैके ब्रुवतेऽतीत्याङ्गिरसमष्टादंष्ट्रपार्षदश्ववैरूपेति ।**

आङ्गिरसाष्टादंष्ट्रयोर्विकल्पः । अतीत्य[3] तत्स्थान इत्यर्थः ।

---

१ च. °भेदग्र° । २ च. °मेव त्र्या° । ३ च. °त्य त्यक्त्वेत्ये° ।

ऋक्षाणामाङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति ।

अयं पञ्चार्षेयः प्रवरः ।

कक्षीवतामाङ्गिरसौचथ्यगौतमौशिजकाक्षीवतेति ।

अयमपि पञ्चार्षेय एव ।

दीर्घतमसामाङ्गिरसौचथ्यदैर्घतमसेति ।

अयं त्र्यार्षेयः । अयास्योचथ्यरहूगणसोमराजकिवामदेवबृहदुक्थकक्षीवद्दीर्घतमस इत्येते गौतमाः । उचथ्यशब्दसमन्वयाद्दीर्घतमसां गौतमत्वमस्त्येव । गौतमानां सर्वेषामविवाहः । पृषदश्वा रथीतरा आङ्गिरसश्चेति च स्मरन्ति । एकयोनिर्दक्षाः पुनर्भरद्वाजाः ।

भरद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वाजेति ॥ ११ ॥

भरद्वाजानामग्निवेश्यानां चायं त्र्यार्षेयः प्रवरो भवति ॥ ११ ॥

मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति । तार्क्ष्यं हैके ब्रुवतेऽतीत्याङ्गिरसं तार्क्ष्यभार्म्यश्वमौद्गल्येति ।

अयं त्र्यार्षेयः, आङ्गिरसतार्क्ष्ययोर्विकल्पः ।

विष्णुवृद्धानामाङ्गिरसपौरुकुत्स्यत्रासदस्यवेति । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । आङ्गिरसशैन्यगार्ग्येति वा ।

गर्गाणां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवति । व्यवस्थया विकल्पो न वर्गभेदानवगमादित्युक्तम् । एते च भरद्वाजाः । आग्निवेश्यानां गर्गाणां च भरद्वाजत्वात्सर्वेषां च परस्परमविवाहः । मुद्गलविष्णुवृद्धाश्चैकपदादिनः ।

हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति ।

हरितकुत्सपिङ्गशङ्खदर्भभैमगवा इत्येतेषां षण्णामयं प्रवरो भवति ।

मन्धातारं हैके ब्रुवतेऽतीत्याङ्गिरसं मान्धात्राम्बरीषयौवनाश्वेति ।

अयं वा हरितादीनां षण्णां प्रवरो भवति ।

संकृतिपूतिमाषतण्डिशम्बुशैवगवानामाङ्गिरसगौरिवीतसांकृत्येति ।

संकृत्यादीनां पञ्चानामयं प्रवरो भवति ।

---

१ च. °कपातिनः । २ क. ङ. ञ. °वीतिसं° ।

**शाक्त्यो वा मूलं शाक्त्यगौरिवीतसांकृत्येति ॥ १२ ॥**

संकृत्यादीनामयं वा प्रवरो भवति । एते संकृत्यादयः प्रकरणादङ्गिरःशब्दसमन्वयाच्चाङ्गिरसा इति प्रतीयन्ते । शक्तिगुरिवीतसमन्वयाद्वासिष्ठा इत्यपि प्रतीयन्ते । तथा कचित्प्रवराम्नायेऽङ्गिरसां प्रकरणे संकृत्यादीनादिश्याङ्गिरोमुखमेव प्रवरं पठ्यमानं पश्यामः । तथा कस्मिंश्चित्प्रवराम्नाये वसिष्ठानां प्रकरण एतानेवोद्दिश्य शाक्त्यमुखं प्रवरं पठ्यमानं पश्यामः । एवं द्वाभ्यामपि संबन्धदर्शनादुभयोरन्यतरसंबन्धिन एवेत्यवगन्तुं न शक्यते । यद्येषां वंशभेदस्थितिरास्ति तदेम आङ्गिरसा इमे वासिष्ठा इत्यवगम्यते । तत्राऽऽङ्गिरसानामयं वासिष्ठानामयमिति निवेशो विकल्पाभावः । अतो वंशभेदाभावादविकल्प एव प्रवरयोः । ततः संकृत्यादीनां वसिष्ठत्वाभावे प्रमाणाभावाद्वासिष्ठैरेषामविवाहः ॥ १२ ॥

**कण्वानामाङ्गिरसाजमीह्ळकाण्वेति घोरमु हैके ब्रुवतेऽवकृष्याजमीह्ळमाङ्गिरसघौरकाण्वेति ।**

अवकृष्येति । अपोह्येत्यर्थः ।

**कपीनामाङ्गिरसामहीयवोरुक्षयसेत्यथ य एते द्विप्रवाचना यथैतच्छौङ्गशैशिरयः ।**

अथेदानीमिदमुच्यते । य एते द्विप्रवचना ऋषिद्वयव्यपदेश्या यथैते शौङ्गशैशिरा द्व्यामुष्यायणाः शौङ्गेयस्य क्षेत्रे शैशिरेर्बीजोत्पन्नानां वंशाः, अन्येषां वा भिन्नार्षेयक्षेत्रजोत्पन्नानां वंशा इत्येवोदाहरणम् । शौङ्गशिरग्रहणं प्रदर्शनार्थम् । सर्वे ते भिन्नार्षेयाः ।

**भरद्वाजाहशुङ्गाः कताः शैशिरयः ।**

यस्माद्भरद्वाजाः शुङ्गास्तेषामयं प्रवरः । आङ्गिरसबार्हस्पत्यभारद्वाजेति । कताः शैशिरयस्तेषां वैश्वामित्रकात्यात्कीलेति ।

एवं स्थिते कथमेतेषामार्षेयप्रवरणमितिप्रसङ्गमुक्त्वाऽऽह—

**तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः ।**

त्र्यार्षेयवरणपक्ष एवं भवति ।

**द्वौ वेतरतस्त्रीनितरतः ।**

पञ्चार्षेयप्रवरणपक्षोऽयम् ।

---

१ क. ङ. झ. °वीतिसां° । २ च. °रण एव सं° । ३ घ. ङ. चं. झ. °दाद्° । ४ च. प्रवाच° । ग. प्रवरव° । ५ च. °शिरयो द्व्या° । ६ च. °वैं हि ते । ७ ङ. झ. °णप्र° । ८ घ. ङ. च. झ. °तः । आर्षे° ।

**न हि चतुर्णां प्रवरोऽस्ति ।**

अत उभयतो द्वौ द्वौ न ग्रहीतव्यौ । कुतः, चतुर्णां वरणनिषेधात् ।

**न पञ्चानामतिप्रवरणम् ।**

अतिपञ्चानां प्रवरनिषेधात्[1] । तेन द्वयोरेकार्षत्वे[2]ऽपि द्व्यार्षेयवरणमनुज्ञातमिति गम्यते ।

**आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ॥ १३ ॥**

प्रदर्शनमात्रमेतत् । द्व्यामुष्यायणलक्षणमुच्यते—[3]

अपुत्रेण परक्षेत्रे नियोगोत्पादितः[4] सुतः ।
आवयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

इति याज्ञवल्क्यवचनादेवंप्रकारमेव द्व्यामुष्यायणत्वं नान्यथेति मन्तव्यम् । द्व्यामुष्यायणानां सर्वदा पक्षद्वयेऽप्यविवाहः । द्व्यामुष्यायणत्वाभावे वोर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्चेत्यस्य वचनस्याविषयः ॥ १३ ॥

**अत्रीणामात्रेयार्चनानसश्यावाश्वेति गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति ।**

अत्र द्विविधा अत्रय[5] उक्ता अन्यत्रान्ये च सन्ति । तेषां सर्वेषामत्रीणां परस्परमविवाहः । एवमुत्तरेष्वपि क्वचिद्द्रष्टव्यम् ।

**चिकितगालवकालबवमनुतन्तुकुशिकानां वैश्वामित्रदेवरातौदलेति ।**

चिकितानां गालवानां कालानां बवानां मनूनां[7] तन्तूनां कुशिकानामित्येतेषां[8] सप्तानामयं प्रवरो भवति ।

**श्रौमतकामकामकायनानां वैश्वामित्रदेवश्रवसदैवतरसेति ।**

श्रौमतानां कामकायनानामयं प्रवरः ।

**धनंजयानां वैश्वामित्रमाधुच्छन्दसधानंजयेति[9] । अजानां वैश्वामित्रमाधुच्छन्दसाज्येति रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेत्यष्टकानां वैश्वामित्रमाधुच्छन्दसाष्टकेति ।**

धनंजयाजरौहिणाष्टका वैश्वामित्रास्त्रिप्रवराः ।

---

१ घ. ङ. च. झ. °तू । तद्द्वयो° । २ च. °कार्षेयत्वे° । ३ क. ग. घ. ङ. झ. °त्रे
छ. झ. °तः सवर्णयोरुभयो° । ५ च. सर्वेषां प° । ६ क. ङ. झ. °पि
च. मनुत° । ८ घ. ङ. च. °षां षण्णाम° । ९ ग. छ. ज. जय्येति ।

**पूरणवारिधापयन्तानां वैश्वामित्रदेवरातपौरणेति ।**

पूरणानां वारिधापयन्तानामयं प्रवरः ।

**कतानां वैश्वामित्रकात्यात्कीलेत्यघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति रेणूनां वैश्वामित्रगाथिनरैणवेति वेणूनां वैश्वामित्रगाथिनवैणवेति शालङ्कायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति ।**

शालङ्कायनानां शालाक्षाणां लोहिताक्षाणां लोहितजह्नूनामयं प्रवरः । चिकितादिलोहितजह्न्वन्तानां सर्वेषां विश्वामित्राणामविवाहः ।

**कश्यपानां काश्यपावत्सारासितेति निध्रुवाणां काश्यपावत्सारनैध्रुवेति रेभाणां काश्यपावत्साररैभ्येति शाण्डिलानां शाण्डिलासितदैवलेति । काश्यपासितदैवलेति वा ॥ १४ ॥**

एते कश्यपाः । एतेषां परस्परमविवाहः । शाण्डिलानां[1] काश्यपशाण्डिलयोर्विकल्पः ॥ १४ ॥

**वासिष्ठेति वसिष्ठानां येऽन्य उपमन्युपराशरकुण्डिनेभ्यः ।**

उपमन्युपराशरकुण्डिनेभ्योऽन्ये वासिष्ठास्तेषामयं प्रवरः । उपमन्युपराशरकुण्डिनातिरिक्ता वासिष्ठा एकार्षेयाः परस्परमविवाह्याः ।

**उपमन्यूनां वासिष्ठाभरद्वस्विन्द्रप्रमदेति पराशराणां वासिष्ठशाक्त्यपाराशर्येति कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति ।**

एतेषां सर्वेषामविवाहः ।

**अगस्तीनामागस्त्यदार्ढच्युतेध्मवाहेति सोमवाहो वोत्तम आगस्त्यदार्ढच्युतसोमवाहेति ।**

उत्तमपदाविकल्पः ।

**पुरोहितप्रवरो राज्ञाम् ।**

उत्तरविवक्षार्थमेतत्, पौरोहित्यान्राजविशामिति सिद्धत्वात् ।

---

१ ग. °ह्यः । शाण्डि° ।

**अथ यदि सार्ष्टं प्रवृणीरन्मानवैलपौरूरवसेति ।**

' राजर्षीन्वा राज्ञाम् ' इत्युक्तं तस्य स्वरूपमेतेनोच्यते । यदि राज्ञां राजर्षीन्वृणीते तदेत्यर्थः । सृष्टौ भवं सार्ष्टं समुत्पत्तिरित्यर्थः । तथा हि सर्वेषां राजन्यानामिलापुरूरवा- द्यो वंशकरा इति स्मर्यन्ते तेषां वरणमित्यर्थः ।

**इति सत्राणि ।**

इत्थं सत्राण्युक्तानीत्यर्थः । उक्तानुकीर्तनमुत्तरविवक्षार्थम् ।

**तान्यदक्षिणानि ।**

तानि सत्राण्यदक्षिणानि भवन्ति । सत्राणीत्येतेनैव संनिहितत्वात्सत्राणामेवादक्षिणत्वे सिद्धे तानीति योगविभागार्थमुच्यते । तेनायमर्थः—संनिहितान्यसंनिहितानि च यानि सत्राणि भवन्ति तेषु सर्वेषु सत्रेषु यजमानर्त्विक्त्वाविशेषात्परिक्रयाभाव इति । अनेन सर्वेषां सत्राणां दक्षिणाभावोऽवधार्यते । यत्तु ' कृष्णाजिनानि धून्वन्ते ' इति । तेन दक्षि- णानयनमात्रानुवादः ।

**तेषामन्ते ज्योतिष्टोमः ।**

तेषां सत्राणामन्ते ज्योतिष्टोमः ।

**पृष्ठ्यशमनीयः सहस्रदक्षिणः ।**

पृष्ठ्यशमनीयसंज्ञकः सहस्रदक्षिणः कर्तव्यः । अन्वर्थसंज्ञेयम् । सत्रेषु प्रयुज्यमानानां पृष्ठ्यानां दक्षिणाभावाद्दीप्यमानानां यजमानानां निर्वपणं शमनं क्रियत इति । पृष्ठ्य- शमनीयः, पृष्ठ्यानां शमनप्रयोजनोऽयं क्रतुरित्यर्थः । सत्रादुदवसायैषामन्यतमेन क्रतुना सर्वे सत्रिणः पृथक्पृथग्यजेरन् । स्वकीयैरेवर्त्विग्भिः । सहस्रदक्षिणः । सत्रोदवसाननिमि- त्ताधिकारोऽयम् । एकाहो ज्योतिष्टोमो द्वादशशतदक्षिण इत्यस्य दक्षिणामात्रविधानम् । स एकोऽधिको यज्ञः स्वरूपतो ज्योतिष्टोम एव पृष्ठ्यशमनीयः कर्तव्य इति सिद्धम् ।

**अन्यो वा प्रज्ञातदक्षिणः ।**

अन्यो वा ज्योतिष्टोमात्पृष्ठ्यशमनीयः कर्तव्यः । प्रज्ञातदक्षिण आम्नातदक्षिण इत्यर्थः ।

**दक्षिणावता पृष्ठ्यानि शमयेरन्निति विज्ञायते ।**

' सत्रादुदवसाय दक्षिणावता पृष्ठ्यशमनीयेन यजेरन्सत्रिणः ' इत्येवमेव श्रुतिः । सर्वेषां सत्रिणां ज्योतिष्टोमो वाऽन्यो वेत्ययमुभयोर्द्रष्टव्यः । तत्रास्यां श्रुतावेतावानेवार्थः—

---

१ ख. ङ. च. झ. °णीत त° । २ ख. ङ. च. झ. शकारा । ३ च. यत्र । ४ च. सद° । ° । ६ ख. ङ. च. °र्त्विग्भिर्वाऽयं क्रतुः । स° । ७ च. स को य° । ८ क. ग. ङ. °ता दक्षिणायुक्तेन । पृ° ।

सहस्रदक्षिणः पृष्ठ्यशमनीयः कर्तव्य इति । नात्र क्रतुविशेषनिर्देशोऽस्ति । एवं स्थिते भगवानाचार्यो वैकृतेषु सर्वेषु विधिषु प्रकृतेर्बुद्धिस्थत्वात्तस्यामेव प्रकृष्टदक्षिणत्वं नाम गुणो विधातुं युक्त इत्यर्थः । तथा हि—'तेषामन्ते ज्योतिष्टोमः पृष्ठ्यशमनीयः सहस्रदक्षिणः' इति । 'दश शतानि तत्सहस्रं तत्सर्वम्' इत्यादिषु श्रुतिवाक्येषु सहस्रसंख्यायाः प्रकृष्टत्वदर्शनात्सहस्रदक्षिणत्वमेवोक्तवानाचार्यः । अन्ये पुनराचार्या दक्षिणावतेत्यनेन प्रकृष्टदक्षिणा प्रकृतेरेवात्र प्रतीयत इति सहस्रत्वमाहुः । अन्यो वा प्रज्ञातदक्षिण इति । एवमात्मीयं परकीयं च पक्षमुक्त्वा तयोर्मूलमिति प्रदर्शयितुं तां च श्रुतिं पठितवानाचार्यः 'दक्षिणावता पृष्ठ्यानि शमयेरन्निति विज्ञायते' इति ।

एवमनयोः पक्षयोरित्येव श्रुतिर्मूलमित्युक्त्वा स्वपक्षत्वमेव द्रढयितुमाह—

**स एव हेतुः प्रकृतिभावे प्रकृतिभावे ।**

प्रकृष्टत्वं महत्त्वं पृष्ठ्यशमनीये हेतुरुक्तो दक्षिणावता पृष्ठ्यानि शमयेरन्निति स प्रकृतेर्ज्योतिष्टोमस्य पृष्ठ्यशमनीयभावत्वे हेतुः प्रकृष्टदक्षिणत्वोपाधिर्न्न क्रतुविशेषोऽन्वेषणीयस्तत्रानवस्थादेः प्रसङ्ग इति स एव हेतुः प्रकृतिभाव इत्युक्तवानाचार्यः ।

**नमो ब्रह्मणे नमो ब्रह्मणे नम आचार्येभ्यो नम आचार्येभ्यो नमः शौनकाय नमः शौनकाय ॥ १५ ॥**

**इत्याश्वलायनश्रौतसूत्र उत्तरषट्के षष्ठोऽध्यायः ॥ ६ ॥**

---

नमो ब्रह्मण इति । नमस्कृतवानाचार्यः । ब्रह्म नाम तदाविर्भावोपायश्च तत्रैवोक्तः श्रवणमनननिदिध्यासनवैराग्यलक्षणलक्ष्य इति श्रौतस्मार्तक्रिया प्रसिद्धा । आत्मश्रवणादीन्येवंरूपाणि—तत्राहंरूपो यः सर्वेषां शंसनमभिन्नेदंभावोऽहंरूपोद्भेदः स तद्बोधः सर्वदा स्वस्थ एवावतिष्ठते । यदा वा पुनर्बोधार्थसंनिधिरतदाऽयं प्रोतकाष्ठयोरिव विवेकादवगन्तुं शक्य एव । स एष आत्मशब्देनोच्यते । अयमेवापहतपाप्मा विरजो विशोको विमृत्यु-

---

१ च. °तेषु बु° । २ च. °मेक प्र° । ३ च. °मूलं द° । ४ घ. ङ. झ. °ष्टदक्षिणत्वं । ५ च. °त्त्वं च पृ° । ६ क. ग. पृष्ठानि । ७ घ. छ. झ. °कृतिज्योति° । च. °कृतिर्ज्यो° । ८ च. °ष्टोमः पृ° । ९ घ. ङ. झ. °वश्चदोषः । पृ° । च. °वश्चेद्दोषः । पृ° । १० ग. घ. ङ. च. झ. °धिन्ना क्र° । ११ ङ. °क्तः श्रौतस्मार्तक्रियाश्र° । १२ च. सिद्धः । आ° । १३ ङ. °र्वेषाम° । १४ च. °हं भेदरूपो भेदः । १५ च. स तु बो° । ङ. सत्यबो° । १६ ङ. °ध्यबोधकसं° । १७ ग. घ. झ. °यं प्रात° । च. °यं दशका° । १८ क. ग. घ. च. झ. °वेकोऽव° ।

र्विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो नित्यानन्दो नित्यतृप्त उच्यते । अन्यस्यानुपलम्भादन्यस्य चापहतपाप्मादिभिर्गुणैः किंचित्तादर्थ्यं रूपयित्वेममेव संसारिणमात्मानमभिमुखीकृत्य तत्तद्व्यपदेशाच्च । अतोऽयमेवाऽऽत्मा परं ब्रह्मेत्युच्यते । अनेन रूपेणाऽस्याऽऽत्मनः सर्वत्र रागद्वेषादयो[1] वैराग्यमेवोच्यते । एवमात्मश्रवणमननिदिध्यासनवैराग्ययुक्तस्यैव श्रौतस्मार्तकर्माणि नित्यनैमित्तिकाख्यान्यनुतिष्ठतो दर्शनाच्छोधनवत्संसारिताहेतुपुण्यपापपूर्वाभ्यासमलाद्यपक्षये महता कालेनायमेवाऽऽत्मा सोऽहं ब्रह्मेत्यवगच्छति । अहमयमित्येवं ब्रह्मणे नमस्कृत्य स्वार्थे संसारिणो ब्रह्मोपायो नान्यः । अयमेवाऽऽत्मपदार्थो नान्य इत्येवाभिप्रायेणास्माभिः पुरस्तादुक्तम् । अत एव भगवान्सूत्रकारः श्रौतानि कर्माण्युक्त्वाऽन्ते ब्रह्मणे नमस्कारं कृतवान् । तेन भगवतोऽप्ययमेवाभिप्राय इति लक्ष्यते । एवं ब्रह्मणे नमस्कृत्याऽऽचार्येभ्यो नमस्कारं कृतवान् । योऽयमस्य शास्त्रार्थसंप्रदायाविच्छेदस्माभिरधिगतो[6][7] न स्वमनीषेक्षयाति भगवता दर्शितस्तेन स्मरणेन नमः शौनकाय नमः शौनकायेति भगवानाचार्यः स्वाभिमतज्येष्ठं शौनकाचार्यं नमस्करोति । चतुर्द्विरुक्तिः शास्त्रसमाप्तिसूचनार्था ॥ १९ ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां द्वादशोऽध्यायः ॥ १२ ॥

---

१ घ. ङ. झ. °द्वेषोद्° । च. °द्वेषादिभ्यो वै° । २ च. °इत आदर्शशोध° । ३ घ. ङ. झ. °—°रयाथ° । च. °पूर्वरयाम° । ४ घ. ङ. च. झ. °क्षम° । ५ च. °गतेन । ६ च. येति ।

# अथ परिशिष्टम् ।

भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः ।
श्यैतादयस्त्रयस्तेषां विवाहो मिथ इष्यते ॥
षण्णां वै गौतमादीनां विवाहो नेष्यते मिथः ।
दीर्घतमा औचथ्यः कक्षीवांश्चैकगोत्रजाः ॥
भरद्वाजाग्निवेश्यर्क्षाः शुङ्गाः शैशिरयः कताः ।
एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै ॥
पृषदश्वा मुद्गला विष्णुवृद्धाः
कण्वोऽगस्त्यो हरितः संकृतिः कपिः ॥
यस्कश्चैषां मिथ इष्टो विवाहः
सर्वैरन्यैर्जामदग्न्यादिभिश्च ॥
यावत्समानगोत्राः स्युर्विश्वामित्रोऽनुवर्तते ।
तावद्वसिष्ठश्चात्रिश्च कश्यपश्च पृथक्पृथक् ॥

द्व्यार्षेयाणां त्र्यार्षेयसंनिपाते अविवाहः । त्र्यार्षेयाणां पञ्चार्षेयसंनिपाते अविवाहः[1]

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥

सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते । एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणादित्यसमानप्रवरैर्विवाहो विवाहः । इति परिशिष्टम् ।

## समाप्तमिदं सवृत्तिकमाश्वलायनश्रौतसूत्रम् ।

---

१ छ. ज. °वाहः ।

## विषयानुसारेण ग्रन्थानां सूचीपत्रम् ।

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ९ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ५७ | आचारभूषणम् | ४ | ६ |
| ५८ | आचारेन्दुः | ४ | ८ |
| | आधानपद्धतिः | १ | १४ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा-) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ९ | ईशावास्योपनिषद् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषद् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषद् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषद् | १ | ० |
| ९२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषद् ( शां० ) | ५ | ० |
| ६३ | छान्दोग्योपनिषद् (रामा-) | ३ | १२ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ७९ | छान्दोग्योप० [मिताक्षरा० | २ | ० |
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८९ | ज्योतिर्निबन्धः | ३ | १९ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषद् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्ति० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| ९३–१ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टू रा० स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ५६ | नित्याषोडशिकार्णवः | २ | ४ |
| ८८ | निरुक्तम् (भा० १–२) | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ८ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषद् | १ | ० |
| १५ | बृहदारण्यकोपनिषद् | ८ | ० |
| ६४ | ,, (रामानुजटी०) | ३ | ४ |
| ३१ | ,, (मिताक्षरा) | २ | १२ |
| १६ | बृहदारण्यकोपनिषद्भा० | २२ | ८ |
| ७१ | बृहद्योगतरङ्गिणी | १० | १२ |
| ६८ | बृहद्ब्रह्मसंहिता | १ | १२ |
| २८ | ब्रह्मपुराण | ६ | ४ |
| २१ | ब्रह्मसूत्राणि (शां०) | १२ | ० |
| ६७ | ,, ब्रह्मामृतवर्षिणी-दीपिकासमेतानि | ४ | ८ |
| ८२ | ब्रह्मसूत्रवृत्तिः | २ | ७ |
| ३४ | भगवद्गीता (शां०) | २ | ० |
| ३४ | ,, (सटीक शां०) | ६ | ४ |
| ४४ | ,, (पैशाचभाष्य०) | १ | ८ |
| ४५ | ,, (मधुसूदनीश्रीधरीटी० | ५ | ४ |
| ९२ | ,, (रामानुजीया) | ७ | ८ |
| ९९ | भास्करीयबीजगणि०सटी० | २ | |
| ७५ | भाष्यार्थरत्नमाला | ४ | ४ |
| ५४ | मत्स्यपुराणम् | ६ | ० |
| १० | माण्डूक्योपनिषद् | २ | ५ |
| ९७ | मीमांसादर्शनम् | ११ | २ |
| ९ | मुण्डकोपनिषद् | ० | १० |
| ६० | यतिधर्मसंग्रहः | १ | १२ |
| ५० | यतीन्द्रमतदीपिका | १ | ४ |
| ४६ | याज्ञवल्क्यस्मृतिः | १३ | ० |
| ४ | योगरत्नाकरः | ५ | ० |
| १९ | रसरत्नसमुच्चयः | ३ | १२ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| २ | रुद्राध्यायः | १ | ६ |
| ८० | वाक्यवृत्तिः | ० | ८ |
| ८९ | वायुपुराणम् | ४ | १२ |
| ८६ | विधानमाला | ४ | ४ |
| २७ | वृन्दमाधवः | ६ | १२ |
| ७७ | वेदान्तसूत्रमुक्तावलिः | २ | ६ |
| ४३ | वैयाकरणसिद्धान्तकारिकाः | ० | १२ |
| २३ | वैयासकन्यायमालाविस्तरः | १ | १२ |
| २२ | शंकरदिग्विजयः | ६ | ० |
| ६५ | शाङ्खायनब्राह्मणम् | १ | ४ |
| ९० | शाङ्खायनारण्यकम् | ० | ९ |
| | शिवभारतम् | १ | ५ |
| ५९ | श्राद्धमञ्जरी | २ | ० |
| १७ | श्वेताश्वतरोपनिषद् | २ | ४ |
| ९४ | संस्कारपद्धतिः। | २ | ८ |
| ८३ | संक्षेपशारीरकम् | ९ | १ |
| ३५ | संगीतरत्नाकरः | १० | ४ |
| ५३ | सत्याषाढश्रौतसूत्रम् | २४ | ५ |
| ५१ | सर्वदर्शनसंग्रहः | २ | ० |
| ४० | संध्याभाष्यसमुच्चयः | २ | ० |
| ३९ | संस्काररत्नमाला | १२ | ८ |
| | सिद्धान्तदर्शनम् | १ | ४ |
| २५ | सूतसंहिता | ११ | ८ |
| १८ | सौरपुराणम् | ३ | ० |
| ४८ | स्मृतीनां समुच्चयः | ५ | ० |
| ७० | स्मृत्यर्थसारः | १ | १० |
| २६ | हस्त्यायुर्वेदः | ७ | ६ |